SRI VENKATESVARA ORIENTAL SERIES No. 40

Editor :—PROF. P. V. RAMANUJASWAMI, M.A.

VAIKHANASĪYA

# KRIYADHIKARA

## (BHṚGU SAṀHITĀ)

EDITED BY

THE VAIKHANASA AGAMA PANDIT

*Sri Venkatesvara Oriental College, Tirupati*

PUBLISHED UNDER THE AUTHORITY OF

SRI C. ANNA RAO, B.A.

EXECUTIVE OFFICER

*on behalf of the Board of Trustees, T. T. Devasthanams, Tirupati*




PRINTED AT

TIRUMALA-TIRUPATI DEVASTHANAMS PRESS

TIRUPATI

1953

श्रीवेङ्कटेश्वरप्राच्यग्रन्थमाला सं. ४०.

प्रधानसम्पादकः – श्री प. वें. रामानुजस्वामी, एम्. ए.

श्रीमति वैखानसे भगवच्छास्त्रे

# क्रियाधिकारः

(भृगुसंहिता)

---

श्रीवेङ्कटेश्वरसंस्कृतमहापाठशालायां

श्रीवैखानसशास्त्राध्यापकेन

संशोधितः



तिरुपति

तिरुमल-तिरुपति देवस्थानमुद्रणालये

मुद्रितः

१९५३

Price: Rs. 9/-

# INTRODUCTION

---

The present work of *Kriyādhikāra* of Bhṛgu is the fourth of the Saṁhitas of the Vaikhānasa Āgama to be published by the Oriental Institute. With this the Institute would have published the four Saṁhitas of the four Vaikhānasa Ṛṣis–Marīci, Atri, Kāśyapa and Bhṛgu. Of these that by the last named appears to be the most comprehensive and so the most important. Although the general contents of all the Saṁhitas are on the whole identical, still there are minor details some of which will find a place in one while others in the others. A comprehensive conspectus of the contents of the four Saṁhitas so far published by the Institute will be included in the proposed Introduction to Vaikhānasa Literature in English. This introduction has been promised in my Introduction to the *Jñānakāṇḍa* of Kāśyapa which was published in 1948 but owing to preoccupations I have not been able to redeem my promise upto now. God willing, I hope to present it to the public in the near future.

I consider Bhṛgu as the most important of Vaikhānasa authors because while the others contented themselves with writing an elaborate account of the Kriyā portion of the Āgama, leaving the Caryā to be learnt from the *Vaikhānasa Kalpa Sūtra*, our author not only treated of the Kriyā portion but wrote an elaborate account of Caryā also in the so-called *Manusmṛti*. This fact is borne out by the many points of contact between this Smṛti and the Vaikhānasa literature. More

about this in my Introduction to the Vaikhānasa literature but I am referring to the point here to show the importance of the present Saṁhita.

Now that four of the important Saṁhitas have been published by the Institute, it will hereafter take up the publication of important commentaries and Manuals relating to the School.

I am indebted to Mr. R. Pārthasārathi Bhattāchar, the editor of this work, for the trouble he has taken in settling the text of the Saṁhita and in securing a number of manuscripts from his friends for the purpose. An account of the material used in preparing the edition is given by him in his Sanskrit Introduction.

TIRUPATI
25-2-53

P. V. RAMANUJASWAMI,
*Director.*

श्रियै नमः

श्री श्रीनिवासाय नमः

श्रीमते विखनसे नमः

# ग्रन्थपरिचयः



जयत्यात्मेश्वरोत्निद्रध्यानसौधप्रियातिथिः ।
श्रीमत्पत्रपुरीवासः श्रीरामः सीतया गृही ॥

श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥

अत्यन्तमिदं प्रमोदस्थानं यच्चिरराललाभिलषितं श्रीवैखानसभगवच्छास्त्रग्रन्थेष्वन्यतमस्य भगवद्भृगुमहर्षिभाषितस्य क्रियाधिकाराख्यस्य ग्रन्थस्य मुद्रितस्य प्रकाशनमद्य भवतीति। युक्तरूपमिदं यदाप्तभाषितमविसंवादेन समाद्रियते सर्वदा सर्वैः सर्वत्रेति। सिद्धयन्ति च लोके केचित् स्वयोगमहिमसाक्षात्कृतपरावरतत्त्वाः, केचन 'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः' इतिवत् परमपुरुषपरमानुग्रहप्रापितस्वावताराः, अन्ये च अनभिसंहितफलपरमपुरुषाराधनवेषस्ववर्णाश्रमोचितकर्माचरणाः, इतरे च सन्ततभगवत्सन्निधानस्थितिलाभसुभगम्भावुकाः अपरोक्षितभगवद्दिव्यमङ्गलविग्रहनिरन्तरानुभवपरीवाहमज्जनोन्मज्जनसौहित्यविवशाखिलेन्द्रियाः तत्स्वरूपरूपगुणविभवैश्वर्यलीलादींस्तद्बलभावितान्तरङ्गतया यथायथमध्यक्षयन्तश्चेति । सर्व एते सम्भावनीया एवास्माकम् । अस्य ग्रन्थस्य कर्ता चायं भृगुः परमर्षिः समूर्तवैदिकभगवदाराधनविधौ देवायतनगर्भगेहाभ्यन्तरे दक्षिणभित्तिपार्श्वे पूजकमुनित्वेन स्थितिलाभमनन्यसुलभमाप्नुवानः स्वकीयैः सूक्तिविशेषैः भगवदर्चावतारमहिमानं तदुपासनाप्रकारञ्च ग्रन्थेऽस्मिन् व्याचख्याविस्याप्तभाषितत्वमत्र निर्व्यूढम् ।

स्वयञ्च प्रशंसति भगवान् भृगुमेनं गीतासु 'महर्षीणां भृगुरह' मिति । भृगुश्च स्वसतीर्थ्यैः मरीच्यत्रिकाश्यपैः सहितः भगवतो नारायणस्य समूर्ताराधन-

व्याख्यानरूपं श्रीवैखानसभगवच्छास्त्रं सार्धकोटिप्रमाणं भगवतो विखनसः सकाशादधिजगे । यथोक्तं गारुडे :—

'पुरा चतुर्मुखादेशाच्चत्वारो मुनयोऽमलाः ।
प्रणीय वैष्णवं शास्त्रं भूमावभ्यर्चयन्नृप ॥

मरीचिर्मन्दरे विष्णुमर्चयामास केशवम् ।
आदेशाद्ब्रह्मणो विष्णुं श्रीनिवासेऽत्रिरर्चयत् ॥

काश्यपो विष्ण्वधिष्ठाने शुभक्षेत्रे भृगुर्मुनिः' । इति ।

आत्रेये च :—

अथ मत्स्याकृतिः श्रीशः प्रविश्याम्बुधिमध्यमम् ।
निर्मथ्य सोमकं वेदानदात्पङ्कजयोनये ॥

तादृशं पुण्डरीकाक्षं स्तोत्रैः सन्तोष्य पद्मभूः ।
उवाच वचनं प्रेम्णा दण्डवत्प्रणिपत्य च ॥

'तान्त्रिकेण त्वया प्रोक्तं मार्गेण भवदर्चनम् ।
न प्रसीदति तेनास्मन्मनः कमललोचन ॥

वैदिकेन त्वदर्चां मे यथापूर्वं वदाच्युत' ।
इत्युक्तो भगवान् देवः शास्त्रं श्रुतिपथाऽऽगतम् ॥

सहस्रकोटिभिः श्लोकैः सङ्ख्यातं बहुविस्तरम् ।
सूत्रमूलमनाद्यन्तं कल्पे कल्पे समाश्रितम् ॥

उवाच जगतां प्रीत्यै यज्ञानां पूरणाय च ।
मूलं सर्वागमानाञ्च पुराणानां तथैव च ॥

स्मृतीनां सर्वसूत्राणां प्रत्यङ्गोपाङ्गशोभिनाम् ।
वेदाश्च विखनःशास्त्रं प्रमाणमिति चेरयन् ॥ इत्यारभ्य

इत्युक्त्वा भगवानाद्यस्तत्रैवान्तरधीयत ।
ततः परं चतुर्वक्त्रो जटाकाषायदण्डभृत् ॥

नैमिशारण्यमासाद्य मुनिबृन्दनिषेवितम् ।
तपस्तप्त्वा चिरं कालं ध्यायंस्तेजस्तु वैष्णवम् ॥

पश्चादपश्यद्विष्णूक्तमागमं विस्तरात्तदा ।
सश्रौतञ्च ससूत्रञ्च वेदमन्त्रैरभिष्टुतम् ॥

सङ्क्षिप्य सारमादाय शाणोल्लिखितरत्नवत् ।
धाता विखनसो नाम मरीच्यादिसुतान्मुनीन् ।
अबोधयदिदं शास्त्रं सार्धकोटिप्रमाणतः ' ॥ इत्यन्तम् ।

उक्तैः संवादैः प्रजापतिश्चतुर्मुख एव श्रीवैखानसशास्त्रप्रणयनार्थं दिव्ये नैमिशक्षेत्रे मुनिवेषेणावतीर्य दीर्घं कालं तपस्तप्त्वा भगवदुपदिष्टं शास्त्रमेतदधिगम्य भृग्वादीनध्यापयामासेति, तथा तच्छास्त्रेऽधिकुर्वाणानामुपकाराय कल्पसूत्रञ्च रचयामासेति च ज्ञायते । विखनसोपदिष्टं विस्तृतं शास्त्रं भृग्वाद्यैः चतुर्भिः महर्षिभिः चतुर्लक्षेषु ग्रन्थेषु सङ्क्षिप्य संहिताः प्रणीताः । तेषां ग्रन्थानामनुवर्णनं भगवता मरीचिना आनन्दसंहितायां कृतं इत्थं परिदृश्यते । यथा :—

' स्वायंभुवमनोः काले युगादौ शुक्लवत्सरे ।
श्रावणे श्रवणे शुक्लपूर्णिमासोमवासरे ॥

सिंहलग्नेन संयुक्ते विखनाः प्राप नैमिशम् ।
नैमिशेऽनिमिषक्षेत्रे स्वशिष्यैः सहितो मुनिः ॥

वैखानसः स हर्षेण सूत्रं कर्तुं प्रचक्रमे ।
वैखानसेन मुनिना द्वात्रिंशत्प्रश्नसङ्ख्यया ॥

निषेकादिश्मशानान्तं मानुषं कर्म सूचितम् ।
सूत्रं विखनसा प्रोक्तं सार्धकोटिप्रमाणकम् ॥

कर्षणाद्युत्सवान्तञ्च दैविकं तेन सूचितम् ।
काश्यपेनात्रिणा चैव मया च भृगुणा तथा ॥

चतुर्लक्षप्रमाणेन सङ्क्षिप्य प्रोच्यतेऽधुना ।
जयानन्दञ्च विज्ञानं वीरञ्च विजयं तथा ॥

विजितं विमलं कल्पं मरीचिः संहिताष्टकम ।
चतुरशीतिसाहस्रं लक्षोपरिकृतं तथा ॥
खिलं खिलाधिकारञ्च पुराधिकरणं तथा ।
वासाधिकरणञ्चैव क्रियाधिकरणाह्वयम् ॥
निरुक्तञ्च प्रकीर्णञ्च यज्ञाधिकरणं तथा ।
भृगुणा च चतुःषष्टिसहस्रं समुदीरितम् ॥
पूर्वतन्त्राह्वयञ्चैव विष्णुतन्त्रमतः परम् ।
उत्तराख्यं महातन्त्रं प्रोक्तं तन्त्रचतुष्टयम् ॥
अष्टाशीतिसहस्रन्तु ग्रन्थानामत्रिणा तथा ।
सत्यकाण्डं कर्मकाण्डं ज्ञानकाण्डाह्वयं तथा ॥
चतुष्षष्टिसहस्रन्तु ग्रन्थान् प्रोवाच काश्यपः ।
अष्टाविंशतिसाहस्रं काश्यपेनाधिकं कृतम् ॥
एषां चतुर्विधानान्तु मूलं तत्सूत्रमुच्यते ' । इति ।

किञ्च । 'अथातो मरीचिं महामुनयः समागम्य चरितक्रियाज्ञानयोगेषु चतुर्षु पूजामार्गेषु चरितं भगवता विखनसा सूत्रे विस्तरेण प्रणीतमन्यत्सङ्क्षेपेणोक्तं तदुपन्यासो बहुप्रयोगक्रमेण क्रियामार्गस्त्वया प्रणीतः भगवत्तत्त्वज्ञानयोगञ्च श्रोतुमिच्छाम इत्ययाचन्त तान् समीक्ष्य श्रूयतामिति मरीचिरुवाच, तत्त्वज्ञानोपदेशविधिं वक्ष्ये ' (विमानार्चनकल्पे ८० पटले) इत्यादिभिः मरीचिसंहितावचनैः विखनसोपदिष्टं सार्धकोटिपरिमितं शास्त्रं न ग्रन्थरूपेण सङ्ग्रथितमथवा संरक्षितमिति, साम्प्रतमुपलभ्यमानं द्वात्रिंशत्प्रश्नात्मकं श्रीवैखानसकल्पसूत्रमेव तत्र सूत्रशब्देन परामृष्टमिति च ज्ञायते । एतत्कल्पसूत्रानुसारेण प्रयोगनिर्वाहाय भगवता सूत्रकारेणैव वैखानसमन्त्रसंहिता काचन अष्टसु प्रश्नेषु शारीरकदैविकभागभिन्ना सङ्कलिता वर्तते । आद्या च प्रश्नचतुष्टयात्मिका स्मार्तसंस्कारप्रयोगनिर्वाहिका विखनसोक्तस्मार्तसूत्रमनुरुन्धे । द्वितीया प्रश्नचतुष्टयात्मिका स्वतन्त्रा भगवच्छास्त्रप्रयोगनिर्वाहायोपकुरुते । सेयमुक्तासूपलब्धासु संहितासु न यत्किञ्चित्संहितापाठक्रममनुसृत्य

प्रवृत्ता दृश्यते । एतन्मन्त्रसंहितोक्तमन्त्राणां भगवच्छास्त्रोपात्तसदृशमन्त्रप्रतीकानाञ्च क्वचित्क्वचिदानुपूर्व्यामपि वैरूप्यं दृश्यते । उक्तमन्त्रभागद्वये शारीरकप्रश्नानामुपजीव्यत्वेन तेषां पाठक्रमे प्राथम्यमवसीयते ।

सजातीयसंहितान्तरेष्विव प्रतिनियतविषयकत्वेन चतुर्भिः पादैः व्याख्याताः चरितक्रियाज्ञानयोगाश्चत्वारो विषयाः वैखानससंहितासु न विविच्य तत्प्रक्रियया प्रतिपाद्यन्ते । अपि तु क्रियाभागमात्रमुपदिश्यते । तस्यैव प्राधान्येनोपदेश्यत्वात् चरितस्य विशेषेण ज्ञानयोगयोः सङ्क्षेपेण च सूत्रे उपदिष्टत्वाच्च । अत एवास्य शास्त्रस्य प्रतिनियताधिकारिकत्वं पाञ्चरात्रादिशास्त्राद्वैलक्षण्यञ्चोपपद्यते । उक्तञ्चाभियुक्तैः—

' त्वां पाञ्चरात्रिकनयेन पृथग्विधेन
वैखानसेन च पथा नियताधिकाराः ।
संज्ञाविशेषनियमेन समर्चयन्तः
प्रीत्या नयन्ति फलवन्ति दिनानि धन्याः ' ॥ इति ।

तथा —

' वर्णाश्रमादिनियतक्रमसूत्रबद्धा
भक्त्या यथार्हविनिवेशितपत्रपुष्पा ।
मालेव कालविहिता हृदयङ्गमा त्वा-
मामोदयत्यनुपरागधियां सपर्या ' ॥ इति च ॥

( शरणागतिदीपिका )

भगवदाराधनञ्च मानसहोमबेरपूजाभेदेन सामान्यतः त्रिविधं, विशिष्य बेरपूजा च आलयार्चागृहार्चाभेदेन द्विविधा च भवति । तत्राप्यालयपूजाया वैदिकतान्त्रिकभेदेन द्वैविध्यं सम्प्रतिपन्नम् ।

संहिताकृद्भिः भगवन्मरीच्यादिभिः स्वशास्त्रमूलत्वेनोदाहृतं विखनसः सूत्रञ्च " अथाग्नौ नित्यहोमान्ते विष्णोर्नित्यार्चा सर्वदेवार्चा भवति । 'अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः ' इति ब्राह्मणम् । तस्माद्गृहे परमं विष्णुं प्रतिष्ठाप्य सायं प्रातर्होमान्तेऽर्चयति " इत्यारभ्य " गृहे देवायतने वा भक्त्या भग-

वन्तं नारायणमर्चयेत्तद्विष्णोः परमं पदं गच्छतीति विज्ञायते " इत्येवंरूपम् । तत्र सूत्रे गृहार्चनबिम्बनिर्माणतत्प्रतिष्ठातदर्चनविस्तर उपदिष्टः । संहितासु चामूषु देवायतनार्हविग्रहनिर्माणादिकमालयनिर्माणादिकं प्रतिष्ठानित्यार्चनस्नापनोत्सवादिकमुक्त-विध्यतिक्रमे प्रायश्चित्तप्रकाराः अन्ये बहवः ससम्बन्धिका विशेषाश्च उपदिश्यन्ते । उक्तविखनःसूत्रस्य च मूलं 'प्रवः पान्तमन्धसो धियायते । महे शूराय विष्णवे चार्चत' इत्येषा ऋक्श्रुतिः (मं १-१५५-१) । तस्याश्च भगवच्छास्त्रसामान्यं प्रयोगविधिरिति चावसेयम् । अत एवास्य भगवच्छास्त्रत्वव्यवहारः । उक्ता इमा भगवच्छास्त्रसंहिता आलयेषु भगवत्समूर्तयजनप्रकारं साङ्गोपाङ्गमुपवर्णयन्ति । समूर्तयजनमिदमेव क्रियाशब्देन तत्पर्यायकर्मादिशब्दैः वेदे भाषायाञ्च अभिधीयमानमुपलभ्यते ।

यथा श्रीभागवते :—'क्रियायोगं समाचक्ष्व भवदाराधनं विभो' इति उद्धवेन पृष्टो भगवान् स्वाराधनप्रकारमेकेनाध्यायेन व्यक्तमुपदिशति । (११ स्कन्धे २७ अध्याये) ।

श्रीभारते च 'मत्कर्मकृन्मत्परमः', 'मदर्थमपि कर्माणि कुर्वन्' इत्यादौ क्रियाशब्दस्य पूर्वोक्तार्थपरत्वं स्पष्टम् ।

यथा च शब्दकल्पद्रुमे अग्निपुराणे :— क्रियायोगः—(क्रियैव योगः — योगः उपायः) देवाराधनतदालयादिकरणरूपक्रियाः ।

नारद उवाचः—क्रियायोगः कथं प्रोक्तस्त्वया मे प्रपितामह ।
तदहं श्रोतुमिच्छामि फलं चास्य यथातथम् ॥

ब्रह्मोवाच— ज्ञानयोगस्तु योगस्य यस्तु साधनमात्मना ।
यस्तु बाह्यार्थसंयोगः क्रियायोगस्स उच्यते ॥

प्रधानं कारणं योगो मुक्तेर्मुनिवरोत्तम ।
क्रियायोगस्तु योगस्य परमं तात साधनम् ॥

यदेतद्भवता पृष्टं तदिहैकमनाः शृणु ।
यैस्तु देवालयं विष्णोः शुभं दारुमयं कृतम् ॥

कारयेन्मृण्मयं वाऽपि शृणु तस्य फलं मुने ।
अहन्यहनि योगेन यजतो यन्महाफलम् ॥

प्राप्नोति तत्फलं विष्णोर्यः कारयति मन्दिरम् ।
कुलानां शतमागामि समतीतं तथा शतम् ॥

कारयेद्भगवद्धाम नयत्यच्युतमन्दिरम् ।
सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु ॥

विष्णोरालयविन्यासप्रारम्भादेव नश्यति ।
पतितं पतमानन्तु यथाऽर्धपतितं तथा ॥

समुद्धृत्य हरेर्धाम द्विगुणं फलमाप्नुयात् ।
'प्रतिमां लक्षणवतीं यः कुर्याच्चैव मानवः ॥

केशवस्य परं लोकमक्षयं प्रतिपद्यते ।
अनुज्ञातो महाराज्ये यमो राजाऽथ किङ्कराः ॥

केवलं ये जगद्धाममनन्तं समुपाश्रिताः ।
भवद्भिः परिहार्यास्ते तेषां नास्तीह संस्थितिः ॥

नमः कृष्णाच्युतानन्त वासुदेवेत्युदीरितम ।
यैर्भावभाविता दूतास्ते च त्याज्याः सुदूरतः ॥

दानं ददद्भिर्यैरुक्तमच्युतः प्रीयतामिति ।
श्रद्धापुरस्सरैर्नित्यं ते च त्याज्याः सुदूरतः' ॥ इति ।

संहितास्वासु च आलयनिर्माणार्थभूपरीक्षामारभ्य कृत्स्नकार्यजाते प्रतिप्रयोगं बहूनां देवानां नामधेयानि केषाञ्चिद्देवानामेकैकस्य नामचतुष्टयञ्च विनियोगे दृश्यते । तादृशानां बहूनां अन्यत्र कस्मिंश्चिदपि शास्त्रे पाठो नोपलभ्यत इति नाम्नामेतेषां संवादान्तरसम्पादने विमर्शकैः यत्नः आधेयः ।

इत्थं क्रियाशब्दस्य भगवत्समूर्तयजनपर्यायत्वमाश्रित्य क्रियावतो ब्रह्मविद्वरिष्ठत्वं प्रतिजानीते श्रुतिः' 'आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठ'

इति ( मुण्डकोपनिषदि ) । उक्तञ्चात्रैवोत्तरत्र 'नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाऽप्यलिङ्गात् इति । अत्र 'अलिङ्गा' दिति प्रतिमारहितादित्यर्थः स्वरसः पूर्वाचार्यैरुपपादितः । पूर्वोक्तभगवच्छास्त्रोपदेशपरम्परैवालोपनिषदारम्भे प्रथममन्त्रे परिदृश्यते च । यथा—

'ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्रा' हेति । अत्रोक्तो ब्रह्मा विखना इति, अथर्वा भृगुरिति च तत्सत्यसङ्गतिः ।

तथा तदाराधनस्य परमपदप्रापकत्वस्मरणात् क्रियावतो ब्रह्मविद्वरिष्ठत्व-श्रवणाच्च भगवदाराधनस्योत्तमब्रह्मविद्यात्वं भगवच्छ्रीनिवासमखिवेदान्तदेशिकेनो-त्तमब्रह्मविद्याग्रन्थे निपुणतरमुपपादितं ततोऽवसेयम् ।

वैखानसशास्त्रस्य वैदिकत्वकथनञ्च श्रौतविष्णुशब्दोपादानेन विष्ण्वाराधनस्य प्रतिपादनात् सङ्गच्छते । श्रुतिश्च 'प्रवः पान्त' मिति पूर्वमेव दर्शिता ।

विष्णुशब्दोक्तप्रक्रिया यथा क्रियाधिकारे नवमाध्याये नित्यार्चनाप्रकरणे :—

'सुवर्णवर्णं रक्तास्यं रक्तनेत्रं सुखोद्वहम् ।
शुकपिञ्छाम्बरधरं विष्णुं प्रणवरूपिणम् ॥ १२९ ॥

किरीटहारकेयूरप्रलम्बब्रह्मसूत्रिणम् ।
श्रीवत्साङ्कं चतुर्बाहुं शङ्खचक्रधरं परम् ॥ १३० ॥

एवं ध्यात्वा समावाह्य पश्चात्कौतुकमूर्धनि ।
कूर्चेनादाय तत्तोय 'मिदं विष्णु'रिति ब्रुवन् ॥ १३१ ॥

आयातु भगवांश्चेति संस्राव्यावाहनं चरेत् ।
विष्णुमावहयेन्मध्ये पुरुषादींश्चतुर्दिशम्' ॥ १३२ ॥

इति प्रातिस्विकत्वेन विष्णुशब्देनैव तत्र व्यवहारः स्पष्टः ।

उक्तञ्च महाभारते :—

'कथं त्वमर्चनीयोऽसि मूर्तयः कीदृशाश्च ते ।
वैखानसाः कथं ब्रूयुः कथं वा पाञ्चरात्रिकाः' ॥

'शृणु पाण्डव ! तत्सर्वमर्चनाक्रममात्मनः ।
स्थण्डिले पद्मकं कृत्वा साष्टपत्रं सकर्णिकम् ॥

अष्टाक्षरविधानेन अथवा द्वादशाक्षरैः ।
वैदिकैरथ वा मन्त्रैः मम सूक्तेन वा पुनः ॥

स्थापितं मां ततस्तस्मिन्नर्चयीत विचक्षणः ।
विष्णुञ्च पुरुषं सत्यमच्युतञ्च युधिष्ठिर ! ॥

अनिरुद्धञ्च मां प्राहुर्वैखानसविदो जनाः ।
अन्ये त्वेवं विजानन्ति मां राजन् ! पाञ्चरात्रिकाः ॥

वासुदेवञ्च राजेन्द्र सङ्कर्षणमथापि वा ।
प्रद्युम्नञ्चानिरुद्धञ्च चतुर्मूर्तिं प्रचक्षते' ॥

(आश्वमेधिके - अनुगीतापर्वणि १०९ अध्याये)

इति । युधिष्ठिरेण पृष्टो भगवान् पूर्वोक्तक्रियाधिकारप्रतिपादितां क्रियामेवात्र परामृशति ।

यथा वा उक्तार्थसङ्ग्रहः श्रीविष्णुपुराणे :—

'यज्वभिर्यज्ञपुरुषो वासुदेवश्च सात्त्वतैः ।
वेदान्तवेदिभिर्विष्णुः प्रोच्यते यो नतोऽस्मि तम्' ॥ इति ।

अत्र 'प्र वः पान्त' श्रुत्युपात्तविष्णुशब्देन भगवन्तं विष्णुं समाराधयन्तो पूर्वोक्तमुण्डकश्रुत्युदितक्रियावच्छब्दप्रतिपन्ना वैखानसा एव 'वेदान्तवेदि' शब्दाभिहिता भवन्ति ।

किञ्चास्मिन् शास्त्रे आगमतन्त्रादिशब्दव्यवहारः तथा आगमतन्त्रादिशब्दव्यवहारे प्रवृत्तिनिमित्तत्वेन शास्त्रान्तरेषूक्तप्रक्रिया वा कुत्रापि नोपलभ्यते । सा च प्रक्रिया षट्कर्माणि अष्टसिद्धयः खड्गादिसाधनानि यन्त्राः इत्येवमादिरूपा पाञ्चरात्रे शैवे च शास्त्रे, विशिष्य श्रुतिबाह्ये बौद्धजैनादिसम्प्रदाये च प्रसिद्धा साङ्केतिकी । अस्मिन्नपि शास्त्रे क्वचित् आगमव्यवहारः 'वैखानसाद्यागमोक्तदीक्षां प्राप्तो हि वैष्णवः' इत्यादौ वैद्यनाथाद्यैरुक्तः शक्यार्थमात्रविषयः ।

तन्त्रशब्दार्थो यथा शब्दकल्पद्रुमे :—

'सर्गश्च प्रतिसर्गश्च मन्त्रनिर्णय एव च ।
देवतानाञ्च संस्थानं तीर्थानाञ्चैव वर्णनम् ॥

तथैवाश्रमधर्मश्च विप्रसंस्थानमेव च ।
संस्थानञ्चैव भूतानां यन्त्राणाञ्चैव निर्णयः ॥

उत्पत्तिर्विविधानाञ्च तरूणां कल्पसंज्ञितम् ।
संस्थानं ज्योतिषाञ्चैव पुराणाख्यानमेव च ॥

कोशस्य कथनञ्चैव व्रतानां परिभाषणम् ।
शौचाशौचस्य चाख्यानं नरकाणाञ्च वर्णनम् ॥

हरचक्रस्य चाख्यानं स्त्रीपुंसोश्चैव लक्षणम् ।
राजधर्मो दानधर्मो युगधर्मस्तथैव च ॥

व्यवहारः कथ्यते च तथा चाध्यात्मवर्णनम् ।
इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते ' ॥ इति ।

आगमशब्दार्थोऽपि यथा तत्रैव :—

'सृष्टिश्च प्रलयश्चैव देवतानां यथार्चनम् ।
साधनञ्चैव सर्वेषां पुरश्चरणमेव च ॥

षट्कर्मसाधनञ्चैव ध्यानयोगश्चतुर्विधः ।
सप्तभिर्लक्षणैर्युक्तमागमं तद्विदुर्बुधाः ' ॥ इति ।

भगवच्छास्त्रसंहितानां स्मृतित्वेन विद्यास्थानेषु चतुर्दशसु निवेशमाह न्यायपरिशुद्धौ भवान् श्रीवेङ्कटनाथवेदान्ताचार्यः ।

भृगुः संहिता एताः प्रणीय श्रीवैखानसकल्पसूत्रव्याख्यानरूपां मनुस्मृतिरिति सुप्रसिद्धां मानवीं संहिताञ्च निर्ममे । अत्रोपक्रमादिषु नारायणपरत्वोपदेशादिकं साम्यं सूक्ष्मेक्षिकया परीक्षमाणानामध्यक्षीभवत्युभयत्र । अतः अपेक्षितसकलप्रक्रिया अन्ये सूत्रशास्त्रयोरननुसंहिताश्च विषयास्तत्र मानवस्मृतौ व्याख्याता वेदितव्याः ।

'अरायि काणे विकटे गिरिं गच्छ सदान्वे शिरिं बिठस्य सत्त्वभिः। तेभिष्ट्वा चातयामसि' ( ऋग्वेदे १० - १५५ - १ ) इति श्रुतिसिद्धे श्रीमति वेङ्कटाद्रौ 'आदेशाद्ब्रह्मणो विष्णुं श्रीनिवासेऽत्रिरर्चय' दित्युक्तरीत्या श्रीवैखानस-भगवच्छास्त्रप्रवर्तकेष्वन्यतमेन भगवता महर्षिणा अत्रिणा समाराधितः 'वैखानस-मुनिश्रेष्ठपूजिताय नमो नम' इति पुराणगणफणितवैखानसविधिविहितपूजातोषितः 'अर्चावतारः सर्वेषां बान्धवो भक्तवत्सलः' इत्येवं त्रिलोकीरक्षणाय जगन्मो-हनदिव्यमङ्गलविग्रहेणाध्यक्ष्यमाणः अद्याप्यनेनैव परमवैदिकश्रीवैखानसशास्त्रविधिना परमैकान्तिभिः श्रीवैखानससूत्रसंस्कृतैः श्रीवैखानसैराराध्यमानः सदैकरूपरूपो विजयतेतमाम् ।

अस्मिन् ग्रन्थे एकोनचत्वारिंशता अध्यायैः ग्रन्थशरीरं त्रिभिरनुबन्धैस्तदनु-बन्धिविशेषाश्च प्रकाश्यन्ते । अयमत्राध्यायक्रमेण ग्रन्थसङ्ग्रहो भवति ।

**प्रथमाध्यायः**

प्रश्नोत्तररूपेण संहितारम्भः। प्रष्टारो महर्षयः प्रतिवक्ता च भगवान् भृगुः। मानसपूजा होमपूजा बेरपूजेति भगवदाराधनस्य त्रैविध्यं, तत्र बेरपूजायाः इतराति-शायित्वं, पुनः तदाराधनस्य गृहार्चा आलयार्चा चेति द्वैविध्यं, आलयार्चायाश्च पुनः वैदिकतान्त्रिकभेदेन द्वैविध्यं, वैदिकार्चनस्य श्रैष्ठ्यं, आलयनिर्मातृ कर्तव्यस्वरिक्थ-विभागः, आचार्यवरणमाचार्यलक्षणमङ्कुरारोपणप्रकारश्चोक्तः ।

२ पुटे. 'चक्षुषः प्रीतिकरणान्मनसो हृदयस्य च ।
प्रीत्या सञ्जायते भक्तिर्भक्तस्य सुलभो हरिः' ॥ १३ ॥

इत्युपपादनमर्चावतारवैशिष्ट्यकथनेऽतीव हृदयङ्गमम् ।

तथा 'एषा तु मानसी पूजा बेरपूजा विशिष्यते' इत्यादौ प्रयुज्यमानो बेर-शब्दः कोशकाराणां नातिपरिचितः। तथा देवोपचारेषु परिभावितो विग्रहशब्दश्च ज्ञेयः।

६ पुटे. 'ईशानादिषु कोणेषु पालिकाः स्थापयेद्बुधः ।
द्वारदक्षिणपार्श्वेषु छिद्रकुम्भांश्च विन्यसेत् ॥

द्वाराणां वामपार्श्वेषु शरावानथ विन्यसेत् '।

इत्यङ्कुरार्पणप्रकरणोक्तः छिद्रकुम्भशब्दो वैखानसशास्त्रमात्रपरिचित उपलभ्यते। भगवता वाल्मीकिना वैखानसशास्त्राध्यायिना च प्रयुज्यतेऽयं शब्दः श्रीमति रामायणे सीताकल्याणघट्टे। यथा :—

'प्रपामध्ये तु विधिवद्वेदिं कृत्वा महातपाः।
अलञ्चकार तां वेदिं गन्धपुष्पैः समन्ततः ॥ २६ ॥

सुवर्णपालिकाभिश्च छिद्रकुम्भैश्च साङ्कुरैः।
अङ्कुराढ्यैः शरावैश्च धूपपात्रैः सधूपकैः ॥ २७ ॥

शङ्खपात्रैः स्रुवैः स्रुग्भिः पात्रैरर्घ्याभिपूरितैः।
लाजपूर्णैश्च पात्रीभिरक्षतैरभिसंस्कृतैः ॥ २८ ॥

दर्भैः समैः समास्तीर्य विधिवन्मन्त्रपूर्वकम्।
अग्निमाधाय वेद्यान्तु विधिमन्त्रपुरस्कृतम् ॥ २९ ॥

जुहावाग्नौ महातेजा वसिष्ठो भगवानृषिः '। इति।

पाणिग्रहणात्पूर्वं आचार्येणाग्निमुखकरणञ्च 'गुरुणाऽग्निमुखे कृते' इति वैखानससूत्रे पाणिग्रहणप्रकरणे स्पष्टम्। अयमन्यो विशेषः।

**द्वितीयाध्यायः**

आलयनिर्माणोचितभूमिपरीक्षणं, कर्षण बीजावपनसस्यसम्पादनगोगणनिवेदनानि, सद्यःकर्षणप्रयोगः, वास्तुपदकल्पनं, वास्तुपददेवतापूजनमित्यंशा उक्ताः।

९ पुटे. 'वर्णजां कन्यकामेकामलङ्कृत्य यथोचितम्।
पायसं प्राशयित्वा तां श्वेतवस्त्रानुलेपनाम् ॥ ३ ॥

पञ्चदीपकरामग्रे गमयेत्सर्वमङ्गलैः '। इति।

अत्रोक्तं कन्यकानां मङ्गलकार्येषु पुरस्कार्यत्वं महाभरते अनूद्यते, यथा :—

"नित्यं निवसते लक्ष्मीः कन्यकासु प्रतिष्ठिता।
शोभना शुभभोग्या च पूज्या मङ्गलकर्मसु ॥

आकरस्थं यथा रत्नं सर्वकामफलोपगम् ।
तथा कन्या महालक्ष्मीः सर्वलोकस्य मङ्गलम् ॥
एवं कुर्यान्महालक्ष्मीः रतिस्तोषश्च देहिनाम् ” । इति ।
( आनुशासनिके ५५ अध्याये )

अत्रोक्तः कर्षणप्रकारश्च श्रौतीं प्रक्रियामनुसरति । संवादः श्रौतसूत्रे द्रष्टव्यः ।

**तृतीयाऽध्यायः**

आलयनिर्माणाङ्गत्वेन बालालयकल्पनं, तत्प्रतिष्ठाप्रकारः, मूलालयस्थापने एकबेरादिकल्पनविकल्पाः, मूलालये मण्डपप्राकारादिनिर्माणप्रकारश्चोक्तः ।

**चतुर्थाध्यायः**

शान्तिकादिपञ्चविधविमानलक्षणमेकद्वित्रितलादिविमानलक्षणं मण्डपप्राकारादीनां लक्षणमायादिलक्षणं तटाकादिनिर्माणविधिश्चोक्तः ।

विमानेषु एकतलविमानानि प्रसिद्धानि । त्रितलविमानानां उत्तरमेरूर् , मधुरा ( दाक्षिणात्या ), तिरुक्कोट्टियूर् ( गोष्ठीपुरम् ), क्षेत्राणि लक्ष्याणि स्युः । द्वादशतलविमानस्यैकं लक्ष्यं - तञ्जावूर् बृहदीश्वरायतनमेकमेव ।

**पञ्चमाध्यायः**

आद्येष्टकास्थापनविधिः फेलास्थापनप्रकारः मूर्धेष्टकान्यासः विमानपालादिकल्पनं तत्प्रतिष्ठाप्रकारः ध्रुवबेरनिर्माणार्थं शूलस्थापनविधिः ध्रुवबेरचातुर्विध्यं ध्रुवबेरवशात्परिवारकल्पनं द्वारपालादीनां मुखनियमः अनपायिनां परिगणना परिषत्परिवाराणां ध्यानानीति विषया उक्ताः ।

३७ पुटे. ‘ कारयेद्ध्रुवबेरन्तु योगभोगादिभेदतः ।
आसनं शयनञ्चैव स्थानकञ्चेति तत्त्रिधा ॥ ७४ ॥
चतुर्विधं तदेकैकं योगं भोगं तथैव च ।
वीरञ्च विजयञ्चैव पूर्वमेव मयोदितम् ॥ ७५ ॥

चक्रशङ्खधरं देवं योगं भोगं प्रकल्पयेत् ।
गदां वामेऽवरे पाणौ कल्पयेद्विजयाय वै ॥ ७६ ॥

निरायुधं तथा देवं विरहं परिकल्पयेत् ' । इति ।

तथा आत्रेये, ध्यानमुक्तावल्याञ्चैतत्प्रकरणे ध्रुवबेरलक्षणं दृश्यते ।

अत्र सुदर्शनपाञ्चजन्याभ्यां दिव्यायुधाभ्यां विरहितस्य तिरुपति दिव्यदेशे स्वयमाविर्भूतस्य परमपुरुषस्य वेदान्तवेद्यदिव्यमङ्गलविग्रहस्य श्रीनिवासपरब्रह्मणः अप्राकृतस्वरूपं स्थानकविरहलक्ष्यं ज्ञेयम् । पुराणोदित ' तोण्डमान् ' चक्रवर्तिकथा तदनुबन्धिसमनन्तरकथाश्च उक्तशास्त्राविरोधेनैव समर्थनीयाः ।

**षष्ठाध्यायः**

ध्रुवबेरस्थाननिर्णयः पुनरायादिलक्षणं ध्रुवबेरवशात्कौतुकादिनिर्माणं पौराणिकप्रदेशे यथापूर्वकरणविधिः देव्योः स्थाननिर्णयः प्रतिष्ठामुहूर्तविचारः अग्निमन्थनं प्रतिष्ठाक्रमश्चोक्तः ।

६३ पुटे. ' देवे स्थिते स्थिते देव्यावासीने स्थानकासने ' ॥ २४ ॥

इत्यत्रोक्तादन्यादृशोऽवसरः श्रीमति श्रीरङ्गे दिव्यक्षेत्रे उत्सवबिम्बे दृश्यते ।

६५ पुटे. ' ब्रह्मयज्ञञ्च कुर्वन्तः सूत्रैर्द्वादशभिस्तथा ।
जपेदृतञ्च सत्यञ्च तथा देवकृतस्य च ॥ ५० ॥

यन्मे गर्भादिसूक्तञ्च तरत्सममतः परम् ।
वसोः पवित्रमित्यादि जातवेदस इत्यपि ॥ ५१ ॥

विष्णोर्नुकादिसूक्तञ्च सूक्तं पौरुषमेव च ।
एकाक्षरादिसूक्तञ्च ध्रुवसूक्तमतः परम् ॥ ५२ ॥

त्वमग्ने रुद्र इत्यादिरुद्रसूक्तमतः परम् ।
पवस्वादि तथा सूक्तमेतद्द्वादशसूक्तकम् ' ॥ ५३ ॥

इति द्वादशसूक्तानां पठने प्राचुर्येण शास्त्रेऽस्मिन् विनियोगोऽस्ति । एतेषां द्वादशानां सूक्तानां महिमानं प्रशंसन्त्यन्ये च महर्षयः ।

"यथा वसिष्ठः—'सर्वदेवपवित्राणि वक्ष्याम्यहमतः परम् ।
येषां जपैश्च होमैश्च पूयते नात्र संशयः ॥
अघमर्षणं देवकृतं शुद्धवत्यस्तरत्समाः ।
कूष्माण्ड्यः पावमान्यश्च दुर्गासावित्र्यथैव च ॥
शतरुद्रियाथर्वशिराः त्रिसुपर्णं महाव्रतम् '। * *
एतानि गीतानि पुनन्ति जन्तून् जातिस्मरत्वं लभते
यदीच्छेत्'। इति । (याज्ञवल्क्यमिताक्षरा - प्राय. ३०८ श्लोकव्याख्याने)

वैखानसमन्त्रसंहितायां गोसावित्रीपाठः —

६८ पुटे. 'शुद्धा इमे पशवो येषां शृङ्गाविन्द्राविष्णू ब्रह्मा शिरः ।
पृष्ठो रुद्र ऋषयो रोमाण्युरो गुहस्तीर्था लाङ्गूलम् ।
कुक्षिर्मेदिनी चक्षुषी चन्द्रादित्यौ वाला विद्याधराः ।
ऊधः सागराः स्तना नद्यो गात्रं भूधराः ।
अस्थीनि पर्वता रुधिरं मित्रावरुणौ मांसमग्निर्जाह्नवी मूत्रम् ।
खुर उरगा ज्येष्ठा नासिका दन्ता मरुतः ।
जिह्वा सरस्वती कर्णः कवीन्द्रः शकृत्पुण्यदेशम् ।
एताः सवत्सा गावः सवृषाः । यथासुखं चरन्तु कामं चरन्ताम् ।
यथासुखं व्रजन्तु कामं व्रजन्ताम् । यथासुखं मुदन्तु कामं मुदन्ताम्'।
इति । (५ प्रश्ने १९ अनुवाके)

सन्निहितः संवादो यथा महाभारते आनुशासनिके :—

'तस्यास्तद्वचनं श्रुत्वा सुरभ्याः सुरसत्तमः ।
सह सर्वैः सुरगणैरभजत्सौरभीं प्रजाम् ॥
शृङ्गे वक्त्रे च जिह्वायां देवराजः समाविशत् ।
सर्वच्छिद्रेषु पवनः पादेषु मरुतां गणाः ॥

ककुदं सर्वगो रुद्रः कुक्षौ चैव हुताशनः ।
सरस्वती स्तनेष्वग्र्या श्रीः पुरीषे जगत्प्रिया ॥

मूत्रे कीर्तिश्च गङ्गा च मेधा पयसि शाश्वती ।
वक्त्रे सोमश्च वै देवो हृदये भगवान् यमः ॥

धर्मः पुच्छे क्रिया लोम्नि भास्करश्चक्षुषी श्रितः ।
सिद्धाः सन्धिषु सिद्धिश्च तपस्तेजश्च चेष्टने ॥

एवं सर्वे सुरगणा नियता गात्रवर्त्मसु ।
महती देवता गावो ब्राह्मणैः परिसंस्कृताः' ॥ इति । (११९अध्याये)

अत्रैव पुटे वैखानसमन्त्रसंहितायां गोसूक्तपाठः—

'गावो हि मे मातरः सन्तु सर्वा से गोवृषाः पितरः सन्तु सर्वे वत्सा भ्रातर एव सन्तु । तस्मादिलाशुद्धिकरा भवन्तु'। इति । (५ प्र. १९ अनुवाके)

सन्निहितः संवादो यथा महाभारते :—

'गौर्मे माता वृषभः पिता मे दिवं गर्भं जगती मे प्रतिष्ठा ।
प्रपद्यैवं शर्वरीमुष्य गोषु पुनर्वाणीमुत्सृजेद्गोप्रदाने' इति ।
(आनुशासनिके १११ अध्याये)

७३ पुटे. गार्हपत्यादीनां पञ्चानामग्नीनां भूरादिलोकसमानाकारत्वादिकं भगवता व्यासेनानूद्यते । यथा :—

श्रीमति महाभारते आश्वमेधिकपर्वणि १११ अध्याये—

'पृथिवी गार्हपत्योऽग्निरन्तरिक्षन्तु दक्षिणः ।
स्वर्गमाहवनीयोऽग्निरेवमग्नित्रयं स्मृतम् ॥ ३३ ॥

वृत्तञ्च गार्हपत्योऽग्निर्यस्माद्वृत्ता च मेदिनी ।
अर्धचन्द्राकृतिस्तं वै दक्षिणाग्निस्तथा भवेत् ॥ ३४ ॥

चतुरश्रं ततः स्वर्गं निर्मलञ्च निरामयम् ।
तस्मादाहवनीयोऽग्निश्चतुरश्रो भवेन्नृप ॥ ३५ ॥

जुहुयाद्गार्हपत्यं यो भुवं जयति स द्विजः ।
जुहोति दक्षिणं यस्तु स जयत्यन्तरिक्षकम् ॥ ३६ ॥

पृथिवीमन्तरिक्षञ्च दिवं ऋषिगणैः सह ।
जयत्याहवनीयं यो जुहुयाद्भक्तिमान्नरः ' ॥ ३७ ॥ इति

प्रकृतग्रन्थे ६२ पुटे १२६ श्लोकादारभ्य ६३ पुटे १३६ श्लोकपर्यन्तः तथा ४२७ पुटे ५५ श्लोकादारभ्य ६७ श्लोकपर्यन्तश्च भागः अत्रार्थे मूलतया द्रष्टव्यः । महाभारतेऽपि पूर्वापरग्रन्थसन्दर्भः अग्निमहिमानं विस्तरेण वदति ।

**सप्तमाध्यायः**

आवाहनकुम्भलक्षणं कुम्भपूजा भगवद्ध्यानावाहनविस्तरः बालालयावाहने विशेषः चतुर्दशकलशस्नपनं शयनाधिवासहौत्रशंसनप्रधानहोमाश्च उक्ताः ।

**अष्टमाध्यायः**

रत्नन्यासकौतुकस्थापनावाहनानि नित्यार्चनोपक्रमः देवयागोपयुक्तशिष्टद्रव्य-विनियोगप्रकारः वर्णहीनशिलाबेरराष्ट्रान्तरानीतबिम्बप्रतिष्ठाप्रकारश्चोक्तः ।

**नवमाध्यायः**— नित्यार्चनप्रयोगविस्तरः प्रादुर्भावादीनामर्चने विशेषश्चोक्तः ।

१०७ पुटे ' यथा कर्मण एकस्य कल्पिताः पञ्च वह्नयः । ॥ ७ ॥

यथा चैक शरीरस्य वायुपञ्चककल्पनम् ।
तथैवैकविमानस्य पञ्च बेराणि कल्पयेत् ॥ ८ ॥

अथवा त्रीणि बेराणि यथा त्रेताग्निकल्पनम् ।
ध्रुवार्चाबेरमेकञ्च बलिबेरमथोत्सवम् ॥ ९ ॥

ध्रुवार्चाबेरमेकन्तु कुर्यादौपासनाग्निवन् ।
पुष्पन्यासावसानान्ता ध्रुवबेरार्चना मता ॥ १० ॥

अनर्च्यं ध्रुवबेरं तज्जलपुष्पानुलेपनैः ।
निष्कलं तचिराख्यं केवलामुष्मिकप्रदम् ॥ ११ ॥

सालम्बं सगुणं श्रेष्ठं सकलं कौतुकार्चनम् ।
सकामानां समुचितं संसाराश्रमिणामिदम् ॥ १२ ॥
ध्रुवबेरार्चनं प्रोक्तं निराशीःकर्मकारिणाम् '।

इति समूर्ताराधनस्याग्निहोत्रसाम्यं प्रायोऽतिदेशरूपं व्यक्तमुपपादितम् ।

११९ पुटे. 'पश्चात्प्रणिधिमुद्धृत्य ध्रुवबेरात्तु तज्जले ॥ २८ ॥
सुवर्णवर्णं रक्तास्यं रक्तनेत्रं सुखोद्वहम् ।
शुकपिञ्छाम्बरधरं विष्णुं प्रणवरूपिणम् ॥ २९ ॥
किरीटहारकेयूरप्रलम्बब्रह्मसूत्रिणम् ।
श्रीवत्साङ्कं चतुर्बाहुं शङ्खचक्रधरं परम् ॥ ३० ॥

एवं ध्यात्वा समावा' ह्येत्याद्यावाहनप्रकारः गार्हपत्यादाहवनीयादिष्वग्निप्रणयनं ज्ञापयति ।

**दशमाध्यायः** — अर्चनाङ्गोपचारवैविध्यं पुष्पादिसम्भारलक्षणञ्चोक्तम् ।

**एकादशाध्यायः**

दशावताराणामवान्तरभेदभिन्नानां स्वरूपमाविर्भावविशेषाणां लक्ष्मीनारायणादीनां प्रतिष्ठार्चनादिप्रकारः निष्कलार्चनविधिः महाचक्रलक्षणमित्यंशा उक्ताः ।

**द्वादशाध्यायः**

स्नापनोत्सवादिबिम्बानां आलेख्यादिबिम्बानाञ्च प्रतिष्ठाप्रकार उक्तः ।

**त्रयोदशाध्यायः** — महास्नपनविस्तरः उक्तः ।

**चतुर्दशाध्यायः** — महोत्सवविस्तरः उक्तः ।

**पञ्चदशाध्यायः** — गृहार्चनप्रकरणे विष्णुसूर्यगुहविनायकश्रीदुर्गासरस्वतीनां प्रतिष्ठाविधिरर्चनाविधिश्चोक्तः ।

**षोडशाध्यायः** -- श्रीदेव्याः पृथगर्चनं स्वतन्त्रलक्ष्मीप्रतिष्ठा श्रीदेव्या त्रिमानकल्पनमित्यंशा उक्ताः । इदं प्रकरणमत्र ग्रन्थे नूतनम् ।

**सप्तदशाध्यायः** — त्रिमूर्तिस्थापनादिकमाश्रयालयकल्पश्चोक्तः ।

२०४ पुटे. द्विमूर्तिस्थापनस्य तिरुक्कुरुंगुडि दिव्यक्षेत्रं गोष्ठीपुरञ्च लक्ष्ये भवतः । तथा त्रिमूर्तिस्थापनस्य शुचीन्द्रक्षेत्रञ्च उपलभ्यमानं लक्ष्यं द्रष्टव्यम् ।

**अष्टादशाध्यायः**

पुण्यनक्षत्रपूजनं हविःपाकविधिः मासोत्सवविशेषाश्चोक्ताः ।

२१० पुटे. 'अथातः सम्प्रवक्ष्यामि पुण्यनक्षत्रपूजनम् ।
श्रवणं द्वादशी पर्व विष्णुपञ्चदिनानि वै' ॥ १ ॥

इत्याद्युक्तो विषयः महाभारते प्रपञ्च्यते । यथा :—

श्रीभगवान् :— 'शृणु राजन् मया पूर्वं यथा गीतन्तु नारदे ।
तथा ते कथयिष्यामि मद्भक्ताय युधिष्ठिर ॥ २ ॥

यस्तु भक्त्या शुचिर्भूत्वा पञ्चम्यां मे नराधिप ।
उपवासव्रतं कुर्यात्त्रिकालञ्चार्चयंस्तु माम् ॥ ३ ॥

सर्वक्रतुफलं लब्ध्वा मम लोके महीयते * ।
पर्वद्वयञ्च द्वादश्यौ श्रवणञ्च नराधिप ॥ ५ ॥

मत्पञ्चमीति विख्याता मत्प्रिया च विशेषतः' । इति ।
(आश्वमेधिके १२०अध्याये)

२११ पुटे. हविःपाकविधिमतत्यमनुसृत्य 'नाच्चियार् कोविल्' क्षेत्रे क्वचित्तत्परिसरेषु च अनुष्ठानं भवति ।

२१२ पुटे. द्वादशमासेषूपोष्य कर्तव्यभगवदाराधनप्रकारः महाभारते आश्वमेधिकपर्वणि १२० अध्याये विस्तरेण दृश्यते ।

अत्राष्टादशाध्याये अष्टत्रिंशाध्यायेऽन्यत्र च व्रतानुष्ठानप्रकरणस्थानां, संहितान्तरपठितानाञ्च प्रमाणानामैककण्ठ्यं श्रीमच्छ्रीनिवासमखिभिः श्रीवैखानससूत्रतात्पर्यचिन्तामणौ द्वितीयप्रश्नस्य अष्टादशखण्डस्य व्याख्यानावसरे व्यवस्थापितमिति निष्कर्षस्ततोऽवसेयः ।

वैखानसानामेष सम्प्रदायप्रवर्तकः श्रीनिवासाध्वरी अस्यामेव तिरुपतिनगर्यां लब्धजन्मा वैखानसकल्पसूत्रव्याख्यानमतिविपुलं निर्माय ततः श्रीवैखानसमहिममञ्जरीं, उत्तमब्रह्मविद्यां, वैयासिकब्रह्मसूत्रव्याख्यामन्यांश्च ग्रन्थान् रचयामास । तत्र तदीयतिथिनिर्णयकारिकाग्रन्थस्यान्ते स्वीयं चरितमित्थं स प्रकटयति । यथा :—

'इति कौशिकगोत्रेण गोविन्दाचार्यसूनुना ।
श्रीवेङ्कटेशपादाब्जसमाराधनकारिणा ॥

तद्दत्तवेदवेदान्तदेशिकाख्येन धीमता ।
सर्वतन्त्रस्वतन्त्रेण गर्भचक्राङ्कजन्मना ॥

श्रीवैखानसनिष्ठेन श्रीनिवासाख्ययज्वना ।
रचिता परिपूर्णेयं तिथिनिर्णयकारिका' ॥ इति ।

अन्योऽयमभिज्ञानशाकुन्तलव्याख्याता अष्टभाषाचक्रवर्ती ध्वनिप्रस्थानपरमाचार्यः श्रीनिवासाचार्यः । सोऽप्यत्रैव तिरुपतिनगरे कृतावतारः श्रीवेङ्कटेशं समाराधयति स्म । तस्येमे श्लोकाः शाकुन्तलनाटकव्याख्यानारम्भे प्रस्तुताः तदीयं वृत्तं व्यक्तीकुर्वन्ति ।

'वैखानसान्वयपयोधिमृगाङ्कमूर्तिः
श्रीकौशिको विजयते स हि तिम्मयाख्यः ।
श्रीवेङ्कटेशचरणाम्बुजनित्यपूजा-
पूतःकृतिर्गुणनिधिर्महितो मनीषी ॥

तस्य पुत्रोऽस्ति विद्यानां स्वयंवरपतिः कविः ।
व्याख्याता नाटकादीनां श्रीनिवास इति श्रुतः ॥

यं श्रीनिवासमखिलागमसारसिन्धुकुम्भोद्भवं बुधजनाः परिकीर्तयन्ति ।
सोऽहं विचार्य भरतादिमुनिप्रणीतं शास्त्रं कवीन्द्ररचितानि च नाटकानि ॥
न्यायं फणीन्द्रफणितिं कपिलस्य तन्त्रं काणादतन्त्रमथ जैमिनिना कृतञ्च ।
टीकां करोमि विदुषां परितोषणाय शाकुन्तलस्य वृषशैलपतेः प्रसादात्' ॥

इति ।

**एकोनविंशाध्यायः** — विशेषार्चनविधिरुक्तः ।

**विंशाध्यायः** — प्रतिष्ठाप्रायश्चित्तमुक्तम् ।

**एकविंशाध्यायः** — चलितस्थापनादौ प्रायश्चित्तं भयरक्षार्थनिष्कृतिश्चोक्ता ।

२५३ पुटे. 'परचक्रभयोद्रेकादथवा चोरपीडया ।
ग्रामालयविनाशे तु जनसञ्चारवर्जिते ॥ ६४ ॥
बालालयप्रकारेण होमं हुत्वा यथाविधि ।
ध्रुवबेरगतां शक्तिं जङ्गमेषु निवेश्य च ॥ ६५ ॥
निर्भयान्यालयं नीत्वा पूजयेच्चेन्महाफलम् * *
नित्यमेवं यथालाभमर्चयेदिति शासनम् ।
भये तत्र विमुक्ते तमग्निमारोप्य पूर्ववत् ॥ ७८ ॥
प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत्' । इति

तथा 'अतः परं प्रवक्ष्यामि भयरक्षार्थनिष्कृतिम् ॥ ८७ ॥
चोरशत्रुभये वाऽथ परचक्रभयेऽथवा' ।

इत्यारभ्य विग्रहाणामापदि भूमौ पिधानकथनेन च तात्कालिकदेशोपप्लवादीनां सम्भवः तथा आलयानां तैरुपप्लवैरभिघातश्च ज्ञायते ।

**द्वाविंशाध्यायः** — प्रतिष्ठाप्रायश्चित्तशेषो विस्तरेणोक्तः ।

**त्रयोविंशाध्यायः** — नवीकरणप्रायश्चित्तं कौतुकादिजीर्णोद्धारप्रकारः नवीकर्तुः फलविशेषश्चोक्तः ।

२८१ पुटे. 'पुनःसन्धानकर्तुः स्यात्तन्मूलाद्द्विगुणं फलम् ।
सर्वान् कामानवाप्नोति कीर्तिमान् धनवान् भवेत् ॥ १२३ ॥
सर्वपापविनिर्मुक्तो भोगान् भुङ्क्ते महीतले'। इति।

अत्र संवादे प्रसिद्धोऽयमाभाणकः —

'दानपालनयोर्मध्ये दानाच्छ्रेयोऽनुपालनम् ।
दानात्स्वर्गमवाप्नोति पालनादच्युतं पदम्' ॥ इति ।

**चतुर्विंशाध्यायः** — अर्चनाहीनप्रायश्चित्तमुक्तम् ।

**पञ्चविंशाध्यायः** — स्नपनप्रायश्चित्तमुक्तम् ।

**षड्विंशाध्यायः** — उत्सवप्रायश्चित्तमुक्तम् ।

३१७ पुटे. 'उत्सवे च प्रतिष्ठायां विष्णोरमिततेजसः ।
ग्रामे तत्र मनुष्याणामुत्सवं न समाचरेत् ॥ १७६ ॥

आरोपिते ध्वजे विष्णोरुत्सवार्थं विशेषतः ।
उत्सवावभृथात्पूर्वं सर्वे तद्ग्रामवासिनः ॥ १७८ ॥

अन्यत्र यदि गच्छन्ति भवन्ति व्याधयो ध्रुवम् ।
भवन्ति नैव तद्ग्रामवास्तुबाह्ये निवासिनाम् ' ॥ १७९ ॥ इति
सुशिक्षितोऽनुष्ठीयतेऽयं विधिरद्यापि ग्रामेषु ।

**सप्तविंशाध्यायः** — सामान्यप्रायश्चित्तमुक्तम् ।

३१९ पुटे. अत्र चण्डालाद्यस्पृश्यस्पर्शनादिविषये कलिकालिकानि राजशासनानि न ग्रन्थानन्यथयेयुरित्यवसेयम् । असङ्कोच्यानि शास्त्राणि ।

**अष्टाविंशाध्यायः** — पात्रपरिच्छदादीनां तटाकादीनाञ्च संस्कार उक्तः ।

**एकोनत्रिंशाध्यायः** — शान्तिप्रकाराः अनपायिनां प्रतिष्ठादयश्चोक्ताः ।

**त्रिंशाध्यायः**—एकगर्भगृहे दशावतारप्रतिष्ठा पञ्चवीराणां प्रतिष्ठा तदर्चनञ्चोक्तम् ।

३६५ पुटे. पञ्चवीरप्रतिष्ठाविधिमक्षरशः 'नाच्चियार् कोविल्' दिव्यक्षेत्रमनुरुन्धे । तथा अत्यल्पेन भेदेन 'तिरुवल्लिक्केणि' दिव्यदेशश्च । न सार्वत्रिकोऽयं कल्पः परिदृश्यते ।

तथा मरीच्युक्तनवमूर्तिकल्पस्यैको विषयः 'उत्तरमेरूर्' क्षेत्रं विज्ञायते ।

**एकत्रिंशाध्यायः**

पवित्रारोपणविधिरुक्तः । एतदन्तो भागः मुद्रितविमानार्चनकल्पकाश्यपज्ञानकाण्डसमूर्तार्चनाधिकरणेषु संवादं लभते ।

अत्र पवित्रारोपणप्रकरणोक्तो मण्डपप्रस्तारादिः भृगुसंहितासु कासुचिदुपलभ्यमानः संहितान्तरसंवादविधुर एव । इत आरभ्य पठ्यमानो ग्रन्थभागो नवाध्यायपरिमितः प्रायेण द्रमिडदेशीयेषु भगवन्मन्दिरेषु शिवक्षेत्रेषु च प्राज्यप्रचार उपलभ्यते । वैदिकाराधनमहिमानुवर्णनाध्यायश्च शास्त्रपरिभाषितवैदिकतान्त्रिकनिर्वचनप्रपञ्चः सम्प्रतिपन्नः ।

**द्वात्रिंशाध्यायः** — शमीपूजा कृत्तिकादीप सुगन्धितैलाभिषेकोत्सवा उक्ताः ।

एतदारभ्य आसमाप्ति प्रायोऽस्यां संहितायामधिको विषयः ।

**त्रयस्त्रिंशाध्यायः** — पञ्चामृत पञ्चगव्य शुद्धस्नपनप्रकारा उक्ताः ।

**चतुस्त्रिंशाध्यायः** — गोदाप्रतिष्ठा भक्तप्रतिष्ठाविशेषश्चोक्तः ।

**पञ्चत्रिंशाध्यायः** — अष्टबन्धनविधिर्विस्तरेणोक्तः ।

**षट्त्रिंशाध्यायः** — वैदिकवैखानसशास्त्रमहिमानुवर्णनं कृतम् ।

**सप्तत्रिंशाध्यायः** — अङ्कुरार्पणविस्तर उक्तः ।

**अष्टत्रिंशाध्यायः** — ऊर्ध्वपुण्ड्रविधिः सदाचारक्रमश्चोक्तः ।

**एकोनचत्वारिंशाध्यायः** — यागशालानिर्माणं सर्वाग्निस्थापनक्रमश्चोक्तः। इति विषयसङ्ग्रहः ।

ग्रन्थान्ते च परिशिष्टत्वेन निवेशितानां त्रयाणामनुबन्धानां स्वरूपं तथा तन्निवेशनोद्देशश्च तत्रैवोक्तः ।

उपलब्धेषु विभिन्नदेशीयेष्वादर्शमातृकाकोशेषु क्वचिद्विषयाणां क्वचिदध्यायानाञ्च बहुशः सङ्कीर्णत्वेन दुःसमाधेयत्वादुभयत्र समुचितपाठक्रमनिर्णये महान् क्लेशः सम्प्रति संवृत्तः। अथापि क्वचित् क्वचित् विशिष्य आलयनिर्माणप्रतिमानिर्माणभागे निर्दुष्टपाठसम्पादनयत्नः अकृतार्थ एवावतिष्ठते ।

अत्र मुद्रणे कुण्डलीकरणादिसङ्केतानां तत्र तत्र चिह्नितानां प्रतिपत्तिरित्थं द्रष्टव्या ।

(  ) सङ्ख्यारहितः ग्रन्थशरीरे निवेशानर्हः कोशे क्वचिद्दृष्टः ।

(  ) सङ्ख्यासहितः ग्रन्थशरीरे निवेशार्हः कोशे क्वचिद्दृष्टः ।

( ? ) अनन्वितार्थः अप्रसिद्धश्च पाठः ।

अस्मिन् बहुतरक्लेशसाध्ये मुद्रणकार्ये स्वीयादर्शमातृकाकोशदानेनोपकृतवद्भ्यः प्रथमानुबन्धे प्रस्तुतेभ्यो वदान्यमहाशयेभ्यो ग्रन्थस्वामिभ्यः शाश्वतमधमर्णः कृतज्ञतां निवेदयामि । तथा ग्रन्थस्यास्य मुद्रणादेशदानेनोपकृतवद्भ्यः श्री श्रीनिवास-दिव्यभाण्डागारपर्यवेक्षकेभ्यः ( Executive Officer ) श्री चेलिकानि अन्नाराव् B.A., प्रभुभ्यः, ग्रन्थमुद्रणसाधने पुरुषकारभूतेभ्यः श्रीवेङ्कटेश्वरप्राच्य-परिशोधनालय प्राच्यकलाशालानियन्तृभ्यः श्रीपरवस्तु वेङ्कटरामानुजस्वामी M.A., महोदयेभ्यश्च भवामि निरन्तरकृतज्ञताभाजनम् ।

अन्ततः ईदृशे स्वीयकैङ्कर्ये मां नियोज्य यथोचितबुद्धिप्रदानेन निर्विघ्नं ग्रन्थसमापनमारचयते भगवते श्रीसहायाय वेङ्कटगिरिशिखरविहारिणे कलियुगप्रत्यक्ष-देवाय श्री श्रीनिवासपरब्रह्मणे नित्यमङ्गलमाशासानो निर्भरमासे ।

श्रीमद्भार्गवगोत्रवार्धिशशिनं श्रीपत्तपुर्यां स्थितं<br>
श्रीकृष्णार्यतनुभवं विखनसो रूपं कलौ मानुषम् ।<br>
सर्वेषामपि बोधयन्तमखिलश्रौखेयधर्मं सदा<br>
वन्देऽनुष्ठितपाकयज्ञमनिशं कोदण्डरामाह्वयम् ॥

तिरुपति<br>
नन्दन माघशुक्ल-<br>
द्वादशी.

इति निवेदयिता<br>
पार्थसारथि भट्टाचार्यः

श्रीः

# विषयसूचिका.


पुटे.

प्रथमोऽध्यायः

मङ्गलाचरणम् १
ऋषिप्रश्नोत्तरम् ,,
बेरपूजाद्वैविध्यम् २
आलयार्चायां द्वौ प्रकारौ ,,
आचार्यलक्षणम् ३
अङ्कुरार्पणम् ,,

द्वितीयाध्यायः

भूपरीक्षा ९
आचार्यवरणम् ,,
शिल्पिलक्षणम् १०
कर्षणम् ११
सद्यः कर्षणम् १४
पदकल्पनम् ,,
ग्रामकल्पनम् १५

तृतीयाध्यायः

विमानविधिः १६
प्रथमतरुणालयः ,,
प्राचीसाधनम् ,,
मानलक्षणम् ,,
ध्रुवबेरकल्पनविचारः १७

चतुर्थाध्यायः

मूलागारकल्पनम् २२
आयादिसङ्ग्रहः ,,
एकभूमौ शान्तिकादिलक्षणम् ,,
द्वितले शान्तिकादिविधिः २३

पुटे

त्रितले शान्तिकादिविधिः २४
प्राकारलक्षणम् २८
आयादिविचारविस्तरः २९
अनपायिनां स्थानम् ,,
मण्डपादीनां स्थानम् ,,

पञ्चमाध्यायः

आद्येष्टकान्यासः ३१
गर्भन्यासप्रकारः ३३
मूर्धेष्टकान्यासः ,,
विमानदेवताकल्पनम् ३४
बेरेषु योगादिभेदाः ३७
ध्रुवानुरूप्येण परिवारस्थितिः ३८
बेरविशेषाणामुपादानद्रव्यनियमः ३९
बेराणां स्थाननियमः ,,
बेरविशेषाणां मुखनियमः ,,
अनपायिनः ,,
श्रीदेवी ,,
भूदेवी ४०
मार्कण्डेयभृगू ,,
ब्रह्महरौ ,,
कौतुकद्वितीयावरणे शिवादयः ४१
धात्रादयो द्वारदेवाः ,,
मणिकादयो द्वारपालाः ४२
श्रीभूतः ४३
न्यक्षदायः ,,
हविः पालः ,,
पुष्पेशः ,,

| | पुटे. |
|---|---|
| इन्द्रादयो लोकपालाः | ४४ |
| सूर्यः | ४५ |
| विष्वक्सेनः | ,, |
| प्रलम्बसूत्रपदव्युत्पत्तिः | ,, |
| गरुत्मान् | ४६ |
| अनन्तः | ४७ |
| भौमः | ,, |
| बृहस्पतिः | ,, |
| बुधः | ,, |
| शुक्रः | ,, |
| जाह्नवी | ,, |
| चन्द्रः | ४८ |
| श्रीः | ,, |
| सप्तरोहिण्यः | ,, |
| धात्री | ,, |
| ज्येष्ठा | ,, |
| भृग्वादयः सप्तर्षयः | ४९ |
| गविष्ठः | ५१ |
| वायुः | ,, |
| अग्निः | ,, |
| तोयम् | ,, |
| भूमिः | ,, |
| सावित्री | ५२ |
| सर्वेश्वरः | ,, |
| सप्तमातरः | ,, |
| प्रसारासनलक्षणम् | ५३ |
| स्कन्दः | ,, |
| हस्ती | ,, |
| चक्रम् | ५५ |
| ध्वजस्थगरुडः | ,, |
| शङ्खः | ५६ |
| भूतः | ,, |
| मूलबेरवशात् परिवारकल्पनम् | ,, |
| बलिपीठम् | ५६ |
| यूथाधिपपीठम् | ५८ |

षष्ठाध्यायः

| | पुटे. |
|---|---|
| ध्रुवबेरलक्षणम् | ६१ |
| जङ्गमबेरलक्षणम् | ६२ |
| पौराणिकस्थलबेरेषु विशेषः | ६३ |
| परिवारबेरलक्षणम् | ,, |
| देव्योर्मानलक्षणम् | ,, |
| पीठसङ्घातः | ,, |
| प्रतिष्ठामुहूर्तविचारः | ६४ |
| ऋत्विजां नियमाः | ,, |
| द्वादशसूक्तानि | ,, |
| यागशाला | ६६ |
| अक्षिमोचनम् | ,, |
| दर्शनद्रव्यदर्शनम् | ६७ |
| गोसावित्री | ६८ |
| गोसूक्तं | ,, |
| गोदानसूक्तं | ,, |
| शैलबिम्बानामक्षिमोचनम् | ,, |
| परिवाराणामक्षिमोचनम् | ,, |
| शिल्पिस्पर्शशुद्धिः | ६९ |
| पञ्चगव्याधिवासः | ,, |
| क्षीराधिवासः | ७० |
| जलाधिवासः | ,, |
| अशक्यबेरस्य स्नपनम् | ७१ |
| प्रतिष्ठादिनपूर्वदिनकृत्यम् | ,, |
| वास्तुशुद्धिः | ,, |
| अग्निमथनम् | ,, |
| मथनाग्न्यलाभे कर्तव्यम् | ७२ |
| वास्त्वग्नेरन्तहोमः | ,, |
| पञ्चाग्निप्रणयनप्रकारः | ,, |

| | पुटे. |
|---|---|
| अग्निध्यानप्रकारः | ७३ |
| अग्नेः सप्तजिह्वाः | ७४ |
| आघारान्ते वैष्णवहोमः | ,, |
| जिह्वाभेदेनाग्नौ हविर्भेदः | ,, |
| हविर्विशेषे अग्निभावनाप्रकारः | ,, |
| हविर्भेदेन आहुतिप्रमाणम् | ,, |
| होमद्रव्याधिदेवाः | ,, |
| होमद्रव्यविशेषे पात्रविशेषः | ,, |

सप्तमाध्यायः

| | |
|---|---|
| कुम्भपूजाप्रकारः | ७६ |
| जलाहरणम् | ,, |
| कुम्भलक्षणम् | ,, |
| कुम्भसंस्कारः | ,, |
| कुम्भे रत्नादिनिक्षेपणप्रयोजनम् | ७७ |
| अक्षरन्यासः | ,, |
| ध्यानप्रकारः | ,, |
| आवाहनशब्दार्थः | ७९ |
| आवाहनप्रकारभेदाः | ,, |
| स्नपनोद्योगः | ८० |
| धान्यपङ्क्तिः | ८१ |
| कलशन्यासः | ,, |
| स्नपनद्रव्याणि | ,, |
| उपस्नानकलशन्यासः | ,, |
| कलशाधिदेवार्चनम् | ,, |
| स्नपनप्रकारः | ,, |
| शयनाधिवासारम्भः | ८२ |
| पञ्चशयनानि | ८३ |
| शयनाधिवासः | ८४ |
| प्रतिसरबन्धः | ,, |
| निम्ननभेदेनाग्निभेदः | ८५ |
| चतुर्वेदाध्ययनम् | ८६ |

| | पुटे. |
|---|---|
| होत्रप्रशंसनम् | ८६ |
| होमद्रव्यभेदेन पात्रभेदः | ८८ |
| महाशान्तिहोमः | ,, |
| सर्वदेवार्चनम् | ,, |
| प्रधानहोमः | ९० |

अष्टमाध्यायः

| | |
|---|---|
| रत्नन्यासः | ९४ |
| पूर्णाहुतिः | ९७ |
| महाशान्तिः | ,, |
| दक्षिणादानम् | ,, |
| ध्रुवे अग्न्यारोपपक्षः | ९९ |
| व्याहृतिन्यासादिः | १०० |
| आवाहनप्रकारः | ,, |
| आवाहने विशेषः | १०१ |
| प्रतिष्ठान्तोत्सवः | ,, |
| अङ्कुरार्पणविकल्पाः | ,, |
| विनियुक्तसम्भाराणां विनियोगः | ,, |
| ब्रह्मस्थाने शिलाबेरप्रतिष्ठा | १०२ |
| राष्ट्रान्तरानीतबिम्बप्रतिष्ठा | १०३ |
| तत्र प्रायश्चित्तनिमित्तसम्भवे | १०४ |
| प्रायश्चित्तविशेषाः | ,, |
| ध्रुवार्चायां विशेषः | १०५ |
| ध्रुवार्चादिशब्दनिरुक्तिः | १०६ |

नवमाध्यायः

| | |
|---|---|
| नित्यार्चनम्, तत्र साकारनिराकारभेदः | १०७ |
| कौतुकादीनां ध्यानम् | ,, |
| कौतुकाद्यर्चने विशेषः | १०८ |
| कौतुकार्चनफलम् | |

| | पुटे. |
|---|---|
| अर्चकलक्षणम् | १०९ |
| अनुष्ठानप्रशंसा | ,, |
| अर्चनाङ्गन्यासविशेषाः | ११० |
| निर्माल्यशोधनम् | १११ |
| स्नानासनम् | ,, |
| तत्राशक्तकल्पः | ११३ |
| मन्त्रासनम् | ,, |
| सम्बन्धकूर्चविचारः | ,, |
| पुष्पन्यासः | ११४ |
| प्रादुर्भावेषु पुष्पन्यासविधिः | ११५ |
| कौतुकबेरपुष्पन्यासः | ,, |
| पुष्पन्यासदेवानां स्थितिः | ,, |
| कूर्मपीठम् | ११६ |
| एकजानुक्रमः | ,, |
| द्रव्याधिदेवार्चनम् | ११७ |
| व्याहृतिन्यासादिः | ११८ |
| ध्यानप्रकारः | ११९ |
| आवाहनम् | ,, |
| अर्चनम् | १२० |
| त्रिविधमर्घ्यम् | १२१ |
| राजविग्रहाः | ,, |
| मालादानम् | १२२ |
| मधुपर्कः | ,, |
| हविर्निवेदनम् | ,, |
| नित्यौपासनम् | १२३ |
| बलिप्रकारः | १२४ |
| द्वारपाललोकपालानपायिनः | ,, |
| कालभेदेन ध्याने प्रकारभेदः | १२५ |
| मध्याह्नार्चनम् | ,, |
| रात्र्यर्चनम् | ,, |
| नीराजनविधिः | ,, |
| अर्धयामाद्यर्चनम् | १२६ |
| प्रादुर्भावादीनामर्चने विशेषः | ,, |
| कौतुकादीनामर्चनम् | १२६ |
| देव्योरर्चनम् | ,, |
| ध्रुवार्चापूजाविशेषः | ,, |
| अर्चनाकालविचारः | १२८ |
| प्रादुर्भावानां कालविशेषेण ध्याने प्रकारभेदः | १२९ |


दशमाध्यायः


| | पुटे. |
|---|---|
| अर्चनाङ्गोपचाराः | १३० |
| उत्तमकल्पे चतुःषष्ट्युपचाराः | ,, |
| पञ्चपञ्चाशदुपचाराः | १३१ |
| अष्टचत्वारिंशदुपचाराः | ,, |
| मध्यमकल्पे द्विचत्वारिंशदुपचाराः | ,, |
| षट्त्रिंशदुपचाराः | ,, |
| चतुस्त्रिंशदुपचाराः | १३२ |
| अधमकल्पे द्वात्रिंशदुपचाराः | ,, |
| एकोनत्रिंशदुपचाराः | ,, |
| सप्तविंशत्युपचाराः | ,, |
| कौतुकादीनामुपचाराः | ,, |
| एकबेरार्चने उपचाराः | १३३ |
| प्रादुर्भावार्चनायां षोडशोपचाराः | ,, |
| उपचाराणां चातुर्विध्यम् | ,, |
| ध्रुवबेरपूजायां विशेषः | ,, |
| कौतुके नित्यपूजा | ,, |
| उपचारसमर्पणप्रकाराः | ,, |
| प्रातःकालार्चनार्हपुष्पाणि | १३४ |
| मध्याह्नकालार्चनार्हपुष्पाणि | ,, |
| सायमर्चनार्हपुष्पाणि | ,, |
| सर्वकालार्चनार्हपुष्पाणि | ,, |
| तुलसीमहिमा | ,, |
| कपित्थदलप्रशंसा | ,, |
| पञ्चाङ्गमर्चनम् | ,, |

| | पुटे. |
|---|---|
| **एकादशाध्यायः** | |
| दशावतारकल्पः, मत्स्यः | २३६ |
| कूर्मः | ,, |
| वराहः | १३७ |
| नरसिंहभेदाः | १३८ |
| सुदर्शननृसिंहः | ,, |
| लक्ष्मीनृसिंहः | १३९ |
| नृसिंहस्थापने विशेषः | १४० |
| वामनः | १४१ |
| परशुरामः | १४३ |
| दाशरथिरामः | १४४ |
| बलभद्ररामः | १४५ |
| कृष्णः | ,, |
| गरुत्मान् | १४६ |
| चतुर्भुजकृष्णः | १४७ |
| कल्की | ,, |
| अवतारार्चने विकल्पाः | ,, |
| आविर्भावावताराः | १४८ |
| लक्ष्मीनारायणः | ,, |
| निष्कलार्चाविचारः | १४९ |
| चक्रम् | १५० |
| **द्वादशाध्यायः** | |
| स्नापनोत्सवयोः पृथक् प्रतिष्ठा | १५३ |
| बलिबेरस्य पृथक् प्रतिष्ठा | १५४ |
| देव्योः पश्चात् प्रतिष्ठा | ,, |
| कौतुकव्यतिरिक्तप्रतिष्ठायां-विशेषः | १५६ |
| पटकुड्यादिबिम्बप्रतिष्ठा | ,, |
| **त्रयोदशाध्यायः** | |
| महास्नपनम् | १५८ |
| निमित्तानि | १५८ |
| सम्भाराः | ,, |
| स्नपनाङ्गाधिवासः | १६० |
| स्नपनमण्डपम् | १६१ |
| द्रव्यन्यासः | ,, |
| स्नपनक्रमः | ,, |
| ध्रुवार्चास्नपने विशेषः | १६२ |
| **चतुर्दशोध्यायः** | |
| महोत्सवः - अवभृथकाल; | १६४ |
| उत्सवत्रैविध्यम् | ,, |
| उत्सवदिनमानम् | १६५ |
| कालः | ,, |
| ध्वजदण्डलक्षणम् | ,, |
| ध्वजपटलक्षणम् | ,, |
| भेरीताडनम् | १६६ |
| अनादेशविषयः | १६७ |
| नवकुम्भारोपणम् | ,, |
| नित्यहोमः | १६८ |
| उत्सवदैवत्यानि | ,, |
| ग्रामोत्सवप्रकारः | १७१ |
| वीथीभ्रमणम् | ,, |
| वाहनक्रमः | ,, |
| कौतुकरथः | १७२ |
| आह्निकविकल्पः | १७३ |
| रथप्रायश्चित्तविशेषाः | ,, |
| रक्षाबन्धविसर्गः | १७४ |
| तीर्थकालविचारः | १७५ |
| परिवारपरिवृतिः | ,, |
| ध्वजादिपरिवाराः | ,, |
| यानवहनम् | ,, |
| गजवाहनविशेषः | ,, |

| | पुटे. |
|---|---|
| सन्धिषु विशेषाराधनम् | १७६ |
| उपहारसमर्पणम् | ,, |
| दूरगमने विशेषः | ,, |
| प्रत्यागमने पूजाविशेषः | १७७ |
| नीराजनप्रकारः | ,, |
| स्तुतिपाठः | ,, |
| विषूपरागादिषु तीर्थे प्राप्ते | १७८ |
| उत्सवस्य कालावधिः | ,, |
| मृगयोत्सवः | १७९ |
| शयनाधिवासः | ,, |
| चूर्णोत्सवः | ,, |
| तीर्थस्नानप्रकारः | १८० |
| ग्रामोत्सवः | ,, |
| उत्सवान्तस्नपनम् | १८१ |
| हविर्दानम् | ,, |
| कुम्भावाहनम् | ,, |
| देवतोद्वासनप्रकारः | ,, |
| पुष्पयागः | ,, |
| तत्रोत्तमकल्पः | ,, |
| पुष्पयागोत्सवः त्रिविधः | ,, |
| तल्लक्षणम् | ,, |
| तत्रोत्तमकल्पः | ,, |
| पुष्पाञ्जलिदानप्रकारः | १८३ |
| होमप्रकारः | ,, |
| पुष्पयागः मध्यमकल्पः | ,, |
| पुष्पयागः तृतीयकल्पः | १८४ |
| उत्सवफलश्रुतिः | ,, |

पञ्चदशाध्यायः

| | |
|---|---|
| गृहार्चाप्रतिष्ठा, विष्णुप्रतिष्ठा | १८५ |
| सूर्यकल्पः | १८६ |
| गुहार्चनम् | १८९ |
| विनायकार्चनम् | १८९ |
| श्रीदेव्यर्चनम् | ,, |
| दुर्गार्चनम् | १९० |
| सरस्वत्यर्चनम् | १९१ |

षोडशाध्यायः

| | |
|---|---|
| श्रीदेव्याः पृथगर्चनम् | १९४ |
| स्वतन्त्रलक्ष्मीप्रतिष्ठा | १९७ |
| श्रीदेव्या विमानक्रमः | २०१ |

सप्तदशाध्यायः

| | |
|---|---|
| त्रिमूर्तिस्थापनम् | २०४ |
| द्विमूर्तिस्थापनम् | २०५ |
| परिवारस्थापनम् | २०६ |
| आश्रयालयकल्पः | ,, |

अष्टादशाध्यायः

| | |
|---|---|
| पुण्यनक्षत्रपूजनम् | २१० |
| हविःपाकविधिः | ,, |
| कृत्तिकादीपः | २१३ |
| कैशिकद्वादशी | २१४ |
| अध्ययनोत्सवः | ,, |
| श्रवणद्वादशीविशेषः | २१५ |
| राघवार्चनम् | २१६ |
| तिलपद्मविधिः | ,, |
| धूपदानविशेषः | २१७ |
| फाल्गुनमासार्चनम् | ,, |
| चैत्रे दमनोत्सवः | ,, |
| वसन्तोत्सवः | ,, |
| वैशाखोत्सवः | २१९ |
| ज्येष्ठोत्सवः | ,, |
| आषाढोत्सवः | ,, |

| | पुटे. |
|---|---|
| श्रावणोत्सवः | २२० |
| भाद्रपदोत्सवः | ,, |
| आश्वयुजोत्सवः | २२१ |

एकोनविंशाध्यायः

| | |
|---|---|
| विशेषार्चनम् | २२३ |
| भक्तबिम्बस्थापनम् | २२६ |

विंशाध्यायः

| | |
|---|---|
| भूपरीक्षादिप्रायश्चित्तम् अङ्कुरार्पणहीने | २२९ |
| भूपरीक्षायाम् | २३१ |
| कर्षणे | २३२ |
| तरुणालयहीने | २३४ |
| तरुणालयबेरविचारः | ,, |
| वास्तुसवनपुण्याहहीने | ,, |
| ब्रह्मपद्मावटे | ,, |
| शङ्कुस्थापने | २३५ |
| अद्येष्टकायाम् | ,, |
| भूतपीठे आद्येष्टका | २३६ |
| साधारणनिष्कृतिः | २३७ |
| गर्भन्यासहीने | ,, |
| मूर्धेष्टकान्यासे | ,, |
| स्थूपिशूलविहीने | २३८ |
| बेरस्याग्निस्पर्शे | ,, |
| आकरेष्वग्निदग्धेषु | ,, |
| शूलस्थापनहीने | ,, |
| विमानादीनां श्रेष्ठ्यम् | २४० |
| जीर्णोद्धारविचारः | २४१ |
| अङ्गवैकल्ये | २४२ |
| मृण्मयं नार्धचित्रम् | २४३ |
| शिलामणिबिम्बे | ,, |

| | पुटे. |
|---|---|
| न्यूनाधिक्यविषयः | २४३ |
| बिम्बस्य पुनःकरणम् | ,, |
| कर्षणादौ सामान्यप्रायश्चित्तम् | २४४ |
| देवकार्येषु पुण्याहविशेषः | ,, |
| अनुक्तद्रव्यकल्पिते बेरे | २४५ |
| तच्छान्तिः | ,, |
| पुनर्जीर्णविमानादिकल्पनम् | २४६ |
| शिलासङ्ग्रहवर्जं बिम्बे कृते | ,, |
| अनुक्तकाले बिम्बे स्थापिते | ,, |

एकविंशाध्यायः

| | |
|---|---|
| चलितस्थापनम् | २४८ |
| कौतुकादिनिष्कृतिः | ,, |
| ध्रुवकौतुकयोः सारूप्यम् | २४९ |
| अवतारविषये पौराणिकप्रदेशेषु च विशेषः | ,, |
| अर्चाविरहिते बेरे दोषः | २५१ |
| निर्दुष्टबेरस्य त्यागनिषेधः | ,, |
| मधूच्छिष्टक्रियाहीने | ,, |
| शिलाविपर्यासे | ,, |
| प्रतिष्ठिते ध्रुवे अन्यत्रस्थापिते | २५२ |
| अविधिना स्थापिते बिम्बे | ,, |
| दिव्यादिस्थले विशेषः | २५३ |
| कौतुकबेरस्यान्यत्रस्थापने | ,, |
| परचक्रभयादिषु कर्तव्यक्रमः | ,, |
| मूलालयार्चने अविच्छिन्ने विशेषः | २५५ |
| भयरक्षार्थनिष्कृतिः | ,, |
| ऊर्ध्वदृष्ट्यादिदोषेषु | २५९ |
| ध्रुवकौतुकपीठे मानहीने | २६० |

द्वाविंशाध्यायः

| | |
|---|---|
| स्थापनदोषप्रपञ्चः | २६२ |

| | पुटे. |
|---|---|
| मथिताग्निविचारः | २६३ |
| यागशालादौ प्रमाणविधुरे | ,, |
| यज्ञपात्राणां प्रमाणहानौ | २६४ |
| ब्रह्मसोमकूर्चकल्पनम् | ,, |
| यज्ञभ्रेषप्रायश्चित्तम् | २६६ |
| अलाभे प्रतिनिधिः | ,, |
| कुम्भे विशेषः | २६७ |
| बिम्बस्पर्शविषयः | २६८ |
| होमकुण्डे स्पर्शादिदुष्टे | ,, |
| पुनरलाभे प्रतिनिधिः | ,, |
| इन्धनादौ | ,, |
| देवोद्धारे | २६९ |
| आचार्यादीनां कलहे | ,, |
| दक्षिणाहीने | ,, |
| पञ्चमूर्तिप्रतिष्ठायां विशेषः | ,, |
| बेरद्रव्यविचारः | ,, |

त्रयोविंशाध्यायः

| | |
|---|---|
| नवीकरणम् | २७१ |
| विमानपतनादौ बालालयः | २७२ |
| प्राकारादिनाशे | ,, |
| नवकर्मणि शुद्धिः | ,, |
| नवीकरणे केचन नियमाः | ,, |
| पुराणमन्दिरेषु नियमाः | १७३ |
| ध्रुवबेरजीर्णोद्धारः | २७४ |
| पुनर्बिम्बनिर्माणे नियमाः | २७५ |
| बिम्बेषु द्रव्यभेदेन तरतमभावः | ,, |
| बेराणां केषाञ्चिदेव द्रव्यनियमः | २७६ |
| बालालयस्याकृतत्वे न नवीकरणम् | ,, |
| कौतुकादिषु गुप्तेषु नवीकरणम् | २७७ |
| कौतुकभावे सुवर्णशकलेऽर्चनम् | ,, |
| कौतुकादिजीर्णोद्धारः | ,, |

| | पुटे. |
|---|---|
| अङ्गादिसंज्ञा | २७७ |
| कौतुकसंस्कारप्रकारः | २७८ |
| सन्धानयोग्यताकथनम् | ,, |
| बिम्बत्यागे प्रतिप्रसवः | २७८ |
| सन्धाने निमित्तान्तराणि | ,, |
| निर्दुष्टबिम्बस्य न चालनम् | २७९ |
| कौतुकबिम्बप्रतिनिधित्वेन-स्वर्णकूर्चाराधनम् | २८० |
| चोरापहृतबिम्बविचारः | ,, |
| तत्र विकल्पाः | ,, |
| सन्धानकर्तुः फलप्रशंसा | २८१ |

चतुर्विंशाध्यायः

| | |
|---|---|
| अर्चनानिष्कृतिः, कवाटोद्घाटने | २८३ |
| द्रव्यसङ्ग्रहे | ,, |
| दीपहीने | ,, |
| मार्जनहीने | २८४ |
| पुष्पन्यासहीने | ,, |
| अन्यदेवार्चनहीने | ,, |
| हविर्निवेदनहीने | २८५ |
| मुखवासहीने | ,, |
| नित्यहोमे हीने | ,, |
| सकालेऽर्चने हीने | ,, |
| बलिहीने | २८७ |
| शवपतने | २८९ |
| अस्पृश्यस्पर्शे | ,, |
| अष्टविधा भक्तिः | २९२ |

पञ्चविंशाध्यायः

| | |
|---|---|
| स्नपनप्रायश्चित्तम्, अङ्कुरार्पणहीने | २९३ |
| स्नपनशालायाम् | ,, |

| | पुटे. |
|---|---|
| कलशेषु | २९३ |
| वस्त्रे | २९४ |
| तोरणादौ | ,, |
| कूर्चादौ | ,, |
| पङ्क्तौ | ,, |
| श्वभ्रे, मृत्सु | ,, |
| पर्वतादौ | २९५ |
| धान्यानाम् | ,, |
| अङ्कुराणाम् | ,, |
| मङ्गलानाम् | ,, |
| पञ्चगव्ये | ,, |
| प्रधानद्रव्येषु | २९६ |
| पुण्यपुष्पाणाम् | २९७ |
| गन्धचूर्णानाम् | ,, |
| कषायचूर्णेषु | ,, |
| तीर्थतोयस्य | ,, |
| ओषधीनाम् | ,, |
| प्लोते | २९८ |
| मूलगन्धस्य | ,, |
| धातूनाम् | ,, |
| अलङ्कारे | ,, |
| द्रव्योद्धारे | ,, |
| कलशभेदादौ | ,, |
| कृमिकीटादिपतने | ,, |
| सङ्कल्पिते स्नपने विघ्निते | २९९ |
| तैलाभ्यक्ते देवे न स्नपनम् | ,, |
| बेरविशेषाणां देवीसाहित्यराहित्ये | ,, |
| निवेदने | ३०० |
| निर्माल्यपूजनादौ | ,, |

षड्विंशाध्यायः

| | |
|---|---|
| उत्सवप्रायश्चित्तम्, ध्वजपटादीनां लक्षणहानौ | ३०१ |

| | पुटे. |
|---|---|
| अस्पृश्यस्पर्शादौ | ३०१ |
| ध्वजे अधरोत्तरे | ३०२ |
| ध्वजपतनादौ | ,, |
| ध्वजारोहणहीने | ,, |
| एकाहोत्सवे न ध्वजारोहणम् | ,, |
| कालोत्सवे विघ्निते | ,, |
| एककालोत्सवे हीने | ३०४ |
| रथयात्रायां सम्भाव्यमानदोषेषु | ,, |
| क्षमामन्त्रप्रकारः | ,, |
| शान्तिहोमप्रकारः | ३०६ |
| पर्यग्निकरणम् | ,, |
| वर्षबिन्दुपतनादौ | ,, |
| उत्सवचक्रहीने | ३०७ |
| कुम्भस्थदेवानां पूजने हीने | ,, |
| कुम्भस्यास्पृश्यस्पर्शादौ | ,, |
| अनपायिनामर्चने हीने | ,, |
| नित्याग्निावनादृते | ३०८ |
| ग्रामबलौ हीने | ,, |
| आस्थानार्चनम् | ,, |
| बलिभ्रमणकाले सम्भाव्यमानदोषेषु | ,, |
| उत्सवे वीथ्यां शवपतने | ३०९ |
| अलङ्करणहीने | ,, |
| शिबिकादिहीने | ,, |
| हविषि हीने | ,, |
| परिकरान्तरहीने | ३१० |
| आचार्यगरिमा | ,, |
| स्नपनहीने | ,, |
| उत्सवे स्पर्शदोषाभावः | ,, |
| उत्सवान्तोपचारहीने | ३११ |
| उत्सवे कालातिक्रमे | ,, |
| उत्सवाभिमतकालः | ,, |
| अन्नबलौ पतिते | ,, |

| | पुटे. |
|---|---|
| पतिते बिम्बे | ३११ |
| पीठे वियोजिते | ३१२ |
| पतनादङ्गहीने | ,, |
| यानानां पतने | ,, |
| गायकादीनां पतनादौ | ३१३ |
| दीपपालादीनां पतनादौ | ,, |
| ध्वजस्याग्निस्पर्शादौ | ,, |
| कलहे पदार्थिनाम् | ,, |
| कौतुकबन्धने | ३१४ |
| शयने हीने | ,, |
| विषुवादौ विशेषः | ,, |
| उत्सवदीक्षायामाशौचाभावः | ३१५ |
| अवताराणामुत्सवः | ,, |
| दीक्षाविशेषः | ,, |
| देव्युत्सवे विशेषः | ३१६ |
| अन्यदेवोत्सवनिषेधः | ३१७ |
| ग्रामे उत्सवान्तरनिषेधः | ,, |
| ग्रामवासिनामन्यत्र गमननिषेधः | ,, |

सप्तविंशाध्यायः

| | |
|---|---|
| अस्पृश्यप्रवेशप्रायश्चित्तम् | ३१९ |
| मृतिप्रायश्चित्तम् | ३२० |
| मण्डपादीनामग्निदाहे | ३२१ |
| वस्त्रादीनां दाहे | ,, |
| बिम्बे अग्निस्पृष्टे | ,, |
| अग्निना बेरनाशे | ,, |
| बिम्बे सर्पस्पृष्टे | ३२२ |
| उच्छिष्टादिस्पर्शे | ,, |
| अनधिकारिभिः स्पर्शे | ,, |
| एकबेरकल्पे बिम्बनाशे | ,, |
| गर्भालयस्थलभ्रंशे | ३२३ |
| तत्रानुकल्पः | ,, |
| बालालयस्थापनक्रमः | ३२४ |

| | पुटे. |
|---|---|
| बालालये स्नानशालादिकल्पनम् | ३२५ |
| तन्त्रसङ्करनिष्कृतिः | ३२६ |

अष्टाविंशाध्यायः

| | |
|---|---|
| पात्राणां संस्कारः | ३२९ |
| शयनासनयानानां संस्कारः | ३३० |
| प्रच्छन्नपटस्य | ३३१ |
| नवीकरणे विशेषविषयः | ३३२ |
| तटाकादिकल्पनम् | ३३३ |

एकोनत्रिंशाध्यायः

| | |
|---|---|
| महाशान्तिविधिः | ३३५ |
| क्षतिशान्तिः | ३३६ |
| अद्भुतशान्तिः | ,, |
| सामान्यशान्तिः | ,, |
| उत्पातशान्तिः | ,, |
| शान्तिः | ,, |
| महाशान्तिः | ,, |
| अष्टाशीतिः | ,, |
| अङ्गहोमः | ३३९ |
| मौलिमालादिहोमः | ,, |
| सूक्तपरिभाषा | ३४४ |
| बलिपीठप्रतिष्ठा | ३४५ |
| गरुडप्रतिष्ठा | ३४६ |
| बिष्वक्सेनप्रतिष्ठा | ३४८ |
| अनन्तप्रतिष्ठा | ३४९ |
| विखनसः प्रतिष्ठा | ३५० |
| समिदादीनां लक्षणम् | ३५३ |

त्रिंशाध्यायः

| | |
|---|---|
| अवताराणामेकत्र कल्पनम् | ३५६ |
| पञ्चवीराणां स्थापनम् | ३५९ |

| | पुटे. |
|---|---|
| पञ्चबेराणां स्थापने स्थाननिर्देशः | ३६५ |
| पञ्चबेरार्चनप्रकारः | ,, |

**एकत्रिंशाध्यायः**

| | |
|---|---|
| सामान्यप्रायश्चित्तम् | ३६८ |
| पवित्रारोपणनिमित्तम् | ३६९ |
| कालः | ३७० |
| पवित्रमण्डपम् | ,, |
| मेर्वादिकल्पनम् | ३७१ |
| पवित्रद्रव्यम् | ३७२ |
| पवित्रनिर्माणप्रकारः | ,, |
| द्रव्यन्यासः | ,, |
| उत्सवोपक्रमः | ३७३ |
| होमप्रकारः | ,, |
| स्नपनम् | ३७४ |
| पवित्रारोपणम् | ३७५ |
| पवित्रसङ्ख्या | ,, |
| पवित्रारोपणफलश्रुतिः | ,, |

**द्वात्रिंशाध्यायः**

| | |
|---|---|
| शमीपूजाविधिः | ३७७ |
| कृत्तिकादीपक्रमः | ३७८ |
| दीपदर्शनफलम् | ३८० |
| सुगन्धतैलसमर्पणोत्सवः (ज्येष्ठाभिषेकः) | ३८१ |
| गृहार्चादोषनिष्कृतिः | ३८४ |

**त्रयस्त्रिंशाध्यायः**

| | |
|---|---|
| पञ्चामृतस्नपनविधिः | ३८६ |
| पञ्चामृतद्रव्यम् | ,, |
| पञ्चगव्यविधिः | ३८७ |
| पञ्चगव्यलक्षणम् | ,, |
| अधिदेवाः | ३८८ |
| पञ्चगव्यसंयोजनम् | ,, |
| स्नपनप्रकारः | ,, |
| शुद्ध्यर्थं पञ्चगव्यसाधनम् | ,, |
| प्रोक्षणम् | ३८९ |
| प्राशनम् | ३९० |
| फलश्रुतिः | ,, |
| दीक्षितानामाशौचाभावकथनम् | ,, |
| शुद्धस्नपनविधिः | ३९१ |
| स्नपनाङ्गोपचाराः | ३९२ |
| तैलसमर्पणे वर्ज्यकालाः | ,, |
| सहस्रधारास्नापनक्रमः | ३९३ |
| अलङ्करणप्रकारः | ,, |

**चतुस्त्रिंशाऽध्यायः**

| | |
|---|---|
| गोदाप्रतिष्ठा | ३९६ |
| पादुकाप्रतिष्ठा | ३९७ |
| भक्तप्रतिष्ठा | ३९९ |

**पञ्चत्रिंशाध्यायः**

| | |
|---|---|
| अष्टबन्धप्रकारः | ४०४ |
| अष्टबन्धद्रव्याणि | ४०५ |
| फलश्रुतिः | ४०९ |

**षट्त्रिंशाध्यायः**

| | |
|---|---|
| वैदिकाराधनमहिमा | ४१० |
| जगत्सृष्टिप्रकारः | ,, |
| पाञ्चरात्रशास्त्रोत्पत्तिः | ४११ |
| देवलककथनम् | ४१२ |

**सप्तत्रिंशाध्यायः**

| | |
|---|---|
| अङ्कुरार्पणविस्तरः | ४१६ |

| | पुटे. |
|---|---|
| पालिकादीनां लक्षणम् | ४१६ |
| अङ्कुरधान्यानि | ४१७ |
| अङ्कुरवेदिका | ,, |
| पदकल्पनम् | ,, |
| देवतावाहनम् | ४१८ |
| उपचारक्रमः | ,, |
| द्वारेशार्चनम् | ,, |
| जयाद्यर्चनम् | ,, |
| दिगीशार्चनम् | ,, |
| सोमकुम्भार्चनम् | ,, |
| पालिकाद्यलङ्करणम् | ४१९ |
| पालिकादीनां न्यासः | |
| पालिकादिष्वर्चनम् | ,, |
| अङ्कुरार्पणम् | ,, |
| जलसेकः | ४२० |
| पुण्याहम् | ,, |
| अङ्कुररक्षणम् | ,, |
| सद्योङ्कुरम् | ,, |

अष्टत्रिंशाध्यायः

| | |
|---|---|
| ऊर्ध्वपुण्ड्रविधिः | ४२१ |
| फलश्रुतिकथनम् | ४२२ |
| ऊर्ध्वपुण्ड्रस्य सार्वत्रिकता | ४२३ |
| सदाचारक्रमः | ,, |
| शिष्टलक्षणम् | ,, |
| वस्त्रधारणम् | ४२४ |
| सद्योधौतवस्त्रधारणम् | ४२५ |
| आर्द्रवस्त्रधारणम् | ,, |

| | पुटे. |
|---|---|
| पुनःस्नाननिमित्तानि | ४२५ |
| जपादौ आसनानि | ४२६ |
| भगवदाराधनम् | ४२७ |
| भोजनविधिः | ,, |
| स्वाध्यायकालकर्तव्यम् | ४२८ |
| सदाचारवतां सत्फलप्राप्तिः | ४२९ |
| सङ्कल्पकरणम् | ,, |
| नित्यार्चनस्य प्राधम्यम् | ,, |
| विष्णुपञ्चदिनानि | ,, |
| मार्गशीर्षशुक्लद्वादशीविशेषः | ४३० |
| माघशुक्लद्वादशी | ,, |
| श्रावणकृष्णाष्टमी | ,, |
| जया | ,, |
| जयन्ती | ,, |
| अविद्धा अष्टमी | ,, |
| जयार्चनकालः | ,, |
| जयन्त्यर्चनकालः | ,, |
| जयाजयन्त्योः प्राधान्यम् | ४३१ |

एकोनचत्वारिंशाध्यायः

| | |
|---|---|
| यागशालाकल्पनम् | ४३२ |
| अङ्कुरार्पणपददेवाः | ,, |
| ऋत्विजां कृत्यानि | ४३४ |
| अग्निपरिचर्याविशेषः | ४३६ |
| प्रथमानुबन्धः | ४३९ |
| द्वितीयानुबन्धः | ४७३ |
| तृतीयानुबन्धः | ४८६ |
| शुद्धपाठसूची | ४९६ |

॥ श्रीः ॥

# श्रीमदाचार्यविंशतिः



अथ नैमिशभूविभूषणं मुनिसन्दोहमहप्रवर्धनम् ।
मम लोचनगोचरीभवत्वखिलाचार्य तवाद्भुतं वपुः ॥ १ ॥

कुशसंस्तरवर्ति रौरवाजिनसम्भावितपद्मकासनम् ।
उपकण्ठलसत्कमण्डलु ज्वलितं ब्रह्ममयेन तेजसा ॥ २ ॥

नखरप्रतिबिम्बितानतत्रिदशश्रेणिविशेषशोभिना ।
जगदुद्धरणोरुविक्रमक्रमवत्पादयुगेन शोभितम् ॥ ३ ॥

अधिकायतबाहुकन्दलीमृदुलस्पर्शसुखं समीयुषा ।
कनकच्छविना बलीयसा महता जानुयुगेन लक्षितम् ॥ ४ ॥

करिहस्तमनोहराकृतिं स्वकया मुग्धरुचाऽवजानता ।
क्रमवृत्तकृशेन मांसलस्फुरदूरुद्वितयेन योजितम् ॥ ५ ॥

परिणद्धमहार्घविस्फुरद्घनपीताम्बरकान्तिशोभिना ।
रथचक्रविशालमञ्जुना कटिभागेन समुत्कटश्रियम् ॥ ६ ॥

सदसद्विशयार्थचुम्बिना स्मरनाशचसमानजन्मना ।
उदरेण परिष्कृतं श्रुतिस्मृतिजाताधिकभारवाहिना ॥ ७ ॥

नियतोर्ध्वविसारिसद्घृणारसरोचिर्नतरोमराजिकम् ।
द्युसरिद्भ्रमविभ्रमास्पदस्थितिमद्गहरनिम्ननाभिकम् ॥ ८ ॥

जगदुद्भववृत्तिसंहृतिक्षमनारायणभव्यधर्मणा ।
सतताध्युषितेन योजितं हृदयेन स्वगुणैरहापितैः ॥ ९ ॥

सदृशेन पयोधिकन्यकाकमितुर्भव्यविहारसङ्गतेः ।
फणितल्परुचिं विलुम्पता परिघाऽपीवरवक्षसाऽन्वितम् ॥ १० ॥

कलधौतमयप्रविस्फुरद्दलितान्तस्तिमिरोपवीतवत् ।
तुलसीपरिवासितं लसद्वनमालामणिहारराजितम् ॥ ११ ॥

वरदानचणाभयादराम्बुजदण्डत्रयमञ्जुदर्शनैः ।
प्रणताहितपश्यतोहरैः युगसङ्ख्यैरुपलक्षितं करैः ॥ १२ ॥

करुणारसपुष्टकन्धरं करिदन्ताभकपोलमण्डलम् ।
अरुणाधरमञ्चितं दृढैः समतिग्मैरतिशोभनैः रदैः ॥ १३ ॥

अभिराममपास्तदोषया सततं रेचकपूरकादिभिः ।
सुमनोवरचित्तचोरया कमनीयाकृतिभासिनासया ॥ १४ ॥

भुजगाभभुजाग्रनर्तनस्मयवत्कुण्डलमण्डितश्रुति ।
समयोन्मिषिताम्बुजच्छदप्रतिमासेचनकायतेक्षणम् ॥ १५ ॥

स्तिमितासितपक्ष्म भास्वरारुणनेत्रान्तविनीलतारकम् ।
पृथुकूर्चकपार्श्वविस्फुरत्कुटिलभ्रूलतिकाविराजितम् ॥ १६ ॥

निशया परिशोभितान्तरस्थलदीव्यद्धवलोर्ध्वपुण्ड्रकम् ।
सुविशाललाटसुन्दरं शरदिन्दुद्युतितस्कराननम् ॥ १७ ॥

मुनिमण्डलसार्वभौमतां सहसा व्यञ्जयता निरङ्कुशाम् ।
मुनिवेषविलक्षणेन सन्मकुटेन ज्वलितेन भूषितम् ॥ १८ ॥

वपुरित्थमुपप्नतां भजत्तव देवावतु मामनारतम् ।
अशुचिं श्रुतवृत्तदुर्विधं भगवन्निग्रहपात्रमर्भकम् ॥ १९ ॥

अभवाय मनोभवाय ते जलजातोदरसम्भवाय च ।
जगतां प्रभवाय साक्षिणे विखनस्ते भगवन् नमो नमः ॥ २० ॥

**पार्थसारथिः**

---

श्रीः

श्री श्रीनिवासपरब्रह्मणे नमः
श्रीमते विखनसे नमः
श्रीमद्भ्यो भृग्वादिभ्यो नमः

# श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तासु संहितासु

# क्रियाधिकारः

## प्रथमोऽध्यायः

नारायणः पिता यस्य यस्य माता हरिप्रिया ।
भृग्वादिमुनयः शिष्यास्तस्मै विखनसे नमः ॥ १ ॥

ऋषय ऊचुः,

ऋषिप्रश्नोत्तरम्.

आश्रमे सम्यगासीनमृषिं सर्वहितोद्यतम् ।
ऋषयोऽभ्यागतास्सर्वे प्रणिपत्येदमब्रुवन् ॥ २ ॥
भगवन् केन मार्गेण कं देवं पूजयन्ति वै ।
आचक्ष्व सन्तो ब्रह्मर्षे सर्वमेतत्सविस्तरम् ॥ ३ ॥

भृगुरुवाच

युष्माभिः परिपृष्टं यत्तत्सर्वमृषिसत्तमाः ।
वक्ष्यामि सावधानेन शृणुध्वं मत्प्रबोधितम् ॥ ४ ॥
हृदि स्थितिगतं पीठं चतुरश्रं हिरण्मयम् ।
नानामणिगणज्वालादुष्प्रेक्ष्यं शुभमुज्ज्वलम् ॥ ५ ॥
तस्य मध्यगतं ध्यायेन्नारायणमनामयम् ।
शुद्धस्फटिकसङ्काशं शङ्खचक्रधरं परम् ॥ ६ ॥
आसनाद्युपचाराणि मनसा तस्य भावयेत् ।
एषा तु मानसी पूजा बेरपूजा तु वक्ष्यते ॥ ७ ॥

उक्तप्रमाणप्रतिमां हाटकादिविधिं[1] पराम् ।
प्रतिष्ठाप्यार्चयेत्सा तु बेरपूजेति चोदिता[2] ॥ ८ ॥

ध्यात्वाऽग्निमण्डलं तस्य ध्यायेन्मध्ये प्रभां शुभाम् ।
प्रभामध्यगतं ध्यायेदासीनं वा जनार्दनम् ॥ ९ ॥

तप्तहाटकसङ्काशं चतुश्शृङ्गं द्विशीर्षकम् ।
सप्तहस्तं त्रिचरणं दुष्प्रेक्ष्यं सप्तजिह्वकम् ॥ १० ॥

स्रुक्स्रुवौ चाक्षमालां च शक्तिं दक्षिणपाणिषु ।
चामरं व्यजनं चैव घृतपात्रं च वामतः ॥ ११ ॥

ध्यात्वा यथोक्तहविषा यजेत्तद्धोमपूजनम् ।
यथोपयोगशक्यत्वात्कर्तुं पुष्पादिपूजनम् ॥ १२ ॥

चक्षुषः प्रीतिकरणान्मनसो हृदयस्य च ।
[3]प्रीत्या सञ्जायते भक्तिर्भक्तस्य सुलभो हरिः ॥ १३ ॥

तस्मात्त्रयाणामेतेषां बेरपूजा विशिष्यते ।
बेरपूजाद्वैविध्यम्. गृहार्चा चाऽलयार्चेति बेरपूजा च सा द्विधा ॥ १४ ॥

बल्युत्सवादिभिर्दिव्यैः[4] पूर्णत्वात्सर्वविग्रहैः ।
प्रमीते यजमानेऽपि त्वविच्छिन्नप्रवर्तनात् ॥ १५ ॥

साधारणत्वात्सर्वेषां तद्ग्रामादिषु वासिनाम् ।
मुख्यमाह पुरा ब्रह्मा बेरपूजनमालये ॥ १६ ॥

आलयार्चाद्वैविध्यम्. आलयार्चाविधिस्सोऽपि द्विधा विष्णोः प्रकीर्तितः ।
वैखानसः पाञ्चरात्रो वैदिकस्तान्त्रिकः क्रमात् ॥ १७ ॥

---

1. मयीं अ. 2. अग्निहोत्रादिहोमेषु सूत्रोक्तेन विधानतः—इत्यधिकं दृश्यते. ई. 3. प्रत्यहं इ. 4 विम्बैः ई.

विधिस्तु वेदमूलश्च दीक्षायुक्तस्तु तान्त्रिकः ।
केवलामुष्मिकफलो वेदवैदिकवर्धनः ॥ १८ ॥

कारयेद्वैदिकेनैव ग्रामादिषु च वास्तुषु ।
नदीतीरेऽद्रिशृङ्गे वा वने वाऽन्यत्र निर्जने ॥ १९ ॥

पूजयेत्तान्त्रिकेणैव ग्रामादौ न कदाचन ।
अनुलोमनिवासेषु तान्त्रिकेणैव पूजयेत् ॥ २० ॥

व्रात्यान्तरालप्रभृतिप्रतिलोमनिवासने ।
उभाभ्यां नार्चयेद्विष्णुमिति पूर्वजशासनम् ॥ २१ ॥

आचार्यलक्षणम्. एवं मनसि सञ्जाते यजमानो मुदान्वितः ।
वैखानसेन सूत्रेण निषेकादिक्रियान्वितम् ॥ २२ ॥

विप्रं स्वाध्यायसंयुक्तं वेदतत्त्वार्थदर्शिनम् ।
सौम्यं जितेन्द्रियं शुद्धं विष्णवर्चनपरायणम् ॥ २३ ॥

ऊहापोहविधानेन ध्वस्तसंशयमानसम् ।
पत्न्यपत्ययुतं शान्तं स्नानशीलं च धार्मिकम् ॥ २४ ॥

आहूय देववत्पूज्य सर्वकार्योपदेशकम् ।
आचार्यं वरयित्वा तु तेनोक्तं सर्वमाचरेत्[1] ॥ २५ ॥

अङ्कुरार्पणम्. तस्मात्तु दिवसात्पूर्वं नवमे वाऽथ सप्तमे ।
पञ्चमेऽहनि वा कुर्यात्तृतीये वाऽङ्कुरार्पणम् ॥ २६ ॥

अथवा त्वरयायुक्तः कुर्यात्तत्सद्य एव वा ।
अमावास्याव्यवहिते कुर्यात्सद्योऽङ्कुरार्पणम् ॥ २७ ॥

---

1. इतः परं 'कृत्वा स्वार्थं त्रिधैकांशं कुटुम्बार्थं विशेषतः । द्वाभ्यां तदवशिष्टाभ्यां विमानार्चनमारभेत् । युक्तमासर्क्षपक्षेषु भूपरीक्षणमारभेत्' इत्यधिकं. इ. कोशे दृश्यते 'तत्र प्रथमाध्यायस्य समाप्तिश्च. ई.

सङ्क्रमव्यवधानेऽपि सद्य एवेति केचन ।
कर्मणां साधिवासानां सद्यश्चेदङ्कुरार्पणम् ॥ २८ ॥

आरम्भकालात्पूर्वं तु पूर्व[1] निश्चित्य कारयेत् ।
अथवा स्थापनाकालात्पूर्वमेव त्वरान्वितः ॥ २९ ॥

कृत्वाऽक्षिमोचनं सद्यो जलादिष्वधिवास्य च ।
अग्न्याघारादि कर्माणि कृत्वावाऽऽह्य च पूर्ववत् ॥ ३० ॥

पुण्याहं विधिवत्कृत्वा पूजयेदिति केचन ।
बहुक्रियाणामेकाहे त्वेकमेवाङ्कुरार्पणम् ॥ ३१ ॥

( एकाहेऽपि पृथक्कार्यं भिन्नकर्तृककर्मणाम् )
तदर्थं पालिकाः कुम्भाञ्छरावानपि चाऽहरेत् ।
षोडश द्वादशाऽष्टौ च चतुरश्च पृथक्पृथक् ॥ ३२ ॥

वर्णानां ब्राह्मणादीनां सर्वेषां चतुरोऽथवा ।
नव वा पञ्च वैकं वा सद्यः कालाङ्कुरार्पणे ॥ ३३ ॥

दिनसंख्याक्रमात्केचिद्वदन्ति मुनिसत्तमाः ।
पूर्वोक्तलक्षणोपेतान्कल्पयित्वा यथाबलम् ॥ ३४ ॥

यजमानगृहे चापि [2]चैशान्येष्वितरेषु वा ।
अन्यस्मिन्वा शुचै देशे [3]गृहे वा ग्रामकर्तृके ॥ ३५ ॥

चतुर्दिशं चतुर्हस्तं गोमयेनोपलिप्य च ।
प्रागन्तं चोत्तरान्तं च षट्सूत्राणि समर्पयेत् ॥ ३६ ॥

उपपीठे पदं चैकं ब्रह्मपीठाय कल्पयेत् ।
चर्यार्थं परितोऽष्टौ च पङ्क्त्यर्थं षोडशोत्तरे ॥ ३७ ॥

---

1. निश्चेव इ. 2. चालयेषु ई. 3. प्रपायां ई.

तत्पदान्तर्गतं पङ्क्त्यां ब्रह्मपीठं प्रकल्पयेत् ।
शेषादीनां तु पीठानि पङ्क्त्यामेव प्रकल्पयेत् ॥ ३८ ॥

**मरीचिः** पङ्क्तिबाह्येपि तेषां पीठानि चोक्तवान् ।
षडङ्गुलसमुत्सेधं षोडशाङ्गुलमायतम् ॥ ३९ ॥

त्रिवेदिसहितं कुर्यात् षण्णां पीठं पृथक्पृथक् ।
यजमानगृहार्चायां स्थण्डिले वा तथैव च ॥ ४० ॥

देवदेवं समभ्यर्च्य सप्तविंशतिविग्रहैः[1] ।
पादौ प्रक्षाल्य चाचम्य मध्ये ब्रह्माणमर्चयेत् ॥ ४१ ॥

प्राग्द्वारादुत्तरे शेषं वक्रतुण्डन्तु दक्षिणे ।
दक्षिणद्वारपूर्वे तु गरुडं च समर्चयेत् ॥ ४२ ॥

सुदर्शनं पश्चिमे च विधिनैव समर्चयेत् ।
पङ्क्तीशं पश्चिमद्वाराद्दक्षिणे च विधानतः ॥ ४३ ॥

उत्तरे भूतभर्तारमर्चयित्वा यथाविधि ।
पूर्वस्मिन्नुत्तरद्वारात्सेमं शान्तं समर्चयेत् ॥ ४४ ॥

ऐन्द्रादि च तथैशान्तं जयाद्यप्सरसोऽर्चयेत् ।
हविषा च समायुक्तं सर्वेषामुत्तमं पृथक् ॥ ४५ ॥

ब्रह्मादीनां तु षण्णां वै मध्यमं तत्प्रकीर्तितम् ।
ब्रह्मणश्च तु शेषाणां बलिरेवाधमं भवेत् ॥ ४६ ॥

( ब्रह्मा सोमश्च विघ्नेशः पङ्क्तीशश्शान्तसोमकौ ।
षडेते मध्यमे प्रोक्ता देवा मध्यमपूजने ॥

---

1. पङ्क्तिमध्ये तथा पीठे ब्रह्माणमपिपूजयेत् । विनैव देवदेवेशं पूजयेदत्रिणोक्तवत् । इत्यधिकं, ई.

अलङ्कृत्य च पद्माद्यैः पुष्पैर्वाऽऽपूर्य विन्यसेत् ।
अङ्कुरोक्तक्रियास्सर्वास्तैस्तैरेव समाचरेत् ॥ ६१ ॥

अङ्कुराणां तु सर्वेषां चन्द्रः प्रोक्तोऽधिदैवतम् ।
नैव प्रीणाति भगवानङ्कुरार्पणमह्नि चेत् ॥ ६२ ॥

तस्मात्सर्वप्रयत्नेन रात्रावेवाङ्कुरार्पणम् ॥ ६२५ ॥
( अर्पयेत्तण्डुलान् शुद्धान् सद्यः कालाङ्कुरार्पणे ।
गृह्णीयात्पालिकास्तत्र पञ्च सप्त नवापि वा ॥

ब्रह्मणोऽभिमुखे पङ्क्तौ परितो दिक्षु देवताः ।
तत्तद्दिगीशानभ्यर्च्य तत्तन्मन्त्रेण चार्पयेत् ॥

एष एव विशेषः स्यादन्यत्सर्वं खिलोक्तवत् । )

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
अग्निध्यानाऽऽचार्यलक्षणाङ्कुरार्पणविधिर्नाम
प्रथमोऽध्यायः[1] ॥

श्रीविखनसे नमः

---

1. २ अध्यायः ई.

# द्वितीयोऽध्यायः ।

भूपरीक्षा

अङ्कुरार्पणकादूर्ध्वं भूमिं सम्यक्परीक्षयेत् ।
यजमानगृहे देवं सप्तविंशतिविग्रहैः ॥ १ ॥

पूजयित्वा जपन्नग्रे 'प्रियतां भगवा' निति ।
प्रणम्य देवदेवेशं 'प्रसी' देत्यनुमान्य च ॥ २ ॥

वर्णजां कन्यकामेकामलङ्कृत्य यथोचितम् ।
पायसं प्राशयित्वा तां श्वेतवस्त्रानुलेपनाम् ॥ ३ ॥

पद्मदीपकरामग्रे गमयेत्सर्वमङ्गलैः ।
शाकुनं सूक्तमुच्चार्य स्वस्तिसूक्तं समुच्चरन् ॥ ४ ॥

आचार्यो यजमानश्च तोयधारापुरस्सरम् ।
गत्वा भूमिं समुद्दिष्टामारूढतरुजन्तुभिः ॥ ५ ॥

गन्धवर्णाकृतिरसैश्शकुनैश्च यथाविधि ।
सम्यक्परीक्ष्य पृथिवीं भूसूक्तं भूमिदैवतम् ॥ ६ ॥

जपन् भूमिं गृहीत्वा तु शोभनां दोषवर्जिताम् ।
'अपक्रामन्तु भूतानि देवताश्चासुरादयः ॥ ७ ॥

विमानार्थं गृहीतेयं भूमिर्विष्णो' रिति ब्रुवन् ।
उद्वास्य देवतास्सर्वा भूमिं तत्र समर्चयेत् ॥ ८ ॥

विमानं शिल्पिना सार्धमग्रमण्डपसंयुतम् ।
निश्चित्याऽवरणैर्युक्तं तृणगुल्मानि शोधयेत् ॥ ९ ॥

आचार्यवरणम्

भूमिः परीक्षिता येन गुरुणा विधिपूर्वकम् ।
कर्षणादि प्रतिष्ठान्तं कर्म तेनैव कारयेत् ॥ १० ॥

तदभावे तु तत्पुत्रं पौत्रं नप्तारमेव वा ।
तथैव भ्रातरं शिष्यं प्रशिष्यं गुरुमेव वा ॥ ११ ॥

सब्रह्मचारिणं वापि पूर्वाभावे तथोत्तरम् ।
तदनुज्ञातमन्यं वा आचार्यार्थं नियोजयेत् ॥ १२ ॥

अन्यथा चेन्महादोषो राजा राष्ट्रं विनश्यति ।
क्षीयन्ते वर्णधर्माश्च जायते वर्णसंकरः ॥ १३ ॥

अग्नयश्च न सिद्ध्यन्ति स्वाध्यायो न प्रवर्तते ।
विपरीतानि चान्यानि भविष्यत्यधरोत्तरम् ॥ १४ ॥

तस्मात्सर्वप्रयत्नेन प्रायश्चित्तं खिलोक्तवत् ।
कारयित्वा च तेनैव सर्वकर्माणि कारयेत् ॥ १५ ॥

सर्वत्र गुरुरित्युक्तः तत्तत्स्थानप्रवर्तकः ।
सकथञ्चिदयुक्तश्चेद्युक्तेनान्येन कारयेत् ॥ १६ ॥

तत्कर्मणोऽवसाने तु तस्मै दद्याच्च दक्षिणाम् ।
स्थानाचार्यः प्रधानः स्यात्तन्नियुक्तोऽन्य एव वा ॥ १७ ॥

आचरेत्सर्वकर्माणि तद्वंशजनितोऽपि वा ।
शिल्पिलक्षणम् 　शिल्पिनस्त्रिविधाः प्रोक्तास्तत्तत्कर्मोपजीविनः ॥ १८ ॥

कुलालस्तक्षकश्चैव तथा पारशवस्त्विति ।
त्रैवस्तुकानि बेराणि शैलोर्ध्वे चित्रकर्म च ॥ १९ ॥

सुधाकर्म विमानोर्ध्वे भित्तौ चित्रक्रियादिकम् ।
एवं कुलालकः कुर्यान्मठाद्याभासकर्म यत् ॥ २० ॥

तत्तु पारशवः कुर्यात्तक्षकस्सर्वमेव तत् ।
लोहाश्मदारुबेराणि चाष्टबन्धादिकां क्रियाम् ॥ २१ ॥

ग्रामादिवास्तुविन्यासं वर्णिनां गृहकर्म च ।
प्रासादमण्डपद्वारप्राकाराणां च कल्पनम् ॥ २२ ॥

आचरेत्तक्षकस्सर्वं कुर्युश्शिल्पिन एव तत् ।
अन्यथा यदि स ग्रामो राजा राष्ट्रं च नश्यति[1] ॥ २३ ॥

कर्षणम्

अतः परं प्रवक्ष्यामि परं कर्षणलक्षणम् ।
(उक्तेष्विष्टदिने शुद्धे कर्तुश्चाप्यनुकूलके) ॥ २४ ॥

षट्स्वाषाढादिमासेषु कर्षणं सम्यगाचरेत् ।
युगलाङ्गलक्लृप्त्यर्थमुक्तवृक्षं समाहरेत् ॥ २५ ॥

संशोध्य वृक्षमूलं च गोमयेनोपलिप्य च ।
रुद्रभूतेन्द्रकीनाशान् मातृस्सोमं च वीरकम् ॥ २६ ॥

अष्टोपचारैरभ्यर्च्य बलिं दत्वा च तद्वने ।
रुद्रेन्द्रयमवृक्षेन्द्रान्वृक्षमूले तथाऽर्चयेत् ॥ २७ ॥

वनस्पतिभ्य इत्युक्त्वा कुमारीभ्य उदीर्य च ।
वृक्षराजेभ्य इत्युक्त्वा परितश्च बलिं ददेत् ॥ २८ ॥

सर्वकामप्रदेभ्यश्च पश्चाद्धोमं समाचरेत् ।
अग्नये वनराजाय सोमाय च [2]यमाय च ॥ २९ ॥

[3]शाखाय स्थूललाक्षाय [4]व्याधाय मृगरूपिणे ।
वनस्पतिभ्यः कुमारीभ्यो वल्लीभ्यः कुसुमाय च ॥ ३० ॥

शलाटवे बृहत्त्वचे पुण्यायामृततेजसे ।
सूर्याय [5]हरिरूपाय शृङ्गिणे भूतरूपिणे ॥ ३१ ॥

---

1. आद्यप्रभृति २३ श्लोका एते आ, कोशसमुदाये न पठ्यन्ते. द्वितीयाध्यायारम्भश्चेतः पश्चात् दृश्यते । 2. जयाय. आ. 3. शङ्खाय. आ. 4. वायवे. आ. 5. सूर्यरूपाय. आ.

नागहस्ताय दिव्याय त्रिहस्ताय तथैव च ।
विघ्नाय विघ्नरूपाय विनायकमुदीर्य च ॥ ३२ ॥
[1]प्रसारिणे मुरुण्डाय [2]न्यर्णायेति समुच्चरन् ।
नागेभ्यो भूतराजेभ्यश्चारणेभ्य इति ब्रुवन् ॥ ३३ ॥
दिवा नक्तंचेरभ्यश्च [3]संध्याभ्यश्च तथैव च ।
सन्ध्याचरेभ्य इत्युक्त्वा अप्सरोभ्यस्तथैव च ॥ ३४ ॥
यक्षीभ्यश्च कुमारीभ्योऽप्यासुरीभ्यस्तथैव च ।
राक्षसीभ्यः पिशाचेभ्यो वनाय स्थलचारिणे ॥ ३५ ॥
जुहुयाद्वृक्षदेवेभ्यः स्थानदेवेभ्य एव च ।
रूपिभ्यो मिथुनेभ्यश्च सुखेभ्यश्च जुहोति च ॥ ३६ ॥
व्याहृतीश्च तथा हुत्वा ' निर्दग्ध ' मिति चोच्चरन् ।
पर्यग्निकरणं कृत्वा वृक्षस्य च पुनर्यजेत् ॥ ३७ ॥
सर्वेश्वराय मातृभ्यो वक्रतुण्डाय मूर्तिभिः ।
हुत्वा मातॄंस्तथा सोमं वक्रतुण्डं च पूजयेत् ॥ ३८ ॥
पुण्याहं वाचयित्वा तु बध्वा प्रतिसरं तथा ।
रात्रिशेषं ततो नीत्वा प्रातस्स्नात्वा यथाविधि ॥ ३९ ॥
छेदयित्वा तरुं सम्यग्युगादीन्परिकल्पयेत् ।
लक्षणं तु युगादीनां खिलोक्तविधिना चरेत् ॥ ४० ॥
प्राच्यामुदीच्यां वा स्थित्वा प्रागादिषु सुविन्यसेत् ।
बलिं दत्वा समाहृत्य गन्धोदैरभिषिच्य च ॥ ४१ ॥
देवदेवं समभ्यर्चेत् सप्तविंशतिविग्रहैः ।
चतुर्विंशतिमायामं चतुरश्रं सुलक्षणम् ॥ ४२ ॥

1. प्रासारिणे. आ. 2. अग्नये. आ. 3. सन्धिभ्यः. आ.

षडङ्गुलसमुत्सेधं रत्निमात्रं त्रिमेखलम् ।
अन्यत्रापि समुद्दिष्टं पीठमेवं तथार्चने ॥ ४३ ॥

देवेभ्यश्चापि भूतेभ्यो नागयक्षेभ्य एव च ।
पिशाचेभ्यस्सर्वभूतेभ्यो राक्षसेभ्यस्तथैव च ॥ ४४ ॥

वैरोचनगणेभ्यश्च परितो निक्षिपेद्बलिम् ।
मध्ये नागबलिं दत्वा कृत्वा पुण्याहमत्वरः ॥ ४५ ॥

बलीवर्दावलङ्कृत्य रूप्यशृङ्गखुरौ शुभौ ।
दक्षिणे पूर्वपादे तु बध्नीयात्कौतुकं तयोः ॥ ४६ ॥

रात्रिशेषं निनीयैव प्रातः स्नात्वा विधानतः ।
तस्य पश्चिमदेशे त देवदेवं समर्चयेत् ॥ ४७ ॥

चक्रवीशामितैस्साधमभ्यर्च्याऽचमनान्तकैः ।
'प्रियतां मेदि' नीत्युक्त्वा पञ्चभिर्भूमिदैवतैः ॥ ४८ ॥

प्रणम्य भूमिं देवेशं प्रणम्यैवानुमान्य च ।
'नमो वरुण' इत्यद्भिः कृत्वा सीमाविनिर्णयम् ॥ ४९ ॥

'अक्षैर्मादीव्य' इत्युक्त्वा प्रोक्षयेत्कर्षकं पुनः ।
दक्षिणे 'त्वं वृषे' त्युक्त्वा 'सौरभेये' ति वामतः ॥ ५० ॥

कुशरज्ज्वा युगे बध्वा 'युगं युग' इति ब्रुवन् ।
युगे लाङ्गलमाबद्ध्य कुशरज्ज्वा स्मरन् हरिम् ॥ ५१ ॥

'ऋषिं गृह्णामि' मन्त्रेण गृह्णीयादृषिमत्वरः ।
'विष्णुर्मा' मुच्चरन् मन्त्रमात्मरक्षां प्रकल्प्य च ॥ ५२ ॥

'येऽस्मिन्देशे' इति जपन् कर्षणं तत्र कारयेत् ।
सर्वबीजानि चाऽहृत्य 'इमे बीजा,' इति स्पृशन् ॥ ५३ ॥

'देवि त्व' यीति मन्त्रेण प्रदक्षिणवशेन तु ।
[1]उप्त्वा तु सर्वबीजानि जलसेकं च कारयेत् ॥ ५४ ॥

[2]दक्षिणोक्तविधानेन दद्यादाचार्यदक्षिणाम् ।
सद्यःकर्षणम् एवं कर्तुमशक्तश्च सद्यः कुर्यात्त्वरान्वितः ॥ ५५ ॥

भूमिं परीक्ष्य सद्यस्तु कर्षयित्वा यथाविधि ।
बीजानि च समाहृत्य ब्राह्मणेभ्यः प्रदाय च ॥ ५६ ॥

तृणपूलं पलालं वा समास्तीर्य च सर्वतः ।
गोगणांस्तत्र चानीय गोगणेभ्यो निवेदयेत् ॥ ५७ ॥

'भुञ्जन्तु देवा' इत्युक्त्वा बलिं तत्र समर्पयेत् ।
देवायार्घ्यं निवेद्यैव प्रणम्यैवानुमान्य च ॥ ५८ ॥

पदकल्पनम् एकाशीतिपदं कृत्वा सम्पूज्य पददेवताः ।
गर्भालयं समुद्दिश्य उपपीठपदं नयेत् ॥ ५९ ॥

नागादि पञ्चभूतान्तं पञ्च पञ्च पदाधिपाः ।
प्रागुदक्पञ्चसूत्रस्थास्सन्धिस्था देवता इमाः ॥ ६० ॥

शेषादीन् बहिरभ्यर्च्य पश्चिमादि बहिर्मुखान् ।
कुस्तुरुण्डादयः पूज्या आग्नेयादि प्रदक्षिणम् ॥ ६१ ॥

(प्रागुदग्वेदसूत्रस्थाः पदे पूज्या विशेषतः)
किष्किन्धादि हितान्ताश्च मध्ये प्रगादि दिक्ष्वपि ।
अङ्कणे तु समभ्यर्च्य सक्तवपूपैर्बलिं ददेत ॥ ६२ ॥

पिशाचेभ्यश्च भूतेभ्यो बलिं दत्वा जलान्वितम ।
ब्रह्मपद्मविधिं कृत्वा परीक्ष्य च शुभाशुभे ॥ ६३ ॥

---

1. क्षिप्त्वा. इ. 2. रक्षां सभ्यग्विधायैव । इ.

अशुभे शान्तिहोमान्ते शुभे कर्म समाचरेत् ।
ग्रामकल्पनम् ग्राममानं विनिश्चित्य कृत्वाऽऽयादिपरीक्षणम् ॥ ६४ ॥

प्रागुत्तराननैस्सूत्रैर्दशभिस्सप्तभिर्युतैः ।
पदं कृत्वा विधानेन चतुष्षष्टिं चतुर्गुणम् ॥ ६५ ॥

त्यक्त्वा ब्राह्मं च पैशाचं विप्रावासं प्रकल्पयेत् ।
ब्राह्मे वायव्यभागे तु प्राङ्मुखं विष्णुमन्दिरम् ॥ ६६ ॥

ईशानानलनीलेषु सभागोष्ठापणान् क्रमात् ।
पश्चिमे यदि कुर्याच्चेद्ब्रह्मसूत्रात्तथोत्तरे ॥ ६७ ॥

विसृज्य भागं पैशाचं बहिरन्तरथापि वा ।
विमानं प्राङ्मुखं कुर्यादिति पूर्वजशासनम् ॥ ६८ ॥

यदि पैशाचभागस्थं देवदेवस्य मन्दिरम् ।
आधिव्याध्यादिभिस्सर्वे पीड्यन्ते वास्तुवासिनः ॥ ६९ ॥

चतुष्षष्टिविभागे तु बहिरावरणे तथा ।
भद्रकाळीं हरं चापि शास्तारं बहिरंशके ॥ ७० ॥

बहिर्मुखान् क्रमात्कुर्यात्सर्वेऽन्ये तद्बहिः स्थिताः ।
मानुषेऽभ्यन्तरेऽर्धांशे गृहश्रेणीं प्रकल्प्य च ॥ ७१ ॥

(पैशाचे बहिरर्धे तु गृहवाटीं प्रकल्प्य च)
पैशाचे बहिरर्धेतु गृहनाडीं प्रकल्पयेत् ।
एवं देशं विनिश्चित्य विमानं परिकल्पयेत् ॥ ७२ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
कर्षणादिपदविन्यासविधिर्नाम
द्वितीयोऽध्यायः[1] ॥
श्रीविखनसे नमः ॥

---

1. ३ अध्यायः ई.

# तृतीयोऽध्यायः ।

---

विमानविधिः

अतः परं प्रवक्ष्यामि विमानविधिमुत्तमम् ।
मूलालयादथैशान्यां सौम्ये वायव्य एव वा ॥ १ ॥

प्रथमतरुणालयः

बालालयं प्रकल्प्यैव प्रतिष्ठाप्य च केशवम् ।
ततोऽर्चनमविच्छिन्नं कुर्वन् धाम प्रकल्पयेत् ॥ २ ॥

उत्सवं कर्तुकामश्च प्रथमे तरुणालये ।
ध्वजं बालालयाग्रे तु समारोप्योत्सवं चरेत् ॥ ३ ॥

जलान्तं वा शिलान्तं वा खात्वा भूमिं समन्ततः ।
वालुकाभिः प्रपूर्यैव जलेन सहितं शनैः ॥ ४ ॥

मुसलैर्हस्तिपादैश्च दारुतुण्डैर्बृहत्तरैः ।
दृढीकृत्य तु सर्वत्र जलेनैव प्रपूरयेत् ॥ ५ ॥

प्राचीसाधनम्

तत्र शङ्कुं प्रतिष्ठाप्य दिक्परिच्छेदमाचरेत् ।
तेन प्राचीं विनिश्चित्य शङ्कुना श्रवणेन वा ॥ ६ ॥

यथोक्तविधिना तत्र कृत्वा च प्रथमेष्टकाम् ।
आरभेत विमानं तु पञ्चहस्तादिभेदतः ॥ ७ ॥

मानलक्षणम्

परमाणुरणूरेणुः केशा लिक्षास्तिला यवाः ।
क्रमादष्टगुणैरेतैर्मानाङ्गुलमुदाहृतम् ॥ ८ ॥

स्वहस्तेनाष्टतालो यस्स वै मध्यमपूरुषः ।
तस्य दक्षिणहस्तस्य मध्यमाङ्गुलिमध्यमम् ॥ ९ ॥

पर्व दीर्घं ततं वाऽपि मात्राङ्गुलमुदाहृतम् ।
मानमात्राङ्गुले चैते उत्तमे परिकीर्तिते ॥ १० ॥

तदष्टांशैकहीनं तु मध्यमं परिकीर्तितम् ।
सप्तांशैकविहीनं तु कनिष्ठाङ्गुलमीरितम् ॥ ११ ॥

चतुर्विंशत्यङ्गुलिभिः हस्तः किष्कुरिति स्मृतः ।
अङ्गुलैः पञ्चविंशद्भिः प्राजापत्य उदाहृतः ॥ १२ ॥

षड्विंशद्भिर्धनुर्मुष्टिः सप्तविंशैर्धनुर्ग्रहः ।
भूमेर्देवालयादीनां मानं मानाङ्गुलेन वै ॥ १३ ॥

गृहं शय्याऽऽसनं यानं पात्रमायुधमेव च ।
इध्मस्रुवस्रुचजुह्वादीन् कुर्यान्मात्राङ्गुलेन वै ॥ १४ ॥

भेदो मात्राङ्गुलस्यैव शाखाङ्गुलसमाह्वयः ।
मुष्टिमध्यप्रमेयः स्यात्सोऽग्निकुण्डादिकल्पने ॥ १५ ॥

तस्य मात्राङ्गुलस्यैव मध्यमाधमकल्पने ।
पञ्चहस्तादहीनं तु विमानं परिकल्पयेत् ॥ १६ ॥

विस्तारद्विगुणोत्सेधं कल्पयेत्तु विधानवित् ।
एकांशकं तदष्टांशं दशमं च गलान्तकाः ॥ १७ ॥

अंशकौ पादशिखरौ कल्पयेच्छिल्पिनाऽऽलयम् ।
गण्यालंकारभेदादि वासाधिकरणोक्तवत् ॥ १८ ॥

गर्भन्यासोक्तमार्गेण गर्भन्यासं समाचरेत् ।
समाप्ते तु विमाने तु पुनर्मूर्धेष्टकां न्यसेत् ॥ १९ ॥

ध्रुवबेरकल्पनप्रकारः

शूलस्थापनमार्गेण शूलं वा शैलमेव वा ।
संस्थाप्य च यथामार्गं ध्रुवबेरं प्रकल्पयेत् ॥ २० ॥

ध्रुवबेरानुरूपञ्च कौतुकं परिकल्पयेत् ।
प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत् ॥ २१ ॥

सद्यश्चेत्त्वरितः कर्तुं शरीरानित्यतादिना ।
लौहं वा दारवं वापि बिम्बमर्चितमेव[1] वा ॥ २२ ॥

यागशालां प्रकल्प्यैव पञ्चाग्नीन्परिकल्पप्य च ।
बालालयप्रतिष्ठार्थमाचार्यं परिकल्प्य च ॥ २३ ॥

बालालयप्रतिष्ठार्थमिष्टकार्थं तथैव च ।
शूलसंस्थापनार्थं च कल्पयेदृत्विजः पृथक् ॥ २४ ॥

सम्भृत्य सर्वसम्भारांस्तथा शूलांस्तथेष्टकाः ।
पूर्वरात्रौ विशेषेण कृत्वा सद्योऽङ्कुरार्पणम् ॥ २५ ॥

क्रमाच्च गार्हपत्यादिकुण्डेष्वाघारमाचरेत् ।
कृत्वा जङ्गमबेरस्य नेत्रोन्मेषाधिवासने ॥ २६ ॥

कुम्भं संसाध्य विधिना सप्तभिः कलशैः पुनः ।
सोपस्नानैश्च संस्नाप्य कुम्भं [2]चापि प्रपूजयेत् ॥ २७ ॥

तत्कुम्भोदिततीर्थैश्च विधिना प्रोक्षणादनु ।
( बद्ध्वा प्रतिसरं तद्वच्छयने शाययेत्तथा )
हौत्रं प्रशंस्य चाऽवाह्य निरुप्याज्याऽहुतीर्यजेत् ॥ २८ ॥

बालालयप्रतिष्ठोक्तहोमं पूर्वं जुहोति च ।
इष्टका वा शिला वाऽथ स्नापयेत्कलशैस्तथा ॥ २९ ॥

इष्टकाश्च पृथग्वेद्यामधिवास्य यथाविधि ।
प्रोक्तं यथेष्टकान्यासे तथा होमं समापयेत् ॥ ३० ॥

शूलं वा शैलबेरं वा स्नापयेत्कलशैस्तथा ।
बद्ध्वा प्रतिसरं तद्वच्छयने शाययेत्पृथक् ॥ ३१ ॥

---

1. याचितमेव. ई. 2 प्रोक्षयेत्तथा. ई.

नृत्तैर्गीतैश्च वाद्यैश्च रात्रिशेषं निनीय च ।
प्रातस्स्नात्वा विधानेन (सूक्तानि च जपेत्तथा ॥ ३२ ॥

मुहूर्ते समनुप्राप्ते) पूर्वं भूमिं परीक्ष्य च ।
कर्षयित्वा समास्तीर्य तृणं गोभ्यो निवेद्य च ॥ ३३ ॥

बालालये प्रतिष्ठाप्य पुनराद्येष्टकां न्यसेत् ।
(नित्यपूजामविच्छिन्नां तत्र सम्यक्प्रकल्पयेत्)
गर्भगेहं विनिश्चित्य तद्घनं दृढकुट्टिमम् ॥ ३४ ॥

अधिष्ठानावसानान्तं कल्पयित्वा तु तत्र वै ।
शूलं वा शैलबेरं वा स्थापयेत्पूर्ववत्सुधीः ॥ ३५ ॥

परितः पञ्जरं कृत्वा विमानं कल्पयेद्बहिः ।
अथवा यागशालायां मध्ये वेदीः पृथक्पृथक् ॥ ३६ ॥

बालालयेष्टकाशूलस्थापनार्थं तथैव च ।
तस्य तस्य मुखे सभ्यं कुण्डं कृत्वा पृथक्पृथक् ॥ ३७ ॥

कुम्भं संसाध्य संस्नाप्य हुत्वा संस्थापयेत्क्रमात् ।
एवं कर्तुमशक्तश्चेद्ध्रुवबेरं च कौतुकम् ॥ ३८ ॥

शैलं ध्रुवार्चाबेरं वा प्रतिष्ठाप्य समर्चयेत् ।
ब्राह्मादिपैशाचान्तेषु योगादीन् निक्षिपेत्क्रमात् ॥ ३९ ॥

सर्वाङ्गसुन्दरं बेरं कृत्वा चोक्तप्रकारतः ।
अक्ष्युन्मेषाधिवासौ च कारयित्वा यथाविधि ॥ ४० ॥

शूलस्थापनमार्गेण पूर्वं संस्थाप्य शिल्पिना ।
महाप्रतिष्ठामार्गेण प्रतिष्ठां पुनराचरेत् ॥ ४१ ॥

---

1. कुण्डलितं आ. न दृश्यते ।

एकबेरप्रतिष्ठां च सद्यः कर्तुं यदीच्छति ।
पूर्वोक्तेनैव मार्गेण रात्रौ होमं समाप्य च ॥ ४२ ॥

प्रातर्भूमिं परीक्ष्यैव कर्षयित्वा तथा भुवम् ।
घनभित्तिं च कृत्वा तु तत्र संकल्पयेत्पुनः ॥ ४३ ॥

पञ्जरं परितः कृत्वा विमानं कल्पयेद्बहिः ।
(ब्रह्मस्थानप्रतिष्ठा चेद्वर्णयुक्तं न कारयेत्
दैविके मानुषे चैव स्थापयेच्चेद्विशेषत
वर्णयुक्तं यदीच्छेच्चेच्छर्करादिक्रमाच्चरेत्
कौतुकं पूर्ववत्कृत्वा प्रतिष्ठां पुनराचरेत्
एवमेव कृतं यत्तद्राजराष्ट्रविवर्धनम्
तस्मात्सर्वप्रयत्नेन शर्करादीन्क्रमाच्चरेत् )
विमानसमविस्तारमग्रमण्डपमुत्तमम् ॥ ४४ ॥

[1]तदर्धं मध्यमं प्रोक्तं ह्यन्तरेऽष्टांशभाजिते ।
एकैकांशाधिकं चैव नवधा मुखमण्डपम् ॥ ४५ ॥

[2]त्रयाणामुत्तमादीनामन्तरालं प्रकल्पयेत् ।
मण्डपं तत्र[3] वर्गाढ्यं कल्पयित्वा यथाविधि ॥ ४६ ॥

विमानसमविस्तारं प्रथमावरणं स्मृतम् ।
पुरस्ताद्द्विगुणं तस्मादग्रमण्डपपूर्वतः ॥ ४७ ॥

द्विगुणं पश्चिमं केचिदिच्छन्ति मुनिसत्तमाः ।
विमानद्वारदिग्द्वारं प्रथमावरणं स्मृतम् ॥ ४८ ॥

अन्यथा यदि कुर्वीत राजा राष्ट्रं विनश्यति ।
ग्रामस्य यजमानस्य महती च विपद्भवेत् ॥ ४९ ॥

---

1. तदर्धमधमं. ई. 2. षण्णां चैव. ई. 3. त्रिवर्गाढ्यं. ई.

तस्मात्सर्वप्रयत्नेन प्रथमावरणक्रमम् ।
विमानद्वारदिग्द्वारं प्रासादार्धसमुच्छ्रयम् ॥ ५० ॥

अवकाशवशाद्द्वारं द्वितीयावरणादिषु ।
विमानगर्भगेहस्य स्नापनस्यालयस्य च ॥ ५१ ॥

तथैव यागशालायाः प्राकारेषु महानसे ।
द्वारमन्तर्मुखं विद्यादन्येषां तु बहिर्मुखम् ॥ ५२ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
भूपरीक्षादिप्रतिष्ठोक्तसर्वकर्मणां सद्योविधिर्नाम
तृतीयोऽध्यायः[1] ॥

श्रीविखनसे नमः

---

1. ४ अध्यायः । ई.

# चतुर्थोऽध्यायः ।



मूलागारकल्पनम्

पञ्चहस्तादिभेदैस्तु बालगेहस्वरूपकम् ।
विमानं परिकल्प्यैव सर्वालङ्कारमर्पयेत् ॥ १ ॥

सप्तांशेष्वंशिते तारे रसबाणयुगाधिकम् ।
द्विगुणं द्विगुणादूर्ध्वं वसुबाणक्रमेण च ॥ २ ॥

( सप्तषट्पञ्चवेदाग्निभागे त्वंशाधिकं तु वा )
पञ्चधोत्सेधमुद्दिष्टं शान्तिकादिक्रमेण वै ।
शान्तिकं पौष्टिकं जय्यमद्भुतं सार्वकामिकम् ॥ ३ ॥

आयादिसंग्रहः

त्रिगुणेऽष्टहृते तारे स्मृतं योनिर्ध्वजादिकम् ।
नाहे नवहृते सप्तहृते सौरादिकं दिनम् ॥ ४ ॥

उत्सेधेऽष्टगुणे सप्तविंशत्यपहृते दिनम् ।
नाहे त्रिगुणिते त्रिंशद्धृते तिथिरुदाहृता ॥ ५ ॥

उत्सेधेऽष्टगुणे भानुहृते चायुर्विनिर्दिशेत् ।
तारे नवगुणे चाष्टहृते शेषं व्ययो भवेत् ॥ ६ ॥

गुणैर्योनिं व्ययाधिक्यं वारान् भौमार्किभास्वताम् ।
वैनाशिकशशाङ्काष्टविपत्प्रत्यरनैधनान् ॥ ७ ॥

मर्त्यासुरर्क्षयोगं च यत्नतः परिवर्जयेत् ।
गणयेत्कर्तृभान्तं वा वास्तुभान्तमतोऽन्यथा ॥ ८ ॥

सिद्धामृतवरैर्योगैस्त्याज्या अपि शुभावहाः ।
शान्तिकेऽर्धाष्टभागन्तु पूर्वोक्तं गण्यमर्पयेत् ॥ ९ ॥

एकभूमौ शान्तिकादिलक्षणम्

मुनिभिस्तद्वदेवोक्तं सर्वदेशिकमन्दिरम् ।
नवांशे पौष्टिकोत्सेधे सार्धपादांशकं तलम् ॥ १० ॥

द्व्यंशकं चरणं सार्धपादांशं च चतुर्गुणम् ।
एकांशं गलमानं स्यात् द्व्यंशकं शिखरोदयम् ॥ ११ ॥
एकांशं स्थूपिकोत्सेधमेवं पौष्टिककल्पनम् ।
दशांशे जयदोत्सेधे स्थूपिका प्रस्तरं तथा ॥ १२ ॥
एकांशं सार्धनयनं चरणं शिखरोऽग्नयः ।
सार्धांशन्तु गलोत्सेधमेवं जयदमीरितम् ॥ १३ ॥
( षण्मन्विषुरसार्केषु भागे षड्वर्गमेव वा )
रुद्रांशे सदनोत्सेधे सपादांशं तलोदयम् ।
सार्धाक्षमङ्घ्रितुङ्गं स्यादेकांशं प्रस्तरोदयम् ॥ १४ ॥
ग्रीवोदयं च सार्धांशं सार्धांशं शिखरोदयम् ।
सपादं शिखरोत्सेधमेवमद्भुतमीरितम् ॥ १५ ॥
धात्वंशे हर्म्यतुङ्गे स्यात्तलं तद्द्विगुणांशकम् ।
त्र्यंशकं शिखरोत्सेधमेकांशं स्थूपिकोदयम् ॥ १६ ॥
सार्वकामिकमित्येतदेकभूमौ विशेषतः ।
द्वितले शान्तिकादि द्वितले शान्तिकोत्सेधे चतुस्सप्तांशभाजिते ॥ १७ ॥
अधिष्ठानं त्रिभिर्भागं षड्भागं चक्रमग्निभिः ।
पादोदयं तु पञ्चांशं द्व्यंशकं मञ्चमीरितम् ॥ १८ ॥
वितर्दिका शशी ग्रीवा द्विभागं शिखरोदयः ।
अध्यर्धचतुरंशं स्यात्स्थूपिका सार्धमंशकम् ॥ १९ ॥
पौष्टिके द्वितलोत्सेधे चतुस्त्रिंशद्विभाजिते ।
सार्धांशकमधिष्ठानं त्रिगुणं चरणोदयम् ॥ २० ॥
साग्न्यंशं प्रस्तरोत्सेधं षड्भागं चरणोदयम् ।
तदर्धं मञ्चतुङ्गं स्याद्वेदिकैकेन कल्प्यते ॥ २१ ॥

सार्धाग्न्यंशं गलोत्सेधं शरांशं शिखरोदयम् ।
सार्धांशं स्थूपितुङ्गं स्यादेतत्सर्वसुखावहम् ॥ २२ ॥
जयदस्य त्रयस्त्रिंशद्भागे सार्धानलं धरा ।
सप्ताङ्घ्रिस्तलमंशं स्याद्रसाङ्घ्रिर्मञ्चमग्निभिः ॥ २३ ॥
वेदिकैकं गलं सार्धं द्वक्छरांशं तु मूर्धनि ।
सार्धांशं स्थूपितुङ्गं स्याज्जयदालयमीरितम् ॥ २४ ॥
षड्भागे त्वद्भुतोत्सेधे चतुरंशं तलोदयम् ।
(अष्टांशं चरणोत्सेधं सार्धाग्निः प्रस्तरोदयम् )
सप्तांशं चरणोत्सेधं मञ्चोत्सेधं त्रियंशकम् ॥ २५ ॥
वेदिकैकं गलं त्र्यंशं भूतांशं शिखरोदयम् ।
स्थूपिका सार्धपादं स्यादेवमद्भुतमीरितम् ॥ २६ ॥
चत्वारिंशद्भागिके हर्म्यतुङ्गे
वेदा भूमावष्टपादौ च मञ्चम् ।
पादेनार्धं सप्तभागं तलोऽग्निः
वेदिर्द्वाभ्यां वह्निभिः कन्धरोच्चम् ॥ २७ ॥
सप्तांशं शिखरोत्सेधं सार्धांशं स्थूपिकोदयम् ।
अद्भुते शान्तिकं गण्यं योजयेत्सर्वदेशिकः ॥ २८ ॥
त्रितले शान्ति-कादि
त्रितले शान्तिकोत्सेधे चतुर्विंशतिभाजिते ।
अधिष्ठानं द्व्यंशकं स्याद्वेदभागं पदोदयम् ॥ २९ ॥
अक्षांशं प्रस्तरोत्सेधं सत्रिपादाग्निरङ्घ्रयः ।
सार्धभागं तु मञ्चं स्यात्सार्धाग्निश्चरणोदयम् ॥ ३० ॥
सपादांशन्तु मञ्चोच्चं सत्रिभागं वितर्दिका ।
ग्रीवोत्सेधं शिवांशं स्याच्छिखरं सार्धवह्निभिः ॥ ३१ ॥

एकांशं स्थूपिकोत्सेधमेवं त्रितलशान्तिकम् ।
पौष्टिके सदनोत्सेधे चतुर्विंशतिभाजिते ॥ ३२ ॥

अधिष्ठानं द्वियंशं स्याद्वेकांशं चरणोदयम् ।
प्रस्तरोत्सेधमष्टांशं सत्रिपादाग्निरङ्घ्रयः ॥ ३३ ॥

मञ्चं सार्धांशकं पादं साग्निरध्यर्धकं तलम् ।
एकांशं वेदिकोत्सेधं ग्रीवामानं तथैव च ॥ ३४ ॥

त्रियंशं शिखरोत्सेधं पादोनांशं शिखोदयम् ।
जयदे हर्म्यतुङ्गे तु सप्तविंशतिभाजिते ॥ ३५ ॥

मुखोदयं द्व्यंशतलं द्व्यंशं च चरणोदयम् ।
द्वियंशं प्रस्तरोत्सेधं चतुर्भिश्चरणोदयम् ॥ ३६ ॥

पादहीनं द्विभागेन प्रस्तरोत्सेधमिष्यते ।
सार्धाग्न्यंशं तु पादोच्चमध्यर्धांशन्तु मञ्चकम् ॥ ३७ ॥

सोमांशं वेदिकामानं गलमानं द्विभागतः ।
वेदांशं शिखरोत्सेधं सपादांशं शिखोदयम् ॥ ३८ ॥

अद्भुते सदनोत्तुङ्गे द्विचत्वारिंशत्तदंशके ।
सार्धाग्न्यंशमधिष्ठानं सप्तांशं चरणोदयम् ॥ ३९ ॥

अधिष्ठानसमं मञ्चं सार्धषट् चरणोदयम् ।
अग्न्यंशं प्रस्तरोत्सेधं पादमानं षडंशकम् ॥ ४० ॥

प्रस्तरं सार्धमक्षांशं सोमांशं वेदिकोदयम् ।
ग्रीवामानं द्विभागेन पञ्चांशं शिखरोदयम् ॥ ४१ ॥

पक्षांशं स्थूपिमानं तु शालादीन्सर्वदेशिकः ।
सार्वकामिकहर्म्योच्चे षडष्टांशविभाजिते ॥ ४२ ॥

पादांशं तु धरातुङ्गं पादस्यार्धाष्टकांशकः ।
अधिष्ठानसमं मञ्चमष्टांशं चरणं ततः ॥ ४३ ॥

मञ्चं पादोनवेदांशं पादपादाधिकाचलम् ।
अध्यर्धाग्न्यंशकर्णं च शिवांशा वेदिका भवेत् ॥ ४४ ॥

द्व्यंशं गलं शरांशन्तु शिखरं स्थूपिकावनिः ।
गण्येत्वन्योन्यसंकीर्णे ग्रामकर्तृविनाशनम् ॥ ४५ ॥

विस्तारं पादबाह्यं स्यात् खुरास्थूप्यन्तमुन्नतम् ।
अग्निभागैकभागं वा भूतभागेऽग्निभागकम् ॥ ४६ ॥

युगांशमृषिभागे तु पञ्चांशं वा नवांशके ।
ऋत्वंशं रुद्रभागे तु वस्वंशं षोडशांशके ॥ ४७ ॥

नवांशं सप्तपङ्क्त्यंशे व्यासार्धं गर्भगेहकम् ।
शेषं कुड्यविशालं स्यादेकभूमिविमानके ॥ ४८ ॥

नवांशे धामविस्तारे हारं चैकांशकेन तु ।
हारान्तरं तथैकांशमेकांशं भित्तिविस्तरः ॥ ४९ ॥

त्र्यंशकं गर्भगेहं स्यान्मन्दिरे तु द्विभूमिके ।
विस्तारे रसभागे तु सोमांशं कूटविस्तरम् ॥ ५० ॥

शालातारं तु द्व्यंशं स्याच्छेषं पञ्जरहारके ।
एवं द्वितलविन्यासं त्रितलं शृणु तत्पृथक् ॥ ५१ ॥

रुद्रभागेंऽशकं हारं तारहारान्तरं तथा ।
कुड्यस्य सममेकांशं शेषं गर्भगृहं भवेत् ॥ ५२ ॥

आदिभूमिघनं केचिदिच्छन्ति मुनिसत्तमाः ।
तारेऽष्टांशे कर्णकूटं शिवांशं शालमुच्यते ॥ ५३ ॥

सपञ्जरं सार्धभागं शेषं हारं तथैव च ।
तदूर्ध्वं नासिकोष्ठं च नीडं त्रा पञ्जरस्य च ॥ ५४ ॥

ऊर्ध्वभूमौ रसांशे तु कूटमेकांशकं भवेत् ।
द्व्यंशं कोष्ठं शिवं नीडं शेषं हारान्तरं भवेत् ॥ ५५ ॥

ऊर्ध्वभूम्यग्निभागे तु मध्ये भद्रं शिवांशकम् ।
एवं त्रितलविन्यासमुक्तमुद्देशमानतः ॥ ५६ ॥

वासाधिकारे यत्प्रोक्तमनुक्तं शिल्पशास्त्रतः ।
अधिष्ठानोदये भूतभागषड्भागभाजिते ॥ ५७ ॥

सोमाक्ष्यग्निचतुर्बाणषट्सप्ताष्टांशकोच्छ्रितम् ।
साधारणे तु पूर्वार्धमब्जोपेतं ततः परम् ॥ ५८ ॥

उपपीठे तलाधस्ताज्जांगले तत्र कल्पयेत् ।
(दण्डं सार्धद्विदण्डं वा त्रिदण्डं वाऽऽस्यनिर्गमम्
सरस्सरित्समुद्रान्तपुलिनेष्वालयं यदि
उपपीठं तलोत्तुङ्गं त्रिचतुः पञ्चषड्गुणम्
एकभक्तिं विनिष्क्रान्तं तलोर्ध्वे हर्म्यखण्डकम्
एवं चूलीयुतं वापि परितः कल्पयेत्सुधीः
सान्तर्मण्डलकं चेत्तद्विभक्तसमनिर्गमम्
तन्निर्गमतुरीयांशं भित्तिव्यासमुदाहृतम्
द्व्यंशकं मालिका पङ्क्तिः शेषं चर्यापदं भवेत् )
पादमार्गे गलेऽधस्ताद्वेदिकां परिकल्पयेत् ॥ ५९ ॥

वेदिकारहितं केचित्पादवर्गं वदन्ति हि ।
ऋजुभित्तिमधिष्ठानं केचिदाहुस्सपट्टिकम् ॥ ६० ॥

(कूहताद्यादिरहितं? पादमत्र सबोधिकम्
पङ्क्त्यां भाव्यं पादमध्यं शालामण्डपयोः स्मृतम् )

मण्डपं तत्त्रिवर्गाढ्यमृजुभित्तिकमेव वा ।
ऋजुभित्तितले पादं केवलं स्यात्सबोधिकम् ॥ ६१ ॥

मध्यस्तम्भविहीनं च लुपाच्छन्नं च मण्डपम् ।
तन्मध्ये स्नपनश्वभ्रमौपासनविधानतः ॥ ६२ ॥

आस्थाने पश्चिमे भागे कुर्यादौपासनं शुभम् ।
पञ्चभागे तदुत्सेधे भागं पद्मं सपादकम् ॥ ६३ ॥

पादोत्सेधं सपादं स्यादेकांशं प्रस्तरं भवेत् ।
उपपीठतलोत्सेधे अधिष्ठानोक्तवद्भवेत् ॥ ६४ ॥

तत्र लांगलकुड्यस्थमधिष्ठानं प्रकल्पयेत् ।
तलोपरि तले नेष्टमिति पूर्वजशासनम् ॥ ६५ ॥

अत्रानुक्तानि सर्वाणि शिल्पशास्त्रोदितानि वै ।
शिल्पशास्त्रोक्तमार्गेण शिल्पिभिः कारयेद्बुधः ॥ ६६ ॥

प्राकारलक्षणम्

रक्षार्थं परिवाराणां स्थापनार्थं तथैव च ।
प्राकाराणां प्रवक्ष्यामि लक्षणं तु तपोधनाः ॥ ६७ ॥

विमानसमविस्तारं प्रथमावरणं स्मृतम् ।
अथ पादाधिकं वापि कुर्यादर्धाधिकं तु वा ॥ ६८ ॥

द्वितीयं द्विगुणं तस्मादन्योन्यद्विगुणं बहिः ।
पञ्चमावरणान्तानि प्राकाराणि प्रकल्पयेत ॥ ६९ ॥

एकावरणमात्रे चेत्परितो द्विगुणं भवेत् ।
कृत्वा तच्चतुरश्रं च मुखायामं प्रकल्पयेत् ॥ ७० ॥

द्विगुणं द्विगुणार्धं वा त्रिगुणं त्रिगुणार्धकम् ।
चतुर्गुणमुखायामं मुखमण्टपपूर्वतः ॥ ७१ ॥

समप्रमाणं कुर्वीत दक्षिणोत्तरपश्चिमम् ।
यदि पश्चिमवृद्धिस्तु स्थाननाशो भवेद्ध्रुवम् ॥ ७२ ॥

दक्षिणोत्तरवृद्धिश्चेद्ग्रामस्सर्वोऽपि नश्यति ।
केचित्प्राकारविस्तारं हस्तमानं वदन्ति हि ॥ ७३ ॥

अधमं मध्यमं श्रेष्ठं विस्तारस्तु त्रिधा त्रिधा ।
एकावरणमात्रे च हस्तमानं यदीच्छति ॥ ७४ ॥

पञ्चहस्तं समारभ्य द्विद्विहस्तविवर्धनात्[1] ।
एकविंशतिहस्तान्तं नवधा परिकल्पयेत् ॥ ७५ ॥

विमानं येन हस्तेन प्रमितं तेन बाहुना ।
प्राकारं मण्टपं कुर्यान्नाधिकेन कदाचन ॥ ७६ ॥

हस्तमानेन कुर्याच्चेदायादि न परीक्षयेत् ।
आयादिविचारविस्तरः
आहृत्य भुजया कोटिं तद्राशित्रिगुणीकृतम् ॥ ७७ ॥

अष्टभक्तावशिष्टं तद्योनिरित्यभिधीयते ।
अष्टभिर्वर्धिते तस्मादायं स्याद्भानुभिर्हृते ॥ ७८ ॥

त्रिगुणे दशभिर्भक्ते व्ययमित्युपदिश्यते ।
अष्टाभिर्वर्धिते सप्तविंशत्यपहृते दिनम् ॥ ७९ ॥

त्रिशताप्ते तिथिर्वारं सप्तभक्तावशिष्टकम् ।
एवमायादिभिष्षड्भिरनुकूलं प्रकल्पयेत् ॥ ८० ॥

तिथिवारौ वदन्त्येके नाहप्रभृति[2] वर्धिते ।
एवं ग्रामादिविन्यासेऽप्यायादिपरिशोधनम् ॥ ८१ ॥

तताहतायतके मण्डपानां ततेन वा ।
तत्राष्टवर्धिते ऋक्षं हृते लब्धं व्ययो भवेत् ॥ ८२ ॥

पूर्ववत्तु मुखायामं हस्तमानेऽपि कल्पयेत् ।
अनपायिनां स्थानम्
प्राकाराणां मुखायामं चतुर्धा परिकल्प्य च ॥ ८३ ॥

चक्रं ध्वजं च शङ्खं च यूथेशं चाक्षहन्तकम् ।
मण्डपादीनां स्थानम्
तत्र तत्र तृतीयांशे स्थापयेच्च यथाक्रमम् ॥ ८४ ॥

सोपानं प्रथमे कुर्यान्मण्डपार्धप्रमाणतः ।
द्वितीयांशे द्वितीये तु कुर्यात्स्नपनमण्डपम् ॥ ८५ ॥

---

1. पञ्चमावरणान्तानां त्रयस्त्रिंशत्करावधीति श्लोकार्धं खकोशे अधिकं दृश्यते ।
2. नाहे प्रहृति । ई.

तृतीयांशे तृतीये तु कुर्यादास्थानमण्डपम् ।
चतुर्थावरणे वाऽथ पञ्चमावरणेऽथवा ॥ ८६ ॥

द्वितीयांशे तटाकं च मण्डपं च तदुत्तरे ।
परितः पुष्पवृक्षांश्च कल्पयेद्भक्तिसंयुतः ॥ ८७ ॥

[1]नित्यं नृत्तं प्रकुर्वीत नित्यस्नपनमण्डपे ।
[2]आस्थानमण्टपं चैव तथा स्नपनमण्टपम् ॥ ८८ ॥

दक्षिणामुखमैशान्ये सौम्ये वाऽपि प्रकल्पयेत् ।
श्रीभूतश्चैव गरुडं कुर्यात्सोपानमण्डपे ॥ ८९ ॥

चतुस्सोपानसंयुक्तं कुर्यात्स्नपनमण्डपम् ।
प्राक्सोपाने कुम्भपूजां विदध्या-
द्याम्ये होमं वारुणे तैलकर्म ।
कृत्वोदीच्यां तैलमोक्षं विधिज्ञः
श्वभ्रे मध्ये स्थापयेत् स्नापयेच्च ॥ ९० ॥

होमाद्वा? प्राच्यपादाद्वा भित्त्यभ्यन्तरमुत्तमम् ।
मध्यमं भित्तमध्यं स्याद्भित्तिबाह्यमथाधमम् ॥ ९१ ॥

कुर्याच्छालां त्रिवर्गाढ्यामृजुभित्तिमथापि वा ।
विमानोत्सेधतुल्यां वा त्रिपादं [3]वोदयं मतम् ॥ ९२ ॥

इति श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां
क्रियाधिकारे शान्तिकादिविमानालङ्कारविधिर्नाम
चतुर्थोऽध्यायः[4] ॥

श्रीविखनसे नमः

---

1. पाद्यं. स्व ई. 2. मण्डपे. । ई. 3. द्विगुणं. ई. 4, ५: अध्यायः. ई.

## पञ्चमोऽध्यायः ।



आद्येष्टकान्यसः. वक्ष्याम्याद्येष्टकान्यासं विमानादिप्रकल्पने ।
वास्तुहोमावसाने तु पञ्चाग्नीन् परिकल्पयेत् ॥ १ ॥

आघारान्ते यजेत्तेषु देवं ध्यायंश्च वैष्णवम् ।
होतव्यं पौरुषं सूक्तमैन्द्रमाहवनीयके ॥ २ ॥

आग्नेयं च विधानेन [1]व्याहृत्यन्तं पृथक् पृथक्
अन्वाहार्ये विष्णुसूक्तं याम्यं नैर्ऋतमेव च ॥ ३ ॥

वैष्णवं गार्हपत्याग्नौ वारुणं वायुदैवतम् ।
सौम्यमीशानदैवत्यमावसथ्ये सवैष्णवम् ॥ ४ ॥

सभ्ये तु सर्वदैवत्यं विष्णुसूक्तं सवैष्णवम् ।
प्राच्यामाहवनीयाग्नेः श्वभ्रे संस्थाप्य ताश्शिलाः ॥ ५ ॥

समभ्यर्च्य चतुर्वेदांस्तासु वै प्रागुपक्रमात् ।
संस्नाप्य सप्तकलशैरिष्टकास्ताः पृथक् पृथक् ॥ ६ ॥

पश्चिमस्यां ततस्सभ्याद्धान्यराश्युपरि क्रमात् ।
पञ्चवस्त्राणि चास्तीर्य वाससा वेष्टयेच्च ताः ॥ ७ ॥

समारोप्यार्चयेत्तत्र चतुर्वेदाधिदेवताः ।
बद्ध्वा प्रतिसरं तासां शाययेत्ताः पृथक् पृथक् ॥ ८ ॥

द्वाराग्रे पुष्पसंयुक्तं वस्त्रैराच्छाद्य चोपरि ।
प्रातः स्नात्वा विधानेन मुहूर्ते तु [2]शुभे बले ॥ ९ ॥

गृहीत्वा स्थापकास्तास्ताः ग्राममालयमेव वा ।
जपन्तः शाकुनं सूक्तं स्वस्तिसूक्तसमन्वितम् ॥ १० ॥

---

1. आ. होतव्यं च. 2. ख. शुभोज्ज्वले

परीत्यान्तः प्रविश्यैव देवं ध्यायन्त एव वै ।
द्वारदक्षिणभागे तु स्थापयेदिष्टकाशिलाः ॥ ११ ॥

एकाक्षरात्मसूक्तान्ते [1]चतुर्वेदादिमन्त्रतः ।
उत्तराग्रं तु पूर्वस्यां प्रागग्रं चैवदक्षिणे ॥ १२ ॥

प्रतीच्यामुत्तराग्रं स्यादुदीच्यां पूर्वशीर्षकम् ।
मध्ये रत्नं सुवर्णं वा ध्रुवसूक्तं जपन्न्यसेत् ॥ १३ ॥

अथातः शयनात्प्राच्यामग्नावाहवनीयके ।
पौरुषं विष्णुसूक्तं च वैष्णवं च ततः परम् ॥ १४ ॥

एकाक्षरादिसूक्तं च दिग्दैवत्यसमन्वितम् ।
[2]दशकृत्वस्तथा हुत्वा सर्वं पूर्ववदाचरेत् ॥ १५ ॥

तथैव गोपुराणाञ्च सन्न्यसेद्द्वारदक्षिणे ।
प्रवेशदक्षिणे न्यासो गोपुराणां विशिष्यते ॥ १६ ॥

प्राकाराणां च सर्वेषामैशान्ये नैर्ऋतेऽथवा ।
प्राग्द्वाराद्दक्षिणे कुर्यादिष्टकास्स्नपनालये ॥ १७ ॥

आस्थानमण्डपादीनामैशान्ये प्रथमेष्टकाम् ।
[3]नास्ति चेत्तत्र तद्भित्तिः भित्त्यैशान्येऽथवा न्यसेत ॥ १८ ॥

शालाश्रयाणां सर्वेषां नाचरेत्प्रथमेष्टकाम् ।
महानसस्य चाग्नेय्यां कल्पयेत्प्रथमेष्टकाम् ॥ १९ ॥

[4]शालादीनां तु सर्वेषां सभ्यमौपासनं तु वा ।
प्राकारेषु यजेत्तत्तत्परिवाराधिदैवतम् ॥ २० ॥

द्वारेषु द्वारपालानां यजेन्मन्त्रांश्च गोपुरे ।
चतुर्वेदादिमन्त्रांश्च वारुणं स्नपनालये ॥ २१ ॥

---

1. ख. चतुर्वेदादिमन्त्रकैः आ. 2. आ. दक्षिणाग्नौ तथाहुत्वा. 3. आ. अस्यश्लोकार्धस्य स्थाने एवमेव प्रकारेण हीशान्यां भीत्तिरेब वा. इति ख कोशे दृश्यते। 4. सालाश्रय • इत्यादि.

श्रीभूमिसूक्तमन्त्रांस्तु यजेदास्थानमण्डपे ।
हवीरक्षकदैवत्यं श्रीभूसूक्तं महानसे ॥ २२ ॥

वैष्णवं विष्णुसूक्तं च पौरुषं सूक्तमेव च ।
प्राकारादिषु सर्वेषु चैकामेव शिलां न्यसेत् ॥ २३ ॥

आलये परिवाराणां तत्तन्मन्त्रं सवैष्णवम् ।
अष्टोत्तरशतं हुत्वा सन्न्यसेच्चतुरिष्टकाः ॥ २४ ॥

एष एव विशेषः स्यादन्यत्सर्वं खिलोक्तवत् ।
गर्भन्यासप्रकारः गोपुरव्यतिरिक्तानां गर्भन्यासं प्रकल्पयेत् ॥ २५ ॥

केचिन्महानसस्यापि गर्भमाहुर्मुनीश्वराः ।
न्यसेद्गोपुरगर्भे तु सौवर्णद्वारदेवताः ॥ २६ ॥

गर्भे महानसस्यापि पञ्चाग्नीन् हविरक्षकम् ।
गर्भाणि चालयोक्तानि फेलायां पूर्ववन्न्यसेत् ॥ २७ ॥

खिलोक्तेनैव मार्गेण गर्भफेलां प्रकल्प्य च ।
गर्भद्रव्याणि चाहृत्य तत्र सन्न्यस्य मन्त्रतः । ॥ २८ ॥

पिधाय च पिधानेन धान्यराश्युपरि न्यसेत् ।
रात्रावेव निधातव्यं शुभांशे च स्थिरोदये ॥ २९ ॥

ऊर्ध्वानने शुभैर्युक्ते राशौ शुद्धेऽष्टमे व्यये ।
ब्राह्मणः पट्टिकोर्ध्वे तु उपानोर्ध्वे तु भूमिपः ॥ ३० ॥

तथैकैकांगुलन्यूने सन्न्यसेद्वैश्यशूद्रयोः ।
द्वारस्य दक्षिणे भागे भित्तिमध्ये त्रिभागतः ॥ ३१ ॥

धातुस्समीपे न्यस्तव्यमिति शास्त्रस्य निश्चयः ।
तत्र विष्णुं स्मरन् बुद्ध्या स्नपनं चार्चनं तथा ॥ ३२ ॥

अधिवासं च होमं च खिलोक्तिविधिना चरेत् ।
मूर्धेष्टकान्यासः समाप्ते तु विमाने तु पुनर्मूर्धेष्टकां न्यसेत् ॥ ३३ ॥

पूर्वोक्तलक्षणोपेताः शिला वा पञ्चवेष्टकाः ।
गृहीत्वा स्थूपिशूलं च सर्वमाद्येष्टकोक्तवत् ॥ ३४ ॥

अधिवासं च होमं च स्नपनं चार्चनादिकम् ।
न्यक्षादीन् धान्यपीठे तु पूजयेत्प्रागुपक्रमात् ॥ ३५ ॥

[1]स्थूप्याधारेष्टकायां तु पूजयेत्प्रकृतिं पराम् ।
प्रातः स्नात्वा विधानेन [2]स्रग्वस्त्रालंकृतो गुरुः ॥ ३६ ॥

पूर्वोक्तैरेवमन्त्रैस्तु सन्न्यसेन्मूर्ध्नि चेष्टकाः ।
भूमिसूक्तं समुच्चार्य स्थूप्याधारेष्टकां न्यसेत् ॥ ३७ ॥

'आत्वाहर्ष' ण सूक्तेन स्थूपिशूलं पुनर्न्यसेत् ।
तत्तद्दिक्षु विमानेशान् समावाह्यार्चयेत्पुनः ॥ ३८ ॥

विमानदेवता-कल्पनम्

दक्षिणादिदिशि द्वारे द्वाराग्रे न्यक्षमर्चयेत् ।
तद्वशेनेतरान्कुर्यात्सर्वानेतान्बहिर्मुखान् ॥ ३९ ॥

द्वारेषु द्वारपालांश्च प्रकल्प्याऽवाह्य पूजयेत् ।
द्वारपालान् प्रकुर्वीत किंचिद्द्वारनिरीक्षकान् ॥ ४० ॥

अन्तरालं यदि भवेत्तत्र वै पार्श्वयोः क्रमात् ।
वक्रतुण्डं च दुर्गां च बहिर्भित्तौ प्रकल्पयेत् ॥ ४१ ॥

अग्रमण्टपभित्तौ वा पादवर्गे प्रकल्पयेत् ।
पादवर्गे गले चैव विमाने परितः क्रमात् ॥ ४२ ॥

प्रागादि पुरुषादींस्तान् पादवर्गे प्रकल्पयेत् ।
उपानाधांशमात्रेण विमानेशान्प्रकल्पयेत् ॥ ४३ ॥

इन्द्रं च दक्षिणामूर्तिं नारसिंहं पितामहम् ।
प्रागादि कल्पयेदेतान् गले लक्षणसंयुतान् ॥ ४४ ॥

---

1. स्थूपिकायष्टिकायां. ई. 2. शुक्लवस्त्राद्यलङ्कृतः. ख. 3. इन्द्रादिदिशि द्वारे वा द्वारदेवं समर्चयेत्. ई.

अथवा पुरुषादींस्तु वाराहं नारसिंहकम् ।
[1]सुखासीनं हयग्रीवं कल्पयेदथवा गले ॥ ४५ ॥

ध्रुवबेरसमं वापि पादहीनमथापि वा ।
अर्धं त्रिभागादेकं वा तेषामुत्सेध उच्यते ॥ ४६ ॥

तथा कोणेषु गरुडं प्रस्तरोपरि कल्पयेत् ।
आलयेष्वन्यदेवानां [2]वाहनानि प्रकल्पयेत् ॥ ४७ ॥

मृगेन्द्रमथवा कुर्यात् सर्वदेवालयेषु च ।
तेषामभिमुखे कुर्यात् कुण्डमौपासनं तथा ॥ ४८ ॥

कुम्भं च साधयित्वैव कलशैः प्रोक्ष्य सप्तभिः ।
हौत्रं प्रशंस्य विधिना तत्तन्मन्त्रं शताष्टकम् ॥ ४९ ॥

वैष्णवेन समायुक्तं व्याहृत्यन्तं जुहोति वै ।
प्रातः स्नात्वा समावाह्य समभ्यर्च्य निवेदयेत् ॥ ५० ॥

सप्तविंशतिभोगैश्च[3] नित्यमर्चनमुत्तमम् ।
त्रयोदशोपचारैश्च मध्यमं पूजनं स्मृतम् ॥ ५१ ॥

पुष्पमन्नसमायुक्तं निर्वपेदधमे बलिम् ।
यत्र यत्रैव वा भक्तिर्यजमानस्य जायते ॥ ५२ ॥

प्रतिष्ठाप्यार्चनं नित्यं कारयेत्तत्र तत्र वै ।
द्वारेशान् पादवर्गेषु गोपुरेषु प्रकल्पयेत् ॥ ५३ ॥

गले विमाने तान् देवान् कल्पयित्वा समर्चयेत् ।
अथवा नारसिंहं वा दुर्गां वापि सुदर्शनम् ॥ ५४ ॥

कल्पयित्वा समावाह्य नित्यं पूर्ववदर्चयेत् ।
एतेषां कौतुकं चैव कर्तुमिच्छति चेत्तथा ॥ ५५ ॥

---

1. सुखासनं, आ. 2. वाहनं न च कल्पयेत्, आ. 3. भेदैश्च, क.

पूर्वोक्तलक्षणोपेताः शिला वा पञ्चवेष्टकाः ।
गृहीत्वा स्थूपिशूलं च सर्वमाद्येष्टकोक्तवत् ॥ ३४ ॥

अधिवासं च होमं च स्नपनं चार्चनादिकम् ।
न्यक्षादीन् धान्यपीठे तु पूजयेत्प्रागुपक्रमात् ॥ ३५ ॥

[1]स्थूप्याधारेष्टकायां तु पूजयेत्प्रकृतिं पराम् ।
प्रातः स्नात्वा विधानेन [2]स्रग्वस्त्रालंकृतो गुरुः ॥ ३६ ॥

पूर्वोक्तैरेवमन्त्रैस्तु सन्न्यसेन्मूर्ध्नि चेष्टकाः ।
भूमिसूक्तं समुच्चार्य स्थूप्याधारेष्टकां न्यसेत् ॥ ३७ ॥

'आत्वाहार्ष' ण सूक्तेन स्थूपिशूलं पुनर्न्यसेत् ।
तत्तद्दिक्षु विमानेशान् समावाह्यार्चयेत्पुनः ॥ ३८ ॥

विमानदेवता-कल्पनम्

[3]दक्षिणादिदिशि द्वारे द्वाराग्रे न्यक्षमर्चयेत् ।
तद्वशेनेतरान्कुर्यात्सर्वानेतान्बहिर्मुखान् ॥ ३९ ॥

द्वारेषु द्वारपालांश्च प्रकल्प्याऽऽवाह्य पूजयेत् ।
द्वारपालान् प्रकुर्वीत किंचिद्द्वारनिरीक्षकान् ॥ ४० ॥

अन्तरालं यदि भवेत्तत्र वै पार्श्वयोः क्रमात् ।
वक्रतुण्डं च दुर्गां च बहिर्भित्तौ प्रकल्पयेत् ॥ ४१ ॥

अग्रमण्टपभित्तौ वा पादवर्गे प्रकल्पयेत् ।
पादवर्गे गले चैव विमाने परितः क्रमात् ॥ ४२ ॥

प्रागादि पुरुषादींस्तान् पादवर्गे प्रकल्पयेत् ।
उपानाधांशमात्रेण विमानेशान्प्रकल्पयेत् ॥ ४३ ॥

इन्द्रं च दक्षिणामूर्तिं नारसिंहं पितामहम् ।
प्रागादि कल्पयेदेतान् गले लक्षणसंयुतान् ॥ ४४ ॥

---

1. स्थूपिकायष्टिकायां. ई. 2. शुक्लवस्त्राद्यलङ्कृतः. ख. 3. इन्द्रादिदिशि द्वारे द्वारदेवं समर्चयेत्. ई.

अथवा पुरुषादींस्तु वाराहं नारसिंहकम् ।
[1]सुखासीनं हयग्रीवं कल्पयेदथवा गले ॥ ४५ ॥

ध्रुवबेरसमं वापि पादहीनमथापि वा ।
अर्धं त्रिभागादेकं वा तेषामुत्सेध उच्यते ॥ ४६ ॥

तथा कोणेषु गरुडं प्रस्तरोपरि कल्पयेत् ।
आलयेष्वन्यदेवानां [2]वाहनानि प्रकल्पयेत् ॥ ४७ ॥

मृगेन्द्रमथवा कुर्यात् सर्वदेवालयेषु च ।
तेषामभिमुखे कुर्यात् कुण्डमौपासनं तथा ॥ ४८ ॥

कुम्भं च साधयित्वैव कलशैः प्रोक्ष्य सप्तभिः ।
हौत्रं प्रशंस्य विधिना तत्तन्मन्त्रं शताष्टकम् ॥ ४९ ॥

वैष्णवेन समायुक्तं व्याहृत्यन्तं जुहोति वै ।
प्रातः स्नात्वा समावाह्य समभ्यर्च्य निवेदयेत् ॥ ५० ॥

सप्तविंशतिभोगैश्च[3] नित्यमर्चनमुत्तमम् ।
त्रयोदशोपचारैश्च मध्यमं पूजनं स्मृतम् ॥ ५१ ॥

पुष्पमन्त्रसमायुक्तं निर्वपेदधमे बलिम् ।
यत्र यत्रैव वा भक्तिर्यजमानस्य जायते ॥ ५२ ॥

प्रतिष्ठाप्यार्चनं नित्यं कारयेत्तत्र तत्र वै ।
द्वारेशान् पादवर्गेषु गोपुरेषु प्रकल्पयेत् ॥ ५३ ॥

गले विमाने तान् देवान् कल्पयित्वा समर्चयेत् ।
अथवा नारसिंहं वा दुर्गां वापि सुदर्शनम् ॥ ५४ ॥

कल्पयित्वा समावाह्य नित्यं पूर्ववदर्चयेत् ।
एतेषां कौतुकं चैव कर्तुमिच्छति चेत्तथा ॥ ५५ ॥

---

1. सुखासनं, अ.   2. वाहनं न च कल्पयेत्, अ.   3. भेदैश्च, क.

कौतुकं च प्रतिष्ठाप्य तदग्रे नित्यमर्चयेत् ।
[1]कल्पयित्वाऽथवा पीठं तत्तत्पार्श्वे समर्चयेत् ॥ ५६ ॥

प्रागादिचतुरो[2]वेदान् पूजयेत्स्नपनालये ।
तथैव यागशालायां शक्रमास्थानमण्डपे ॥ ५७ ॥

वरुणं यादसां नाथं जलक्रीडार्थमण्डपे ।
मण्डपेष्वथवाऽन्येषु तत्तद्दिक्पालसंयुतम् ॥ ५८ ॥

विष्वक्सेनं समभ्यर्च्य यथाशक्ति निवेदयेत् ।
एतेषु च समाप्तेषु वास्तुहोमावसानके ॥ ५९ ॥

कुम्भं संसाध्य विधिना तत्तन्मन्त्रं सवैष्णवम् ।
व्याहृत्यन्तं यजित्वा तु पुनरावाह्य पूजयेत् ॥ ६० ॥

मण्डपादिषु देवेशं संस्थाप्य च शुभोदये ।
सप्तविंशतिभोगैश्च[3] सम्पूज्यान्तः प्रवेशयेत् ॥ ६१ ॥

आधाय यागशालायां मुहूर्ते हव्यवाहनम् ।
वैष्णवेन शतं हुत्वा नित्यहोमं समाचरेत् ॥ ६२ ॥

हवीरक्षकमाग्नेय्यां पूजयेत्तु महानसे ।
देवदेवं समभ्यर्च्य पश्चात्पाकक्रियां चरेत् ॥ ६३ ॥

मण्डपादिषु कुड्येषु सुधाकर्मक्रियोपरि ।
देवस्य विजयक्रीडाविग्रहेषु यथारुचि ॥ ६४ ॥

यद्यदिच्छतिवै[4]कर्ता तत्तदाभासकर्मणा ।
[5]सर्वलक्षणसंयुक्तं कल्पयित्वाऽतिसुन्दरम् ॥ ६५ ॥

अमन्त्रकाक्ष्युन्मेषान्ते वास्तुहोमं जुहोति च ।
अक्ष्युन्मेषं तथा कृत्वा पूर्वोक्तेन विधानतः ॥ ६६ ॥

---

1. अत्र कल्पयेद्वा यथोक्ते तु विष्वक्सेनं समर्चयेत्' इति ख. कोशे दृश्य
2. आ. देवान्. 3. आ. मेदैश्च. 4 ख. कर्तुं तत्र चैव स कर्मणा. 5. ख. सर्वालङ्कार संयुक्तम्

ध्रुवशुद्धिं च कृत्वा तु कुण्डमौपासनं न्यसेत् ।
कुम्भं संसाध्य विधिना कलशैः प्रोक्ष्य सप्तभिः ॥ ६७ ॥

कुम्भं वेद्यां समारोप्य (तस्मिन्प्रतिसरं तथा ।
औपासनं च कृत्वैव) हौत्रं चैव प्रशंसयेत् ॥ ६८ ॥

वैष्णवं विष्णुसूक्तं च पौरुषं सूक्तमेव च ।
हुत्वा तदुक्तमन्त्रांश्च शतमष्टोत्तरं यजेत् ॥ ६९ ॥

प्रातरावाह्य सम्पूज्य हवींषि च निवेदयेत् ।
त्रिवेदिसहितं पीठं तत्तदग्रे प्रकल्पयेत् ॥ ७० ॥

तत्राऽवाह्य समभ्यर्च्य पूजनान्ते विसर्जयेत् ।
एवमेव पटाभासबिम्बानां स्थापनार्चने ॥ ७१ ॥

[1]एवं मूर्धेष्टकान्यासे विमानस्य कृते सति ।
शूलग्रहणमार्गेण गृहीत्वा शूलमत्र तु ॥ ७१ ॥

शूलं संस्थाप्य विधिवत् ध्रुवबेरं प्रकल्पयेत्[2] ।
गृहीत्वा वा शिलां सम्यक्स्थापयित्वा तदुक्तवत् ॥ ७२ ॥

बेरेषुयोगादिभेदाः कारयेद्ध्रुवबेरं तु योगभोगादिभेदतः ।
आसनं शयनं चैव स्थानकं चेति तत्त्रिधा ॥ ७४ ॥

चतुर्विधं तदेकैकं योगं भोगं तथैव च ।
वीरं च विरहं चैव पूर्वमेव मयोदितम् ॥ ७५ ॥

चक्रशङ्खधरं देवं योगं भोगं प्रकल्पयेत् ।
चक्रशङ्खगदायुक्तं वीरमार्गेण कल्पयेत् ॥ ७६ ॥

गदां [3]वामे वरे पाणौ कल्पयेद्विजयाय वै ।
निरायुधं तथा देवं विरहं परिकल्पयेत् ॥ ७७ ॥

---

1. हेममूर्ध्वे तु सन्न्यस्य आ. 2. अत्र ६ अध्यायसमाप्तिः दृश्यते. ख. कोशे
3. मध्ये आ.

ताम्रजं ध्रुवबेरं चेद्व्यक्तं सर्वाङ्गसुन्दरम् ।
कारयित्वा प्रतिष्ठाप्य तथा पर्वणि पर्वणि ॥ ७८ ॥

शुद्धोदैरभिषिच्यैव वस्त्राद्यैरपि भूषयेत् ।
एकबेरप्रतिष्ठा चेद्वर्णहीनं शिलामयम् ॥ ७८ ॥

लौहं वा ब्राह्मभागे तु स्थापयित्वा समर्चयेत् ।
एकबेरविधानेन लोहबेरे प्रतिष्ठिते ॥ ७९ ॥

अर्च्यमाने पुनर्गुप्ते चोरशत्रुभयादिभिः ।
स्थाने तस्य यथालाभप्रमाणेन शिलामयम् ॥ ८० ॥

संस्थाप्य जङ्गमं तस्मिन् नित्यपूजां समाचरेत् ।
चोरशत्रुभये शान्ते समुद्धृत्य पुरातनम् ॥ ८१ ॥

शिलाबेरात्समावाह्य लोहबेरे समर्चयेत् ।
अथवा लौहबेरस्य प्रमाणेन शिलामयम् ॥ ८२ ॥

कृत्वाऽचलं प्रतिष्ठाप्य ध्रुवार्चास्थापनोक्तवत् ।
लौहबेरं च [1]तत्तस्मिन् उत्सवं परिकल्पयेत् ॥ ८३ ॥

ध्रुवस्थित्यनुरोधेन परिवारस्थितिः

परिवारांश्च तान् सर्वान् तत्तदावरणेषु च ।
ध्रुवे स्थिते स्थितान्कुर्या दासीनानासने स्थितान् ॥ ८४ ॥

आसीनान्वा स्थतान्वापि शयने परिकल्पयेत् ।
विष्वक्सेनश्च विघ्नेशो रोहिण्यो मातरस्तथा ॥ ८५ ॥

ज्येष्ठा च सर्वदाऽऽसीना इति पूर्वजदर्शनम् ।
बाह्वन्तं वा स्तनान्तं वा नाभ्यन्तं वा ध्रुवस्य च ॥ ८६ ॥

ब्रह्मेशावमितं सूर्यं तत्समान्वा प्रकल्पयेत् ।
तत्त्रिभागैकभागादिमानैः कुर्याच्च कौतुकम् ॥ ८७ ॥

---

1. यस्योक्तं । ख.

देवेशाधिक्यमानेन परिवारान्न कल्पयेत् ।
(बेराणामुपादानद्रव्यनियमः) ध्रुवबेरं तु यद्द्रव्यं तद्द्रव्येण च पार्षदान् ॥ ८८ ॥

विष्वक्सेनरविस्कन्दाः दुर्गा गरुड एव च ।
शैलेऽपि [1]वा न दोषस्स्यादिति पूर्वजदर्शनम् ॥ ८९ ॥

ध्रुवकौतुकसंयुक्ते तथा वै परिषद्गणाः ।
ध्रुवार्चनं ध्रुवार्चायां विपरीतं न कारयेत् ॥ ९० ॥

(बेराणां स्थाननियमः) (एकबेरप्रतिष्ठा चेद्ब्राह्मे संस्थापयेदिति
ध्रुवकौतुकसंयुक्ते मानुषे स्थापयेदिति
ब्राह्मे तत्कौतुकं स्थाप्यमिति पूर्वजदर्शनम् )

(बेरविशेषाणां मुखनियमः) द्वारपालाः प्रकर्तव्याः किंचिद्द्वारनिरीक्षकाः ।
बहिर्मुखा विमानेशाः प्रासादाश्रयमन्दिराः ॥ ९१ ॥

ईशानसोमयोर्मध्ये दक्षिणाभिमुखोऽमितः ।
श्रीभूतारिध्वजाम्भोजयूथेशाश्चाक्षहा तथा ॥ ९२ ॥

कल्प्या बहिर्मुखा एव वीशस्त्वभिमुखो मतः ।
देवाग्रे स्थापयेदेतांस्तत्तदावरणे पृथक् ॥ ९३ ॥

(अनपायिनः) श्रीभूतश्चैव गरुडः प्रथमावरणे स्थितौ ।
चक्रध्वजाब्जयूथेशा द्वितीयावरणादिषु ॥ ९४ ॥

एतेऽनपायिनः प्रोक्ता विष्वक्सेनसमन्विताः ।
प्राकाराश्रयवासाः स्युरन्ये वास्तुनिरीक्षकाः ॥ ९५ ॥

(श्रीदेवी) तप्तहाटकसङ्काशां पद्मपलाशायतेक्षणाम् ।
तिसृभिः पुष्पचूडाभिर्ललाटोपरिशोभिताम् ॥ ९६ ॥

सपद्मवामहस्तान्तां कक्ष्याबद्धघनस्तनीम् ।
प्रसारितेतरकरां सर्वाभरणभूषिताम् ॥ ९७ ॥

---

1. ख. च.

श्रीवत्सादिमबीजां तां फाल्गुने चोत्तरोद्भवाम् ।
श्रियं दक्षिणपार्श्वे तु हंसनिर्याख्यग्राहिनीम् ॥ ९८ ॥

भूदेवी
वामपार्श्वे महीं श्यामां सर्वाभरणभूषिताम् ।
वैशाखे रेवतीजातां दधतीं दक्षिणेम्बुजम्[1] ॥ ९९ ॥

प्रसारितेतरकरां प्रसन्नेन्दुनिभाननाम् ।
महाचातकवाहा तां लक्ष्मीपूर्वाक्षरान्विताम् ॥ १०० ॥

श्रीभूम्योः केचिदिच्छन्ति व्यत्ययेन करद्वयम् ।

मार्कण्डेयभृगू
एकजानुक्रमासीनो भित्तिमूले तु दक्षिणे ॥ १०१ ॥

सोपवीतो जटामौलिः रोहिणीशोऽथ फाल्गुने ।
तप्तहाटकसंकाशो मार्कण्डेयस्तु पूजकः ॥ १०२ ॥

वामपार्श्वे भृगुः कार्यो जातिहिङ्गुलिकप्रभः ।
वैशाखे रोहिणीजातः ख्यातीशः पुष्पपाणिकः ॥ १०३ ॥

अत्रानुक्तं तु तत्सर्वं पुराणस्योक्तवद्भवेत् ।

ब्रह्मशङ्करौ
पद्मासने समासीनो रुक्मवर्णश्चतुर्मुखः ॥ १०४ ॥

कलशाक्षमालापाणिः जटामौलिश्चतुर्भुजः ।
हंसोऽस्य वाहनं प्रोक्तं सावित्रीपतिरुच्यते ॥ १०५ ॥

चैत्रेऽभिजिति सञ्जातोऽबरीषश्शौषिकस्यतु (?) ।
कमण्डलुध्वजश्चापि ब्रह्माख्यो दक्षिणे ध्रुवात् १०६ ॥

उत्तरे ध्रुवबेरस्य प्रवालाग्निनिभो भवेत् ।
टङ्कैणधृत् चतुर्बाहुर्व्याघ्रचर्माम्बरो हरः ॥ १०७ ॥

सोऽर्धचन्द्रजटामौलिः पिङ्गलैर्नेत्रैस्त्रिभिर्युतः ।
आर्द्राजो मार्गशीर्षे तु शिवश्चण्डीशशौषिकः ॥ १०८ ॥

---

1. अब्जकम्. आ.

दक्षिणाभिमुखश्चैव वृषभध्वजवाहनः ।
पार्वतीशश्शूलपाणिः[1] पूज्यश्चात्र पिनाकवान् ॥ १०९ ॥

कौतुकद्वितीयावरणे शिवादयः

शिवः शुभेश्वरः श्यामः सवारिकलशध्वजः ।
भेरीशब्दरवो रक्तवासाश्च गजवाहनः ॥ ११० ॥

विश्वः श्यामनिभश्चैव शुद्धेशो वेदिकेतुकः ।
हयश्च वाहनं तस्य मितश्श्यामोऽरुणाम्बरः ॥ १११ ॥

स्रुवध्वजश्च मित्रेशः अत्रिः श्यामस्सतीश्वरः ।
जुहूध्वजो रक्तवर्णो रुरुवाहन एव च ॥ ११२ ॥

माघमासे तु रोहिण्यां जातास्ते तु बहिर्मुखाः ।
सनत्कुमारसनकसनातनसनन्दनाः ॥ ११३ ॥

हेमाभाः शुक्लवसनाः तैष्यमासे तु पुष्यजाः ।
[2]कूर्चध्वजा इति ध्येयास्सर्वे ते ब्रह्मचारिणः ॥ ११४ ॥

धात्रादयो द्वारदेवाः

वेणुपत्रनिभो धाता रथयान उदङ्मुखः ।
[3]पुष्पकेतुः सन्धिनीशो रक्तवस्त्रश्च दक्षिणे ॥ ११५ ॥

विधाता शुकपत्राभ ऊर्ध्वेशो गजवाहनः ।
सर्पध्वजः शुक्लवस्त्रः [4]पूज्यावेतौ कवाटयोः ॥ ११६ ॥

भुवङ्गो दक्षिणशिरा उत्तराङ्घ्रिः खलोचनः ।
प्रीतीशोऽग्निशिखाकेतुर्नीलोत्पलदलप्रभः ॥ ११७ ॥

हस्तजो माघमासे तु हृदी वृषभवाहनः ।
पतङ्गोऽधोमुखश्चोर्ध्वः शुक्लाभः पौष्यहस्तजः ॥ ११८ ॥

भरणीश उत्तरशिराः अश्वयानध्वजस्तथा ।
कवाटोर्ध्वशिलाश्लिष्टः पूज्यो रक्ताम्बरोऽमलः ॥ ११९ ॥

---

1. शूलहेतिः. ख. 2. कूर्चचूडाः. ख. 3. पुष्पकेतुश्च सन्धीशः. ख. 4. पूजयेद्दक्षिणोत्तरे. ख.

पतिरो हेमवर्णाभः किञ्चिद्धाटकमिश्रितः ।
उदङ्मुखो रक्तवस्त्रो वृषाङ्को गजवाहनः ॥ १२० ॥

नागेशो माघमासे तु तथा हस्तर्क्षजः स्मृतः ।
वरुणो हेमपद्माभः किञ्चिद्धाटकमिश्रितः ॥ १२१ ॥

धरणीशः फाल्गुने तु हस्तजो रथवाहनः ।
शरध्वजोऽत्र पूज्यश्च [1]द्वारभागे तु वामतः ॥ १२२ ॥

(धात्राद्या हस्तजास्सर्वे क्रमादाश्वयुजादिषु ) ।
द्वारे द्वारे तु धात्रादीन् षडेतान्सम्यगर्चयेत् ।
मणिकादयो द्वारपालाः
मणिकं रक्तवर्णं च [2]शुकपत्राम्बरं तथा ॥ १२३ ॥

उपवीताजिनोद्दीप्तं पिङ्गलाक्षं जटाधरम् ।
हृदयेऽञ्जलिसंयुक्तं सन्ध्यानाथं स्रुवध्वजम् ॥ १२४ ॥

स्थितं द्वारं समीक्ष्यैव द्वारनिर्गमदक्षिणे ।
चैत्रे मासे च रोहिण्यां जातं द्विभुजमर्चयेत् ॥ १२५ ॥

वामे सन्ध्यां च हेमाभां हृदयेऽञ्जलिसंयुताम् ।
सौम्यजां श्रावणे मासि द्विभुजां कुसुमाम्बराम् ॥ १२६ ॥

तस्य द्वितीयद्वारस्य बहिः पार्श्वे च दक्षिणे ।
शातातपं च दिव्येशं कुशध्वजमृषीश्वरम् ॥ १२७ ॥

चैत्रे तु रोहिणीजातं जटामौलिं चतुर्भुजम् ।
स्फटिकाभं नीलवस्त्रं रुरुवाहनमर्चयेत् ॥ १२८ ॥

[3]तापसं वामपार्श्वे तु श्यामाभं रुरुवाहनम् ।
फाल्गुने पुष्यजं कूर्चध्वजं सन्धीशमर्चयेत् ॥ १२९ ॥

---

1. द्वारवामे यथाविधि. आ. 2. शतपत्राम्बरस्तथा. ख. 3. तापसो वामपार्श्वे तु श्यामवर्णोऽहिवाहनः. आ.

श्रीभूतः रक्ताम्बरधरं चैव द्विभुजं जटिलं तथा ।
सोपानमध्ये श्रीभूतमर्चयेद्बहिराननम् ॥ १३० ॥

विराजेशं भूतकेतुं ज्येष्ठमासे धनिष्ठजम् ।
न्यक्षादयः न्यक्षो दूर्वाङ्कुराभश्च प्रज्ञतोशोऽरुणाम्बरः ॥ १३१ ॥

[1]श्येनयानध्वजो दण्डपाणिर्वीररवध्वनिः ।
रोहिण्यां मार्गशीर्षे तु मासि जातो बहिर्मुखः ॥ १३२ ॥

विवस्वान् रक्तवर्णश्च तथैवोत्सादिनीपतिः ।
भिण्डिवालध्वजश्चैव [2]दण्डी गवयवाहनः ॥ १३३ ॥

प्रोष्ठपादे मघोद्भूतो द्विभुजो नीलवस्त्रकः ।
मित्रो बहुप्रजानाथो शरभाण्डनिभस्तथा ॥ १३४ ॥

कपोतवाहनश्चैव मेघनादरवस्तथा ।
द्विभुजो [3]रक्तवर्णश्च यूपकेतुर्हलायुधः ॥ १३५ ॥

ज्येष्ठाजो मासि वैशाखे धामपालस्तु पश्चिमे ।
एष पङ्क्तीशनामा हि [4]भित्तावभिमुखेऽर्चयेत् ॥ १३६ ॥

क्षत्ता पद्मनिभश्चैव वाणीनाथस्सिताम्बरः ।
कुशध्वजश्चक्रहेतिस्सावाद्राणकवाहनः[5] (?) ॥ १३७ ॥

श्रावणे श्रवणोद्भूतो द्विभुजः पूज्य उत्तरे ।
हविःपालः हविः पालोऽसितो विद्युत्पतिः कालाग्निशूलधृत् ॥ १३८ ॥

रोहिण्यां मार्गशीर्षे तु जातो रक्ताम्बरस्तथा ।
पुष्पेशः पुष्पेशः पुष्पवच्छ्यामः [6]तथापि नरवाहनः ॥ १३९ ॥

पुष्पायुधो मीनकेतुः चैत्रेऽनूराधजस्तथा ।
बलीशो [7]बालिकेशोऽद्रिध्वजो दण्डी सितासितः ॥ १४० ॥

---

1. ख. श्येनवाहध्वजः. 2. ख. दण्डिकारथवाहनः. 3. ख. रक्तवस्त्रश्च. 4. ख. पङ्क्तथां. 5. महिषवाहन इति केचित्. 6. क. तथा विरलवाहनः. 7. बालकेशः. ख.

मृगेन्द्रवाहनश्चैले सौम्यजो रक्तवस्त्रधृत्[1] ।

इन्द्रादयो लोकपालाः

इन्द्रस्सस्यनिभः श्यामो द्विभुजः कुलिशायुधः ॥ १४१ ॥

शचीशः पीतवस्त्रश्च ज्येष्ठाजः श्रावणे तथा ।
[2]किरीटी मकुटी दण्डी चासीनश्चन्निरायुधः ॥ १४२ ॥

कृत्तिकास्वनले जातो मार्गशीर्षे तु मासि वै ।
किञ्जल्कपुञ्जसदृशो लोहिताक्षोऽजवाहनः ॥ १४३ ॥

देव्यौ स्वाहा स्वधा तस्य शक्तिरायुधमस्य वै ।
फाल्गुने भरणीजातो यमो नीलोत्पलप्रभः ॥ १४४ ॥

सत्यव्रतापतिर्दण्डी पाशी महिषवाहनः ।
आरम्भाधिपतिस्तैष्ये मूलजो [3]भञ्जनीपतिः ॥ १४५ ॥

शार्दूलवाहनश्चैव शूलपाणिस्त्रिलोचनः ।
चैत्रे शतभिषग्जातो वरुणो नीलवर्णकः ॥ १४६ ॥

दण्डपाशकरो रक्ताम्बरो द्विरदवाहनः ।
कनकेशस्सिंहकेतुः प्रतीच्यां प्राङ्मुखः स्थितः ॥ १४७ ॥

वायुः स्वच्छाम्बुसङ्काशश्शूलपाणिश्च खड्गधृत् ।
स्वातिजः कार्तिके मासि देवी तस्याञ्जना मता ॥ १४८ ॥

---

1. अत्रा अध्यायसमाप्तिः. ख. कोशे.

2. ख. किरीटी मुकुटी दण्डी सर्वाभरणभूषितः । वेणुध्वजो मेघरवो गजवाहश्शचीपतिः ॥
जकारबीजसंयुक्तः इन्द्रश्शच्याः पतिस्तथा । पुरुहूतस्तथा प्रोक्तः पुरन्दरमथार्चयेत् ॥
अभ्यन्तरमुखश्चैवमिन्द्रं चैव समर्चयेत् । आग्नेय्यां कार्तिके मासि वह्निजाऽतस्स एव हि ॥
किंशुकीपुष्पसङ्काशश्शक्तिपाणिश्च कुण्डली । केयूराभरणश्चैव शुकपिञ्छाम्बरस्तथा ॥
कपिध्वजो मेषवाह. स्वाहापतिरथापि वा । रकारबीजसंयुक्तः सर्वदेवमुखस्तथा ॥
आसीनश्च प्रणम्यैव पूजयेच्च विशेषतः । याम्ये मिथुनमासे तु भरण्यां जात एव च ॥
श्यामाभो रक्तवस्त्रश्च व्यालध्वजसमन्वितः । महिषो वाहनश्चैव फकारं बीजमेव च ॥
शुकाङ्गीदेवीसहितः घण्टानादरवस्तथा । किराटी मुकुटी दण्डी पाशहस्तस्तथैव च ॥
इति पाठो दृश्यते । 3. रञ्जनीपतिः, ख. रजनीपतिः. क.

पीताम्बरधरो वीरः कृष्णसाररथध्वजः ।
कुबेरो दण्डपाणिस्तु सहंसरथवाहनः ॥ १४९ ॥

त्रिपाद्यवनलानाथः श्रविष्ठाजश्च कार्तिके ।
श्यामो रक्ताम्बरधर उदीच्यां दक्षिणामुखः ॥ १५० ॥

आर्द्रायां मार्गशीर्षे तु जात ईशान उच्यते ।
पाटलीकुसुमाभस्तु वृषभध्वजवाहनः ॥ १५१ ॥

त्रिलोचनोऽम्बिकानाथः शूलपाणिश्चचर्मधृत् ।
सूर्यः मार्ताण्डः पद्महस्तश्च पृष्ठे मण्डलसंयुतः ॥ १५२ ॥

चतुष्पादो द्विपादो वा पलाशकुसुमप्रभः ।
श्रावणे हस्तजो देव्यौ रेणुका च सुवर्चला ॥ १५३ ॥

सप्तसप्तिसमायुक्तो रथो वाहनमुच्यते ।
[1]अनूरुस्सारथिस्सर्पो ध्वजस्तुरग एव वा[2] ॥ १५४ ॥

विष्वक्सेनः शान्तस्सोमेशयोर्मध्ये ह्यासीनो दक्षिणामुखः ।
श्रीवत्सं ब्रह्मसूत्रं च विना सर्वं हरेरिव ॥ १५५ ॥

प्रलम्बसूत्र-पदव्युत्पत्तिः प्रलम्बासुरसङ्ग्रामे ह्युपवीतं तु शार्ङ्गिणः ।
तदायुधपरिच्छिन्नमेकसूत्रं प्रलम्बितम् ॥ १५६ ॥

तदभ्यर्थनया तच्च तथैव धृतमेव हि ।
[3]लम्बयज्ञोपवीतित्वं ततः प्रभृति शार्ङ्गिणः ॥ १५७ ॥

तदसाधारणं नाम लोकेऽस्मिन् प्रथितं पृथु[4] ।
तत्सूत्रं लम्बितं छेदाद्धृत्वाऽधो दक्षिणस्तनात् ॥ १५८ ॥

वामांसात्सव्यगुल्फान्तं लम्बितं तनुमध्यतः ।
तद्ब्रह्मसूत्रमित्युक्तं तदसाधारणं हरेः ॥ १५९ ॥

---

1. ख. अरुणः. 2. अत्राव्यवहितोत्तरं अङ्गारकः संहितासु प्रस्तुतः. 3. ख. प्रलम्बब्रह्मसूत्रित्वं. 4. क. पृथक्.

आकुञ्च्य दक्षिणं पादं वामं पादं प्रसार्य च ।
जयया सार्धमासीनः पुष्पहस्तोऽग्निसन्निभः ॥ १६० ॥
गदाशक्तिकरो वाऽथ पूज्यः स्थानाभिवृद्धये ।
चतुर्भुजो यदि भवेच्छङ्खचक्रे गदावरौ ॥ १६१ ॥
सस्यश्यामनिभौ देव्यौ सर्वमन्यच्च पूर्ववत् ।
पूर्वाषाढासमुद्भूतो मासि भाद्रपदे तथा ॥ १६२ ॥
ध्रुवकौतुकसंयुक्तमुत्तमं परिचक्षते ।
मध्यमं चैकबेरं स्यादधमं पीठपूजनम् ॥ १६३ ॥
ग्रामस्य यजमानस्य चानुकूलप्रमाणतः ।
विष्वक्सेनं प्रकुर्वीत मूलबेरवशात्तु वा ॥ १६४ ॥
आयादयो न कर्तव्या मूलबेरवशाद्यदि ।
गरुत्मान् गरुडो वेदमूर्तिस्तु तप्तहाटकसन्निभः ॥ १६५ ॥
शुकपिञ्छाम्बरधरो झल्लरीमेखलायुतः ।
किङ्किणीजालसंयुक्तः कुण्डलाङ्गदहारधृत् ॥ १६६ ॥
[1]छन्नवीरोत्तराबद्धः कौबेरमकुटोज्ज्वलः ।
तैष्ये स्वातिदिने जातः तथा श्वसनवाहनः ॥ १६७ ॥
त्रिवृत्तस्य शिरस्साम गायत्रं चक्षुरेव च ।
आत्मा स्तोमाह्वयं साम वामदेव्यं तनुस्तथा ॥ १६८ ॥
बृहद्रथन्तरे पक्षौ यज्ञायज्ञियपुच्छकः ।
छन्दांस्यङ्गानि वै तस्य यजूंषि च शफाः स्मृताः ॥ १६९ ॥
एवं ध्यात्वाऽर्चयेद्धीशं वाहनानां तु वृद्धये ।
वक्रतुण्डः प्रवालाभश्चतुर्बाहुरेकदंष्ट्रो गजाननः ॥ १७० ॥

---

1. ख. छन्नवीरोदराबद्धः.

चैत्रे मासे श्रविष्ठाजः कदलीमोदकेक्षुधृत् ।
अनन्तः दक्षिणे गोपुराद्बाह्ये वामेऽनन्तस्सितप्रभः ॥ १७१ ॥

आश्लेषाजश्च वैशाखे द्विबाहुश्च सुरापतिः ।
फणामण्डलमध्यस्थः प्राञ्जलिर्भुजगाधिपः ॥ १७२ ॥

भौमः शक्तिपाणिस्तथा भौमः कदम्बकुसुमप्रभः ।
देवी च कुमुदा तस्य वराहो वाहनं तथा ॥ १७३ ॥

पूर्वाषाढासमुद्भूतो ज्येष्ठमासे कुजस्तथा ।
शनैश्चरः सौरिं कृष्णनिभं कुर्यात् [1]कुशचीराम्बरं तथा ॥ १७४ ॥

माघमासे तु रेवत्यां जातं नीलोत्पलध्वजम् ।
स्यन्दनं वाहनं तस्य [2]वराहोरगसंयुतम् ॥ १७५ ॥

बृहस्पतिः कुर्याद्बृहस्पतिं पीतं कदलीवनमध्यगम् ।
कुशध्वजं हंसरथं पुष्पश्यामाम्बरोज्ज्वलम् ॥ १७६ ॥

आषाढे तिष्यसम्भूतं तारां देवीं च तस्य वै ।
बुधः बुधं [3]सस्यनिभं कुर्याच्छरबाणासनान्वितम् ॥ १७७ ॥

[4]बुद्धादेवीसमायुक्तं वामदेवाश्ववाहनम् ।
श्रावणे च श्रविष्टाजं दर्पणं ध्वजमेव च ॥ १७८ ॥

शुक्रः शुक्रो रजितवर्णश्च जटाभृद्वल्कलाम्बरः ।
[5]जयन्तीशोऽम्बररथो माघमासे तु भाग्यजः ॥ १७९ ॥

जाह्नवी जाह्नवीं श्वेतरक्ताभां पीतवस्त्रां तथैव च ।
विभज्यैकदलं हस्तेनाऽघ्रायन्तीं तदम्बुजम् ॥ १८० ॥

अश्वयुङ्मासि रेवत्यां जातां तां लोहितध्वजाम् ।
सर्वाभरणसंयुक्तां गङ्गां कुर्याद्विचक्षणः ॥ १८१ ॥

---

1. ख. शुकपिञ्छाम्बरं. 2. म. वराहध्वजसंपुतम्. 3. ख. श्यामनिभं, 4. ख. सिद्धा. 5. ख. जयाधीशः

चन्द्रः आत्रेयं हरिवत्कुर्या[1]च्छीतमण्डलमध्यगम् ।
तत्र रुक्मनिभं श्वेतमिश्रमावर्तकं[2] स्मृतम् ॥ १८२ ॥

राजानं द्विभुजं कुर्याद्रोहिणीवल्लभं तथा ।
चैत्रे मृगशिरोजातं साश्वस्यन्दनवाहनम्[3] ॥ १८३ ॥

श्रीः पद्मपीठे समासीनां मण्डले चोर्ध्वकर्णिके ।
तथा प्रसूतिके कुर्याद्देवीं धृतकुशेशयाम् ॥ १८४ ॥

शातकुम्भमयैः कुम्भैर्दिग्गजैरभिषेचिताम् ।
क्रीडन्तीं विष्णुना वाऽथ श्रीदेवीं कारयेद्बुधः ॥ १८५ ॥

सप्तरोहिण्यः मयूरवाहा रोहिण्यः कृकलासध्वजप्रियाः ।
पुष्पाम्बराः पुष्पहस्ताः शुककञ्चुकसंयुताः ॥ १८६ ॥

रोहिणीसम्भवास्तैष्ये नित्यं लोकप्रसादकाः ।
धात्री कुर्याद्धात्रीं महारौद्रीं दंष्ट्राभ्यामप्यलङ्कृताम् ॥ १८७ ॥

बालमौल्युत्तरासङ्गां तां त्रिशूलां च षड्भुजाम् ।
रक्तोग्रनयनापाङ्गीं भ्रूभङ्गविकटोग्रकाम् ॥ १८८ ॥

[4]नरस्त्रीणामिव तनुमतिरौद्रीं समाचरेत् ।
ज्येष्ठा कपालवामहस्तां च रक्तकुञ्चितमूर्धजाम् ॥ १८९ ॥

उष्ट्रपीठे समासीनामट्टहाससमन्विताम् ।
चैत्रे याम्यर्क्षसञ्जातामुल्काध्वजसमन्विताम् ॥ १९० ॥

त्रिपीठिकाख्यपीठे च ज्येष्ठां कुर्याद्विचक्षणः ।
[5]प्रसारासनगां स्थाने [6]न दैवे मानुषांशके ॥ १९१ ॥

वामहस्तेन सम्पूर्णं वहन्तीं निधिभाजनम् ।
दक्षिणं पुष्पहस्तं च किंचिल्लम्बोदरीं शुभाम् ॥ १९२ ॥

---

1. ख. सितमण्डल. 2. ख. आहितकम्. 3. चन्द्रादनन्तरं भवकुमारपुरुषाणां वर्णनं पौर्वापर्येण लभ्यतेऽन्यत्र. 4. क. न स्त्रीणामिवतद्वक्त्रमतिरौद्रं. 5. ख. प्रसारघ्नगतां. 6. आ. न दैवे न च मानुषे.

सरक्तपुष्पवस्त्रां तामतिपीनचलस्तनीम् ।
तस्याश्च दक्षिणे पुत्रं तस्या बाहुप्रमाणतः ॥ १९३ ॥

[1]पीतं समृषकं नाम शुक्लवर्णाऽहिताम्बरम् ।
[2]तदासने सहासीनं दण्डपाणिकमुन्नतम् ॥ १९४ ॥

[3]वृषभागं शिरस्तस्य पूर्वोक्तं किञ्चिदुन्नतम् ।
वामे सुमाञ्जलिं तस्यास्सुतां परमलालिताम् ॥ १९५ ॥

अर्धसाचीकृते तस्याः स्वार्धासनसमास्थिते ।
रक्तनीलपरीताङ्गीं [4]रक्तोत्पलकराम्बुजाम् ॥ १९६ ॥

एकपादप्रसारां तामेकमाकुञ्चितासनाम् ।
पञ्चाशत्खरसंयुक्तरथस्तस्यास्तु वाहनम् ॥ १९७ ॥

कृष्णकाकध्वजां ज्येष्ठासम्भवां मार्गशीर्षके ।
भृग्वादय सप्तर्षयः नवार्धतालमानेन मां च कुर्याच्चतुर्भुजम् ॥ १९८ ॥

ब्राह्मासनमासीनं ब्रह्माञ्जलिकरद्वयम् ।
अङ्के वाममथोत्तानं प्रसृतं तस्य चोपरि ॥ १९९ ॥

हस्तं च दक्षिणं तस्मादुपर्युत्तानमाचरेत् ।
[5]आत्मनासाग्रगा दृष्टिर्योगदृष्टिरिति स्मृता ॥ २०० ॥

दक्षिणे चोर्ध्वगे हस्ते कलशं धारयेत् भृगुः ।
वामे स शिक्यं संशुद्धं ब्रह्मदण्डं च वैणवम् ॥ २०१ ॥

[6]जातिहिङ्गुलिकाभं वै सजटामकुटोज्ज्वलम् ।
ताम्रास्यनयनं कुर्यात्सुमुखं मृगचर्मिणम्[7] ॥ २०२ ॥

---

1. ख. पीतं स्पिष्टभगं नाम. 2 आ. एकासने तथाऽऽसीनं. 3. ख. पुष्पभद्रं शिरस्तस्य, ग. पृष्ठभागशिरस्तस्य. 4. ख. रक्तोत्पलकराम्बराम्. 5. ख. स्वनासाग्राहिता दृष्टिरूर्ध्वदृष्टिरिति स्मृता. म. अर्धवृष्टिः. 6. ख. जातिहिङ्गाकृतिभावैः मुखार्धमकुटे जटा. 7. य. संवृतं मृगचर्मणा.

[1]ब्रह्मासने समासीनं मरीचिमनलप्रभम् ।
षडङ्घ्रिवाहनं [2]मालायुधं सुमतिमञ्जलिम् ॥ २०३ ॥

तस्योत्पत्तिः तथाऽऽषाढे नक्षत्रं पूर्वफल्गुनी ।
ध्वजश्च ब्रह्मणः प्रोक्तः सर्वमन्यद् भृगोरिव ॥ २०४ ॥

पुलस्त्यः काञ्चनाभोऽयमासीनो ब्राह्ममासनम् ।
[3]प्रीतीशश्शङ्खहेतिश्च तथा षट्पदवाहनः ॥ २०५ ॥

चैत्रेऽनूराधसञ्जातः [4]ऊर्वाणाख्यो ध्वजस्तथा ।
पुलहस्ताम्रवर्णोऽयमासीनश्च पुलस्त्यवत् ॥ २०६ ॥

[5]क्षमाधीशः क्षमाधैर्यस्तुलाधारोऽस्य वाहनम् ।
हस्तजश्चाश्वयुङ्मासि सर्वमन्यद्भृगोरिव ॥ २०७ ॥

सन्नतीशः क्रतुश्शुक्लो वैशाखे मासि हस्तजः ।
बडबा वाहनं प्रोक्तं सर्वमन्यद्भृगोरिव ॥ २०८ ॥

वसिष्ठोऽथ हरिद्राभोऽरुन्धतीशस्तथैव च ।
ऊर्वाणध्वजसंयुक्तो वषट्काराख्यवाहनः ॥ २०९ ॥

तैष्ये पुष्यर्क्षसञ्जातो ब्रह्मदण्डायुधस्तथा ।
अनसूयापतिस्त्वत्रिर्मधुवर्णोऽस्य वाहनम् ॥ २१० ॥

वषट्कारश्च ऊर्वाणध्वजः श्रवणसम्भवः ।
[6]कार्तिक्यां मासि सम्भूतः सर्वमन्यद्भृगोरिव ॥ २११ ॥

द्विबाहवो मरीच्याद्या अङ्के वामकरं तथा ।
तदूर्ध्वे दक्षिणं पाणिमुत्तानं परिकल्पयेत् ॥ २१२ ॥

[7]मरीचिः पुलहश्चैव पुलस्त्यः क्रतुरेव च ।
[8]वसिष्ठोऽत्रिरहं चैवमृषयः सप्त कीर्तिताः ॥ २१३ ॥

1. ख. ब्राह्ममासनमासीनं. 2. ख. चैव हलायुधसुसंस्थितम् म. हयरावं. 3. क. सतीशः 4. क. पर्वणाख्यध्वजस्तथा. (?) 5. क. यन्मनुष्याकृतिस्समः. (?) 6. ख. श्रावण्यां. 7. ख. भृगुश्च. 8. ख वसिष्ठोऽत्रिर्मरीच्याद्याः.

सम्भूतिश्च क्षमा प्रीतिः सन्नत्यूर्जाऽनसूयकाः ।
[1]अरुन्धती क्रमादेताः कर्तव्यास्तैस्सहासने ॥ २१४ ॥

गविष्ठः (आकाशः)

गविष्ठो हि महाभूतश्चेन्दीवरदलप्रभः ।
मकुटी पीतवासाश्च सर्वाभरणसंयुतः ॥ २१५ ॥

[2]स सत्यलोचनेशश्च दण्डी कुम्भकवाहनः ।
भेरुण्डकेतुस्संप्रोक्तो मारुद्धवरसं तथा (?) ॥ २१६ ॥

चैत्रे चित्रर्क्षसम्भूतो योषास्यात्सत्यलोचना ।

वायुः

वायुश्श्यामोऽसिपाणिस्तु प्लवकाख्याहिवाहनः ॥ २१७ ॥

शङ्खध्वजो हंसरवो [3]माघे स्वातीदिनोद्भवः ।
उदायिनीश्वरश्चैव पीतवस्त्र इति स्मृतः ॥ २१८ ॥

अग्निः

[4]अग्निस्सुवर्णोऽयमर्चिष्केशश्च शक्तिभृत् ।
बडबावाहनश्चैव स्वाहेशो वानरध्वजः ॥ २१९ ॥

प्रोष्ठपादेऽग्निभोद्भूतो नीलवस्त्रस्तथैव च ।
एषां त्रयाणां [5]देव्यश्च पृथक्स्थाने समाचरेत् ॥ २२० ॥

तोयम्

तोयं चाञ्जनवर्णञ्च तथा वृषभवाहनम् ।
हरिपिञ्जरवासः स्याद्भूतमेतच्चतुर्गुणम् ॥ २२१ ॥

तोयं नपुंसकं [6]चेति मुनिश्शातातपोऽब्रवीत् ।
गलकाख्यं ध्वजं चैव तथोदम्बरवर्ध्वनिः ॥ २२२ ॥

ऊर्म्यायुतं तथाऽऽषाढे सौम्यनक्षत्रसम्भवम् ।

भूमिः

हरिणीं श्यामवर्णां तां श्वेतवस्त्रां किरीटिनीम् ॥ २२३ ॥

पद्महस्तां क्षमां देवीं पद्मनेत्रां सुभूषिताम् ।
वैशाखे रेवतीजातां महाचातकवाहिनीम् ॥ २२४ ॥

---

1. ख. अरुन्धतीति विख्याता ऋषिपत्न्यः प्रकीर्तिताः । 2. ख. ससत्यलोचनः श्रीमान् गविष्टः कुम्भवाहनः. 3. ख. मेषे. 4. ख. अग्निस्तु किंशुकाभस्तु अङ्गैश्चापि शक्तिभृत्. 5. ख. देवानां पूर्वस्थाने समाचरेत्. 6. ख. मुनेर्भस्मेव च (?)

सावित्री सावित्रीं ध्वजिनीं चापि[1] श्वेतवस्त्रां सुसंस्थिताम् ।
[2]विद्यां चतुर्भुजां कुर्याद्रक्तामृतकुशेशयाम् ॥ २२५ ॥

दक्षिणे त्वक्षमालां च करे वामे कमण्डलुम् ।
ज्ञानमुद्रां दक्षिणेऽथ करे वामेऽथ पुस्तकम् ॥ २२६ ॥

तैष्ये पुनर्वसूद्भूता तत्र पूज्याधिकेन सा ।
सर्वेश्वरः सर्वेश्वरोऽम्बुवाहाभष्षड्ङ्घ्रिध्वजवाहनः ॥ २२७ ॥

[3]श्वेतवस्त्रधरो दण्डी कुम्भशब्दरवस्तथा ।
[4]तैष्ये पुष्यभवः श्वेतवस्त्रश्चैवोष्ट्रवाहनः ॥ २२८ ॥

सप्तमातरः ब्रह्माणीं पिंगलाञ्चैव चतुर्वक्त्रां चतुर्भुजाम् ।
[5]कलशाक्षमालां दधतीं जटामण्डलमण्डिताम् ॥ २२९ ॥

दर्भध्वजां हंसरथां चैत्रे याम्यदिनोद्भवाम् ।
सरित्स्त्रियां श्यामवर्णां शूलहस्तां चतुर्भुजाम् ॥ २३० ॥

तस्या हंसो ध्वजः प्रोक्तः सौरभेयी च वाहनम् ।
वैशाखे रेवतीजातां रक्तवस्त्रां त्रिलोचनाम् ॥ २३१ ॥

मौलौ वेणीसमायुक्तां भीमरूपां भयानकाम् ।
वैशाखिनी[6]स्वर्णनिभा शक्तिहस्ता चतुर्भुजा ॥ २३२ ॥

कुक्कुलसध्वजा रक्तवसना [7]च गुहाधिपा ।
ज्येष्ठमासे तथा देवी कृत्तिकर्क्षसमुद्भवा ॥ २३३ ॥

शङ्खचक्रधरा श्यामा वैष्णवी [8]नीलवासिनी ।
फाल्गुने श्रवणोद्भूता गरुडध्वजवाहना ॥ २३४ ॥

---

1. ख. श्रीभूम्योरिव शब्दिनीम्. 2. क. सावित्रीं. 3. क. दण्डीविद्युन्निभेशश्च ढक्काशब्दरवस्तया. 4. ख. तैष्ये पुष्ये भवस्तत्र पश्चिमामुखमर्चयेत्. 5. ख. कलशीमक्षमालाञ्च रत्नकुण्डलमण्डिताम्. 6. ख. सुवर्णाभा. 7. ख. गुहराडिव. 8. ख. कठिनस्तनी.

वाराही कृष्णवर्णा च वराहवदना तथा ।
शङ्खचक्रधरा चैव वराहध्वजवाहना ॥ २३५ ॥

पौषे श्रवणसम्भूता [1]रक्तवस्त्रा चतुर्भुजा ।
इन्द्राणी [2]यवसश्यामा वज्रहस्ता चतुर्भुजा ॥ २३६ ॥

श्वेतवस्त्रसमायुक्ता शुकतुण्डाख्यवाहना ।
[3]वेणुपत्रध्वजा माघे ज्येष्ठानक्षत्रसम्भवा ॥ २३७ ॥

काली [4]करालवदना कालाङ्गी चोष्ट्रवाहना ।
पिशाचाङ्कध्वजा चैव वह्निज्वालाभमूर्धजा ॥ २३८ ॥

[5]प्रोष्ठपादे यमोद्भूता शूलपाशकपालिनी ।
रक्तोग्रनयनापाङ्गा भ्रूभङ्गाविकृतानना ॥ २३९ ॥

नरस्त्रीणामिव मुखं दंष्ट्राभ्यां समलङ्कृतम् ।
त्रिनेत्र्यार्धेन्दुमकुटा नागाभरणसंयुताः ॥ २४० ॥

प्रसारासनमासीनास्सप्तमातर ईरिताः ।
प्रसारासनलक्षणम् दक्षिणं पादमाकुञ्च्य वामं पादं प्रसार्य च ॥ २४१ ॥

प्रसारासनमित्युक्तं स्त्रीणां सामान्यमेव तत् ।
स्कन्दः स्कन्दः पलाशपुष्पाभः षड्भुजो वा चतुर्भुजः ॥ २४२ ॥

बालो मौलिसमायुक्तः देवयानीपतिस्तथा ।
मयूरवाहनश्शक्तिधरः कुक्कुटकेतुकः ॥ २४३ ॥

फाल्गुने कृत्तिकोद्भूतो हस्ती वा तस्य वाहनम् ।
हस्ती नवहस्तमितं कुर्यादुत्सेधं सप्तहस्तकम् ॥ २४४ ॥

आयामार्धं ततः पादं शेषं नाहमुदाहृतम् ।
प्रादेशिकं ततो विद्या[6]च्छिरसोरस्कतस्तयोः ॥ २४५ ॥

---

1. ख. श्वेतवस्त्रा. 2. ख. श्यामवर्णाभा. 3. ख. शुकतुण्डध्वजोपेता मेषे ज्येष्ठानुसम्भवा. 4. ख. करालदंष्ट्रा च. 5. ख. तथा ज्येष्ठे यमोद्भूता. 6. ख. उरसे सप्तकन्तथा (?)

नाहेनार्धपरीणाहं पादहोनं तु गात्रयोः (?) ।
गात्रस्यार्धपरीणाहं पादहीनं करोर्ध्वगम् ॥ २४६ ॥

[1]तस्मात्त्रिभागादेव स्यात्कराग्रे नाह उच्यते ।
भूमिलम्बं तथा कुर्यात्करस्याग्रमनुच्छ्रितम् ॥ २४७ ॥

(मानं नखानां तस्यैव चतुरङ्गुलमिष्यते । )
गात्रान्तरेषु तेषां वै सर्वं बोद्धव्यमित्यतः ॥ २४८ ॥

ऐरावतं विना ऽन्येषां नीलवर्णमुदाहृतम् ।
कण्ठेषु द्वादशायामं करिणां परिरुच्यते (?) ॥ २४९ ॥

सतालनवहस्तः स्यादुत्सेधः करिणां पतेः ।
प्रवालाभञ्चगण्डं च गात्रं श्वेतमुदाहृतम् ॥ २५० ॥

[2]यथाऽत्मनस्तथेभस्य माने चैव भयङ्करः ।
इभानामेव सर्वेषां मानमेवमुदाहृतम् ॥ २५१ ॥

परिणाहे तथा तेषामूर्ध्वं युक्त्या समाचरेत् ।
तथा च नीलहस्ती स्यादिन्द्रनीलप्रभश्शुभः ॥ २५२ ॥

वाराहस्य महाविष्णोर्वाहनं परिकीर्त्यते ।
पञ्चहस्तायतं पृष्ठे सकोलं चार्धदेहकम् ॥ २५३ ॥

तस्यार्धमूर्ध्वे कर्णः स्यान्नाहं तस्य षषडङ्गुलम् ।
अग्रे भागपरीणाहः शिखा स्यादंगुलास्तु षट् ॥ २५४ ॥

[3]गोलकं विस्तृतं तस्य [4]तुण्डं स्यात् चतुरङ्गुलम् ।
भुजमालं तु पादं स्या[5]द्भुजमाले तले उभे ॥ २५५ ॥

पञ्चाक्षरास्समाख्याताः सुन्दराः पञ्चवर्णकाः ।
[6]मयूरा एव दृश्यन्ते [6]दृश्यन्ते मेचकास्तथा ॥ २५६ ॥

---

1. क. तस्य त्रिभाग एव स्यात्. 2. क. यथा मानं तथाहि स्यात्. 3. ख. षट्कोलं. 4. ख. मण्डला. 5. ख. भुजमात्रमुभे तले. 6. ख. मयूरा ये प्रदृश्यन्ते ते वै प्राकृतमानवाः म. तथा प्रकृतिमानकम्.

दिव्याश्चेदधिकं कार्यं देवानां चैवमाचरेत् ।
हस्तं पादं तथाऽऽयामं त्रितयं तत्समं स्मृतम् ॥ २५७ ॥

चूडं षडङ्गुलं प्रोक्तं विस्तारं कालचोदितम् ।
गलोत्सेधं च सौन्दर्यं तथा कुर्याद्विचक्षणः ॥ २५८ ॥

चक्रम् कुर्याच्चक्रं नराकारं चक्रचूलितमस्तकम् ।
चक्रं बहिर्मुखं कुर्याच्छरोङ्गाराग्निसन्निभम् ॥ २५९ ॥

मुष्टिकेशं धूमकेतुं भानुहेतिं तथैव च ।
[1]विवृत्तवाहनं चैव कार्तिके कृत्तिकोद्भवम् ॥ २६० ॥

पादहीनं वैनतेयाद्धीन[2]मध्यर्धमेव वा ।
आस्थानमण्डपे चैव स्थापयेद्देशिकोत्तमः ॥ २६१ ॥

ध्वजस्थगरुडः तस्मा[3]त्ततो ध्वजस्थाने बिम्बं कुर्याद्यथाविधि ।
ध्वजस्थं गरुडं कुर्यादासने चैकमर्पितम् ॥ २६२ ॥

वामपदं समाकुञ्च्य सम्यक् प्रसृतबाहुकम् ।
दक्षिणेनैकहस्तेन पद्ममुत्पलमेव वा ॥ २६३ ॥

अष्टांगुलमथो नालं भागं पुष्पस्य मण्डलम् ।
पुष्पापेक्षमुखं कुर्यात्सानन्दं स्मेर[4]गर्वितम् ॥ २६४ ॥

एतद्ग्रामहितं प्रोक्तं जयार्थं [5]चान्यदिष्यते ।
जानुना [6]पीडितं पीठं सव्येनैवेतरेण वा ॥ २६५ ॥

वसुधां वापि जिघ्रन्तमूर्ध्वदृष्टिं च कारयेत् ।
पद्मासने समासीनं [7]सुखस्यास्पदमव्ययम् ॥ २६६ ॥

ऋषीणां च हितार्थाय कुर्याद्देवं विचक्षणः ।
ध्वजः प्राङ्मुखं च ध्वजं कुर्यान्न देवं वीक्ष्य[8]सुस्थितम् ॥ २६७ ॥

---

1. ख. प्रवृत्त. 2. क. अर्धार्धं. 3. क. तावत् ध्वजस्यापि. 4. ख. गर्भितं. 5. ख. विजयाय. च. 6. ख. पीड्य हस्तेन सव्येनैवोत्तरेण वा. 7. ख. सुखं ध्यायन्तं. 8. ख. संस्थितं.

एवं ध्वजविधिं कर्तुमशक्तो मण्डपे तथा ।
समालिख्यार्चयेत्तत्र ध्वजदेवं खगाधिपम् ॥ २६८ ॥

ऊर्ध्वे शङ्खं च भेरीं च वायुवाहनमत्र वै ।
घण्टारवं च वैशाखे वायुभे जातमुत्तमम् ॥ २६९ ॥

हाटकाभं नीलवस्त्रं ध्वजमेवं प्रकल्पयेत् ।
शङ्खः जलजं चन्द्रवत्कुर्यान्मकुटे शङ्खसंयुतम् ॥ २७० ॥

शङ्खाभं नीलवस्त्रं च द्विभुजं वारुणीपतिम् ।
वियद्गतिध्वजं चैव [1]वियद्गत्यायुधं तथा ॥ २७१ ॥

भूतः भूताकृतिं वायुभोत्थं हंसवाहनमेव च ।
आषाढे रोहिणीजातं हृदयेऽञ्जलिसंयुतम् ॥ २७२ ॥

मूलबेरवशात् परिवारकल्पनम्

[2]मूलबेरवशादेव परिवारान्प्रकल्पयेत् ।
बाह्वन्तं वा स्तनान्तं वा नाभ्यन्तं वा ध्रुवस्य तु ॥ २७३ ॥

ब्रह्मेशावमितं सूर्यं तत्समान्वा प्रकल्पयेत् ।
तत्त्रिभागैकभागादिमानैः कुर्याच्च कौतुकम् ॥ २७४ ॥

देवेशाधिकमानेन परिवारान्न कल्पयेत् ।
एकबेरप्रतिष्ठाचेत् ब्राह्मे संस्थापयेत्पदे ॥ २७५ ॥

बलिपीठम्

बलिपीठं प्रवक्ष्यामि उत्तमाधममध्यमम् ।
पद्मश्रीकुम्भबन्धाख्याश्चतुरश्राष्टवृत्तकाः ॥ २७६ ॥

उपपीठादिकं [3]सर्वं प्रासादविधिवच्चरेत् ।
अधिष्ठानोदयं धाम्नो बलिपीठस्य विस्तरम् ॥ २७७ ॥

उत्तमं तत्प्रमाणं स्यात्तदर्धं मध्यमं भवेत् ।
तदर्धमधमं प्रोक्तं विस्तारं पादबाह्यतः ॥ २७८ ॥

---

1. ख. वियद्गत्यायुधं. 2. ख. मूलबेरप्रमाणेन. 3. इत आरभ्य सप्तमाध्याय १९ श्लोके दिक्षु इत्यन्तो ग्रन्थः ख. कोशे गलितः ।

तद्विस्तारसमोत्सेधं पादाधिकमाथापि वा ।
अर्धाधिकं वा कुर्वीत विमानस्यानुरूपतः २७९ ॥

द्वात्रिंशांशोत्तमोत्सेधं द्व्यंशकं पादुकं भवेत् ।
सप्तांशा जगती प्रोक्ता षड्भागं कुम्भमेव च ॥ २८० ॥

एकांशमूर्ध्वपट्टी स्यात्पञ्चभागं दलं भवेत् ।
[1]द्व्यंशके कर्णकम्पे च महापट्टी च अंशकम् ॥ २८१ ॥

एकांशं चोर्ध्वपट्टी स्याद्वेदांशं लम्बपङ्कजम् ।
द्व्यंशकं [2]चोर्ध्वपद्मं स्याच्चतुर्द्वारं चतुर्मुखम् ॥ २८२ ॥

एतादृशैरलङ्कारैरुक्तमुत्तममुच्यते ।
मध्यमे च तदुत्सेधे षड्विंशद्भागभाजिते ॥ २८३ ॥

द्व्यंशकं पादुकं चैव षड्भागं जगतीं विदुः ।
पञ्चांशं कुमुदं विद्यादेकांशं पट्टिका भवेत् ॥ २८४ ॥

[3]कर्णं चैव चतुर्भागमेकभागं तु पट्टिका ।
महापट्टी द्विभागं स्यादेकांशं चोर्ध्वपट्टिका ॥ २८५ ॥

द्विभागं स्यादेकपट्टो द्विभागं लम्बपद्मकम् ।
द्व्यंशकं लम्बपद्मं तु पद्ममूर्ध्वन्तु द्व्यंशकम् ॥ २८६ ॥

एवं प्रमाणसंयुक्तं मध्यमं पीठमुच्यते ।
अधमे तु तदुत्सेधं भागं विंशतिकं भवेत् ॥ २८७ ॥

पादुकं चैकभागन्तु जगती पञ्चभागिका ।
कुमुदन्तु प्रतिष्ठांशं पट्टिका भागमिष्यते ॥ २८८ ॥

त्रिभागं कण्ठमित्युक्तमेकांशं चोर्ध्वपट्टिका ।
महापट्टी द्विभागं स्याद्विभागं लम्बपद्मकम् ॥ २८९ ॥

---

1. ख. त्रिभागं कर्णकं भागं त्रिभागञ्चोर्ध्वपट्टिकाम्. 2. ख. मुखपट्टी स्यात्. 3. क. कर्णः.

ऊर्ध्वपद्मं तथैकांशं कनिष्टं पीठलक्षणम् ।
गोपुरात्पुरतः कुर्यान्मध्यसूत्रस्थितं यथा ॥ २९० ॥

( अधिष्ठानतलोत्तुङ्गं बलिपीठं न कल्पयेत् । )
यूथाधिपपीठम् यूथाधिपं समुद्दिश्य द्वितीयावरणेऽथवा ॥ २९१ ॥

गोपुरायाममानं तु [1]द्विगुणं समनिर्गमम् ।
अथवा कारयेद्विद्वान् प्रथमावरणे तथा ॥ २९२ ॥

वीशगोपुरयोः कुर्यात्तावन्मानं चतुर्गुणम् ।
[2]यूथाधिपं समुद्दिश्य पीठं सम्यक् समाचरेत् ॥ २९३ ॥

( पञ्चांशं वा प्रकुर्वीत पीठं सम्यक्सलक्षणम् )
द्वितीयावणे कुर्यात् तृतीयावरणेऽपि वा ॥ २९४ ॥

विष्णुभूतं समुद्दिश्य [3]पीठं सम्यक्प्रकल्पयेत् ।
सर्वदेवमयं पीठं सर्वलोकमयं तथा ॥ २९५ ॥

सर्वलोकस्य रक्षार्थं कारयेल्लक्षणान्वितम् ।
रक्षःपिशाचभूतानां नाशनं धान्यवर्धनम् ॥ २९६ ॥

श्रीसौभाग्याभिवृद्धिश्च भवेत्पीठे कृते नृणाम् ।
प्रमुखे पृष्ठतो वाऽपि कारयेद्यत्र यत्र हि ॥ २९७ ॥

( तत्र तत्र च संस्थाप्य तत्र तत्र समर्चयेत् ।
शिल्पशास्त्रोक्तमार्गेण कुर्यात्पीठं सलक्षणम् ॥

अष्टाश्रं षोडशदलमथवा कारयेद्बुधः ।
कुर्वीतचतुरश्रं वा वृत्तं वाऽपि च कारयेत् ॥ २९८ ॥

---

1. ख. द्वितीये मण्डपेऽपि वा. 2. ख. यूथाधिपं च संस्थाप्य विधिनाऽपि समर्चयेत् । एवं यूथाधिपं कृत्वा प्रमुखे तु सलक्षणम् – इति अत्र श्लोकः व्यत्ययेन दृश्यते - पञ्चांशं वेति श्लोकार्धं नास्ति. 3. ख. विधिनाऽपि बलिं ददेत् । एवमेव प्रकारेण कारयेद्विष्णुभूतकम् - इति दृश्यते

( द्वारं समुदितं तस्य तद्वारमुखमुच्यते ।
एवञ्च त्रिविधं कुर्याद्भूतपीठस्य लक्षणम् ) ॥

अथवा कारयेद्विद्वान् विमानस्यानुरूपकम् ।
आयामं च विमानस्य पञ्चधा विभजेत्पुनः ॥ २९९ ॥

द्व्यंशं पीठस्य विस्तारं त्र्यंशकं वाऽपि कारयेत् ।
[1]चतुर्थांशं तु कृत्वा तु प्रासादस्यानुरूपकम् ॥ ३०० ॥

त्र्यंशकं यत्र कुर्वीत भागं षड्विंशदाचरेत् ।
चतुर्थांशन्तु यत्रैव द्वात्रिंशद्भागमुच्यते ॥ ३०१ ॥

पूर्वोक्तेन विधानेन भागं भागेन योजयेत् ।
नित्यनृत्तं च यत्र स्याद्गोपुरात्प्रमुखेऽपि च ॥ ३०२ ॥

गोपुरस्यैव पार्श्वे तु दक्षिणोत्तरतः क्रमात् ।
सूत्रं कृत्वा तु यत्रैव गृहभागं विभज्य च ॥ ३०३ ॥

वीथिं दक्षिणतः कुर्यात्सूत्रस्यैव तु दक्षिणे ।
पीठस्योत्तरतः कुर्यात्सूत्रस्यैव तथोत्तरे ॥ ३०४ ॥

चतुर्दण्डं समारभ्य यावद्विस्तारसंयुतम् ।
गृहभागं विभज्यैव देवदासीश्च कल्पयेत् (?) ॥ ३ड५ ॥

अन्तर्वीथ्यान्तु यत्रैव मध्यसूत्रं तु मध्यतः ।
पूर्वोक्तेन विधानेन पीठं कुर्याद्विचक्षणः ॥ ३०६ ॥

इन्द्रादिषु चतुर्दिक्षु भूतरूपं प्रकल्पयेत् ।
शङ्खनादसमायुक्तं पञ्चतालेन कारयेत् ॥ ३०७ ॥

तन्मध्ये चाधिरूढस्स्यात् दण्डपाणिर्बहिर्मुखः ।
महाभूतस्य तद्रूपं जत्रोरूर्ध्वं सितेतरम् ॥ ३०८ ॥

---

1. ख. चतुर्थांशन्तु कृत्वा तु प्रासादस्य बहिःकृतम् । विंशद्भागं चतुर्विंशद्भागं चैव प्रकल्पयेत् । षड्विंशतिविभागं वा द्वात्रिंशद्वाऽपि कारयेत् इति पाठो भिद्यते.

जङ्घोरधो रक्तवर्णं रुक्माभोरुयुगं तथा ।
जान्वोरधस्तथा श्वेतमेवं वर्णसमन्वितम् ॥ ३०९ ॥

विरजेशो भूतकेतु र्महाचातकवाहनः ।
ज्येष्ठे मासि धनिष्ठायां जातस्तोकोऽस्य शैषिकः ॥ ३१० ॥

सर्वेषां परिवाराणां ध्रुवकौतुकसंयुतम् ।
उत्तमं चैकबेरन्तु मध्यमं समुदाहृतम् ॥ ३११ ॥

भागतालोन्नताभिस्तु वेदिभिस्तिसृभिर्युतम् ।
हस्तविस्तारसंयुक्तं पीठं कृत्वा तु तत्र वै ॥ ३१२ ॥

अर्चनं त्वधमं प्रोक्तं पीठं चेदालयाश्रयम् ॥ ३१२५ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
परिवारलक्षणबलिपीठविधिर्नाम पञ्चमोऽध्यायः[1]

श्रीविखनसे नमः

---

1. ख. ई. ७ अध्यायः

## षष्ठोऽध्यायः ।

ध्रुवबेरलक्षणम्

अतः परं प्रवक्ष्यामि ध्रुवबेरस्य लक्षणम् ।
[1]तद्धामगर्भाधिष्ठानद्वारकर्तृवशात्तथा ॥ १ ॥

लब्धाख्यमानमात्रैश्च बुद्धिमान् भाजयेत्समम् ।
परिहृत्याङ्गुलिच्छेदं वृद्ध्या हान्याऽथवा पुनः ॥ २ ॥

योज्यं त्याज्यं क्रमादेव युग्मायुग्माङ्गुलैः परम् ।
(योज्यं युग्माङ्गुलादूर्ध्वं त्याज्यमेकाङ्गुलात्परम् ।)
आयव्ययर्क्षवाराष्टयोन्यंशमशुभं त्यजेत् ॥ ३ ॥

बेरोदयेऽष्टनन्दाग्निहृते चाष्टार्कभाजिते ।
धनर्णयोनयः प्रोक्ताः आयाधिक्यं शुभं भवेत् ॥ ४ ॥

उत्सेधेऽष्टगुणे चैव सप्तविंशतिभाजिते ।
शिष्टमश्वयुगाद्यन्तु नक्षत्रञ्च चतुर्गुणे ॥ ५ ॥

हृते नन्दैस्तदुद्दिष्टमंशकं तस्करादिकम् ।
भुक्तिशक्तिधनोर्वीशक्लीबाभीत्यधनाऽऽह्वयाः ॥ ६ ॥

प्रेष्यश्चैव क्रमात्तेषां स्वनामसदृशं फलम् ।
वारं नवगुणे तुङ्गे सूर्याद्यं सप्तभिर्हृते ॥ ७ ॥

शुभं च शुभवाराश्च सिद्धामृतवराह्वयाः ।
ग्रामकर्तृनृपर्क्षाणां नामर्क्षानुगुणं [2]शुभम् ॥ ८ ॥

तस्य त्रैविध्यम्

त्रिचतुष्पञ्चभागे तु हर्म्यतारे कृते तथा ।
तदंशेनोत्तमं मध्यमधमं प्रतिमोदयम् ॥ ९ ॥

गर्भार्धं पञ्चभागेऽग्निभागं त्र्यंशे तु द्व्यंशकम् ।
अधमं मध्यमं श्रेष्ठं त्रिविधं प्रतिमोदयम् ॥ १० ॥

1. ई. धामगर्भस्त्वधिष्ठान. 2. आ. फलम्.

तदेव नवधा प्रोक्तं [1]त्र्यंशके तत्तदन्तरे ।
[2]स्तम्भोत्सेधं सपादञ्च सार्धं चैवाधमं क्रमात् ॥ ११ ॥

तथा द्वारवशाच्चैव अधिष्ठानवशादपि ।
[3]यजमानसमं चापि ध्रुवबेरमुदाहृतम् ॥ १२ ॥

हस्तेनाङ्गुलिभिश्चैव केचिदाहुर्ध्रुवोदयम् ।
( तिथिपङ्क्तीषुहस्तैश्च श्रेष्ठमध्यकनिष्ठकाः ।

एकत्रिंशाङ्गुलादूर्ध्वं षट्षडङ्गुलवर्धनात् । )
सप्ताधिकाङ्गुलाशीतिशतान्तं प्रतिमोदयम् ॥ १३ ॥

[4]अन्यांशेषु युगाग्न्यक्षभागेषु स्थावरोदयम् ।
जङ्गमबेरलक्षणम् जङ्गमानां तदेकांश [5]मुत्सेधं परिकीर्तितम् ॥ १४ ॥

ध्रुवबेराग्निभागे तु द्विभागं परिगृह्य च ।
तद्विभागं त्रिधा कृत्वा समस्तञ्चोत्तमं भवेत् ॥ १५ ॥

द्विभागं मध्यमं प्रोक्तमेकभागं तथाऽधमम् ।
[6]कर्मार्चार्चोत्सवानाञ्च मानं वै रामकृष्णयोः ॥ १६ ॥

एकबेरं ध्रुवं चेत्स्यात्तत्समं चौत्सवं मतम् ।
ध्रुवबेरमुखोत्सेधं बलिबेरं प्रकल्पयेत् ॥ १७ ॥

कौतुकार्धं त्रिभागैकभागं वा बलिबेरकम् ।
यदाकारं ध्रुवाकारं तदाकारञ्च कौतुकम् ॥ १८ ॥

आसने स्थानकं वाऽथ शयने स्थानकासने ।
एवं कौतुकमुद्दिष्टं स्नापनं स्थानकं भवेत् ॥ १९ ॥

कौतुकं विष्णुमूर्तिस्स्याद् ध्रुवयोर्मत्स्यकूर्मयोः ।
अन्येषामवताराणां[7] तद्वद्वा विष्णुमेव वा ॥ २० ॥

---

1. ख. त्र्यंशके न तदन्तरे. 2. ख. ततोत्सेधं 3. ई. यजमानवशात्.
4. ख. मुन्यंशेषु च गण्यैकवेदांशं 5. ख. एकांश 6. ख. कर्मध्रुवार्चौत्सवानां.
7. ख. परिवाराणां.

मत्स्यकूर्मवराहाणां नृसिंहस्य च कल्किनः ।
विष्णुमेवौत्सवं कुर्याज्जमदग्निसुतस्य च ॥ २१ ॥

ध्रुवे निरायुधे रामे कुर्यात्सायुधमौत्सवम् ।
ध्रुवबेरे तथा कृष्णे [1]सायुधे च निरायुधे ॥ २२ ॥

कृष्णरूपेष्वसंख्येषु क्रीडायष्टिधरं परम् ।
पार्थसारथिरूपं वा कुर्यादौत्सवमत्र तु ॥ २३ ॥

स्नापनं सर्वमूर्तीनां स्थानकं स्याच्चतुर्भुजम् ।
देवे स्थिते स्थिते देव्यावासीने स्थानकासने ॥ २४ ॥

विपरीतं न कुर्वीत यदि कुर्याद्विनश्यति ।
सर्वत्र देवीसंयुक्तौ कारयेत्कौतुकौत्सवौ ॥ २५ ॥

सदार्चा बलिबेरञ्च देवीरहितमाचरेत् ।
पौराणिकस्थलबेरेषु विशेषः
पौराणिकेषु स्थानेषु यथापूर्वं तथा चरेत् ॥ २६ ॥

अविधिकमलक्षण्यमप्रयुक्तं न दोषकृत् ।
आयादि षट्शुभापेक्षा [2]नेष्यते कौतुकादिषु ॥ २७ ॥

परिवारबेरलक्षणम्
बाह्वन्तं वा स्तनान्तं वा नाभ्यन्तं वा ध्रुवस्य च ।
भक्तानां परिवाराणां ध्रुवबेरोदयं मतम् ॥ २८ ॥

तत्तद्ध्रुवानुरूपाणि कौतुकानि च कारयेत् ।
देव्योर्मानलक्षणम्
देवस्य कर्णसीमान्तं बाह्वन्तं वा यथाविधि ॥ २९ ॥

हिक्कान्तं वाऽथ नाभ्यन्तं देवीमानमुदाहृतम् ।
बलिबेरार्चयोर्देव्यौ नैव कुर्याद्विचक्षणः ॥ ॥ ३० ॥

एवं बेराणि कृत्वैव शिल्पशास्त्रोक्तमार्गतः ।
पीठसङ्घातः
प्रभां पीठञ्च कृत्वैव तत्तदुक्तप्रकारतः ॥ ३१ ॥

---

1. विष्णौ. ख. 2. अन्येषां. आ.

नवरत्नानि सन्न्यस्य पीठे सङ्घातमाचरेत् ।
केचित्पद्मादधः पीठं पृथगिच्छन्ति सत्तमाः ॥ ३२ ॥

स्थापिते तु पृथक्कृत्वा [1]न पुनर्योजयेत्सुधीः ।
[2]अमन्त्रकाक्ष्युन्मेषान्ते प्रतिष्ठां पुनराचरेत् [3] ॥ ३३ ॥

प्रतिष्ठामुहूर्तविचारः

मासेषु फाल्गुने चैत्रे ज्येष्ठे वैशाखतिष्ययोः ।
[4]उत्तमं श्रावणे मध्यं कार्तिकाश्वयुजोरपि ॥ ३४ ॥

अधमं भाद्रपादेऽपि तथाऽऽषाढे तु मासि वै ।
मार्गशीर्षञ्च माघञ्च वर्जयित्वा विचक्षणः ॥ ३५ ॥

( शेषेष्वपि च कर्तव्यं त्वरितेनेति मे मतिः )

शुक्लपक्षे तथा कृष्णे त्रिभागे त्र्यंशकं विना ।
रेवतीरोहिणीतिष्यस्वातीश्रवणवासवाः ॥ ३६ ॥

चित्राश्विनीशतभिषक्पुनर्वस्वैन्दवादिषु ।
कृत्तिका नवमी शस्ता दुर्गायाः कार्तिकेऽपि च ॥ ३७ ॥

प्रतिष्ठा भास्वतश्शस्ता रवौ सिंहगते तथा ।
फाल्गुनोत्तरफल्गुन्योः श्रीप्रतिष्ठा प्रशस्यते ॥ ३८ ॥

( रौद्रं रुद्रप्रतिष्ठायां माघमासं च कथ्यते ।
श्रवणं चाश्वयुङ्मासं मत्स्यादिस्थापनाविधौ ॥ ३९ ॥

अनन्धकाणनक्षत्रे करणे च शुभोदये ।
त्रिजन्मसु प्रतिष्ठा स्याद्यजमानस्य भूपतेः ॥ ४० ॥

काव्यजीवज्ञवारांशहोराद्रेक्काणराशिषु ।
बुधवारांशकादींस्तु प्रशंसन्ति मनीषिणः ॥ ४१ ॥

---

1. न पीठे योजयेद्ध्रुवं. **आ.** 2. अत्राक्ष्युन्मेषणान्ते तु. **आ.** 3. अत्र ८ अध्यायसमाप्तिः **ख.** 4. उत्तरायणकाले तु उत्तमं समुदीरितम्. दक्षिणे श्रावणे चैव कार्तिकाश्वयुजोरपि । एवं मध्यममुद्दिष्टं प्रतिष्ठादिषु कर्मसु. **ख.**

तिथ्यः षष्ठ्यष्टमीपर्वरिक्तानन्दातिथिष्वपि ।
चरेषु करणेष्वेव शुभयोगेष्वविष्टिषु ॥ ४२ ॥

तिथिवारर्क्षयोगादिदोषैरपि विवर्जिते [1] ।
रव्यादयो ग्रहास्सर्वे चन्द्रे रिक्तेऽष्टमे ग्रहैः ॥ ४३ ॥

त्रिषडायगतैः पापैः शुभैः केन्द्रत्रिकोणगैः ।
शुभैर्युक्तेऽथवा दृष्टे कामशुक्रविवर्जिते ॥ ४४ ॥

प्रतिष्ठां देवदेवस्य कुर्यात्पूर्वाह्ण एव वै ।
ऋत्विग्वरणम् तस्मात्तु दिवसात्पूर्वं वरयेद्गुरुमत्वरः ॥ ४५ ॥

पूर्वोक्तलक्षणोपेतानृत्विजः स्थापकानपि ।
श्वेतपुष्पानुलेपैश्च श्वेतवस्त्राङ्गुलीयकैः ॥ ४६ ॥

आचार्यादीन् समभ्यर्च्य नमस्कृत्य स्वदेववत् ।
'कर्मेदं मे कुरु' ष्वेति याचेदाचार्यमादरात् ॥ ४७ ॥

'तथे'ति तेऽपि सङ्कल्प्य कृत्वा चैवाङ्कुरार्पणम् ।
ऋत्विजां नियमाः वापयित्वा ततस्सर्वे केशश्मश्रुनखानि च ॥ ४८ ॥

शुद्धास्त्रिषवणस्नाताः सूक्ते पौरुषवैष्णवे ।
जपन्तः पावमान्याख्यां यजुर्वेदस्य संहिताम् ॥ ४९ ॥

ब्रह्मयज्ञं च कुर्वन्तस्सूक्तैर्द्वादशभिस्तथा ।
द्वादशसूक्तानि जपे 'ऋतं च सत्यं च' तथा 'देवकृतस्य' च ॥ ५० ॥

'यन्मे गर्भा' दि सूक्तं च 'तरत्सम' मतः परम् ।
'वसोः पवित्र' मित्यादि 'जातवेदस' इत्यपि ॥ ५१ ॥

विष्णोर्नुकादिसूक्तं च पौरुषं सूक्तमेव च ।
एकाक्षरादिसूक्तं च ध्रुवसूक्तमतः परम् ॥ ५२ ॥

---

1. संसर्गाहस्पती मासौ समदृष्टिश्च मन्त्रिणः। मौढ्येन बाधितत्वे वा तयोरपि विशेषतः। अर्काद्यधिष्ठितर्क्षेभ्यो ये दोषाः कण्टकादयः। व्यपोह्यैव च तत्सर्वं राशावूर्ध्वोदये तथा इति अधिकं. आ.

'त्वमग्ने रुद्र' इत्यादि रुद्रसूक्तमतः परम् ।
'पवस्वा' दि तथा सूक्तमेतद्द्वादशसूक्तकम् ॥ ५३ ॥

जपन्तः प्रत्यहं देवीं सावित्रीं तु सहस्रशः ।
त्रिरात्रमुपवासं वा पादकृच्छ्रमथापि वा ॥ ५४ ॥

एकाहमुपवासं वा चरेयुस्सर्व एव ते ।
आचार्यो नियतात्मा वै चरेत्कृच्छ्रं विशुद्धये ॥ ५५ ॥

अशक्तावुपवासादौ ब्राह्मणान्वाऽपि भोजयेत् ।
'यद्देवा' दि चतुस्सूक्तैर्जुहुयादाज्यमन्वहम् ॥ ५६ ॥

'वैश्वानराये' ति जपन्नुपतिष्ठेत पावकम् ।
तथैव यजमानोऽपि चरेत्कृच्छ्रं विशुद्धये ॥ ५७ ॥

अनन्यतत्परो भूयाद्धविष्याशी जितेन्द्रियः ।
आचार्येणोक्तसम्भारान्यजमानस्समाहरेत् ॥ ५८ ॥

यागशाला

षोडशस्तम्भसंयुक्तां यागशालां प्रकल्प्य च ।
स्तम्भान्तरं चतुर्हस्तं त्रिहस्तं वा यथोचितम् ॥ ५९ ॥

अग्निकुण्डानि वेदिं च कुर्यात्तत्र यथाविधि ।
उदीच्यां [1]शयनाद्वापि सभ्यमत्रिरुवाच ह ॥ ६० ॥

(सभ्याद्दक्षिणपूर्वस्यां काश्यपोऽब्जाग्निमुक्तवान्)
अग्निकुण्डानि सर्वाणि पङ्क्तिमङ्कुरकर्मणि ॥ ६१ ॥

स्रुवादिपात्राणीध्मादि चायुधान्यष्टमङ्गलान् ।
मुष्टिमध्यप्रमाणेन कल्पयेदिति शासनम् ॥ ६२ ॥

अक्षिमोचनम्

प्रतिष्ठोक्तदिनात्पूर्वं पञ्चमेऽह्न्यक्षिमोचनम् ।
प्रपायां मण्डपे वाऽथ कूटे वाऽभिमुखे कृते ॥ ६३ ॥

---

1. शयनं, आ,

औपासनाग्निमाधाय [1]वास्तुहोमं यजेत्क्रमात् ।
पर्यग्निपञ्चगव्याभ्यां कृत्वा बिम्बस्य शोधनम् ॥ ६४ ॥

देवं द्विरत्निविस्तारे धान्यपीठे निवेश्य च ।
औपासनाग्निमाधाय कृत्वाऽऽधारं यथाविधि ॥ ६५ ॥

कुण्डे वा स्थण्डिले वाऽपि चाङ्गहोमस्तुहूयताम् ।
भूम्यादिपञ्चभूतानां मन्त्रैरपि च वैष्णवैः ॥ ६६ ॥

सूक्तेन पौरुषेणापि जयाद्यैश्च तथैव च ।
स्थूण्याद्युपानपर्यन्तमङ्गानां नामभिस्तथा ॥ ६७ ॥

वर्णं सुवर्णपात्रेण हेमतूलिकयाऽऽहरेत् ।
देवस्य दक्षिणे पार्श्वे स्थित्वाऽऽचार्य उदङ्मुखः ॥ ६८ ॥

नवेनैवाम्बरेणैव प्रच्छाद्याभिमुखे हरेः ।
वर्णे महीं समभ्यर्च्य तत्पात्रे च दिवाकरम् ॥ ६९ ॥

तूलिकायां तथा चन्द्रमात्मसूक्तं जपेत्ततः ।
वर्णं तूलिकयाऽऽदाय सूक्तं पौरुषमुच्चरन् ॥ ७० ॥

दक्षिणे नयने वामे 'त्वतो देवा' दि वैष्णवम् ।
पक्ष्म वर्म च रक्तं च शुक्लं कृष्णं च तैजसम् ॥ ७१ ॥

मण्डलानि षडेतेषां महाभूतानि पञ्च च ।
दैवतं परमात्मानं क्रमात्स्मृत्वा समाचरेत् ॥ ७२ ॥

प्रच्छन्नपटमुद्धृत्य दर्शनीयानि दर्शयेत् ।
दर्शनद्रव्यदर्शनम् धान्यराशिं तु कृत्वा तु तिलराशिं प्रकल्पयेत् ॥ ७३ ॥

आज्यं दधि मधु क्षीरं प्रस्थमात्रं पृथक् पृथक् ।
कांस्यपात्रे गृहीत्वैव सुवर्णकलशान्वितम् ॥ ७४ ॥

---

1. ख. कृत्वाऽऽधारं यथाविधि । वास्तुहोमं यजित्वा तु बिम्बस्यातीव पार्श्वतः । इति वर्तते.

दण्डके धान्यपीठे तु स्थापयेदुत्तरादिकम् ।
सामवेदं यजुर्वेदमृग्वेदाथर्ववेदकौ प ७५ ॥

क्रमेण देवताः पूज्या गामेकां लक्षणान्विताम् ।
स्वर्णशृङ्गां रौप्यखुरां सवस्त्रां कांस्यदोहनाम् ॥ ७६ ॥

सवत्सां पूर्णपुष्टाङ्गां देवाग्रे स्थापयेद्बुधः ।
धान्यराशौ तथा सोमं तिलराशौ पितॄनपि ॥ ७७ ॥

गोसावित्री

जप्त्वा 'शुद्धा इम इति गोसावित्रीमनुस्मरन् ।
पूजयेत्तत्तदङ्गेषु तदुक्ता देवता अपि ॥ ७८ ॥

तृणमुष्टिं प्रदायाऽस्यै गोसूक्तेनाभिमृश्य च ।

गोसूक्तम्

अत्र 'गावो हिम ' इति गोसूक्तमभिधीयते ॥ ७९ ॥

'इमा ओषधय ' इत्युक्त्वा तिलधान्ये च दर्शयेत् ।
आज्यं सामादिमन्त्रेण यजुर्वेदादिना दधि ॥ ८० ॥

मध्व 'म्रिमीळ ' इत्युक्त्वा क्षीरं 'शन्न ' इति ब्रुवन् ।

गोदानसूक्तम्

गोदानसूक्तमुच्चार्य 'आगोदानात्पठे ' दिति ॥ ८१ ॥

( सवत्सां चैव गामुक्तां दर्शयित्वाऽतिसुन्दरीम् )

देव्योश्च दर्शनीयानि दर्शयेच्चा पृथक् पृथक् ॥ ८२ ॥

शैलबिम्बानां विशेषः

शैलस्य वर्णहीनस्य लोहजानां तथैव च ।
कृत्वा दृढकरीं सूचीं ताभ्यां पक्ष्मादिमण्डलम् ॥ ८३ ॥

मन्त्रेण कल्पयेदन्यत् ध्रुवबेरोक्तवद्भवेत ।
द्रव्याणि दर्शनीयानि पृथगेव प्रकल्पयेत् ॥ ८४ ॥

परिवाराणामक्षिमोचनम्

मुन्यादिपरिवाराणां तत्तन्मन्त्रं पृथक् पृथक् ।
हुत्वा तु दशकृत्वस्तु तन्मन्त्रैरक्षिमोचनम् ॥ ८५ ॥

पात्रेषु दर्शयेत्तेषां पञ्चगव्यं पृथक्पृथक् ।
[1]सहदेवन चेत्तेषां पृथग्घोमं न कारयेत् ॥ ८६ ॥

शिल्पिस्पर्शशुद्धिः
शूलग्रहणमारभ्य यावदेवाक्षिमोचनम् ।
शिल्पिस्पर्शविशुद्ध्यर्थमक्ष्युन्मेषादनन्तरम् ॥ ८७ ॥

षोडशप्रस्थसम्पूर्णं कुम्भं सूत्रेण वेष्टयेत् ।
पूरयित्वा तथा तोयैर्वस्त्राभ्यामभिवेष्टयेत् ॥ ८८ ॥

पल्लवानि कुशाग्राणि दूर्वाग्राणि तथाऽक्षतम् ।
सुवर्णं पुण्यपुष्पाणि विष्णुगायत्रिया न्यसेत् ॥ ८९ ॥

उत्तराभिमुखः पश्चाद्ब्राह्ममासनमास्थितः ।
चतुर्वेदादिमन्त्रांश्च 'आप उन्दन्तु' वै क्रमात् ॥ ९० ॥

जपन् पुरुषसूक्तञ्च मन्त्रानपि च वैष्णवान् ।
कूर्चेनैव तु तत्तोयमभिमृश्य समाहितः ॥ ९१ ॥

सकाञ्चनेन कूर्चेन तत्कुम्भस्थेन वारिणा ।
'आपो हिरण्यवर्णा' द्यैः पवमानादिभिस्त्रिभिः ॥ ९२ ॥

'शन्नो देवी' ति मन्त्रेण पुंसूक्तेन च वैष्णवैः ।
शुद्ध्यर्थं प्रोक्षयेद्बेरं पुण्याहमपि वाचयेत् ॥ ९३ ॥

एवं चित्रप्रतिष्ठायां चित्राभासे च कारयेत् ।
अधिवासः: पञ्चगव्याधिवासः
बिम्बानां कौतुकादीनामधिवासनमारभेत् ॥ ९४ ॥

आलयस्योत्तरे पार्श्वे प्रपायामवटे कृते ।
लवुबेरं जलद्रोण्यां पञ्चगव्यादिभिःस्तृते ॥ ९५ ॥

आज्यं 'शुक्रम' सीत्युक्त्वा षोडशांशं प्रगृह्य च ।
'दधिक्रावृण्ण' इत्युक्त्वा क्षिप्त्वा तद्द्विगुणं दधि ॥ ९६ ॥

---

1. आ· गर्भदेवं न चेत्तेषां पृथग्घामं न कारयेत् ?

'आप्याय' स्वेति मन्त्रेण त्रिगुणं क्षीरमाहरेत् ।
'गन्धद्वा' रेति मन्त्रेण गोमयञ्च चतुर्गुणम् ॥ ९७ ॥

षड्गुणं चैव गोमूत्रं गायत्र्या तत्र निक्षिपेत् ।
'वसोः पवित्र' मित्युक्त्वा तेनापूर्यावटं पुनः ॥ ९८ ॥

पञ्चगव्ये 'शिवं शर्वमीशमव्यक्त' मर्चयेत् ।
विष्णुसूक्तं समुच्चार्य प्राक्छिरस्तत्र शाययेत् ॥ ९९ ॥

अतीते तद्दिने बिम्बं विष्णुसूक्तेन चोद्धरेत् ।
'वीर श्चतस्त्र' इत्युक्त्वा शुद्धोदैरभिषिच्य च ॥ १०० ॥

क्षीराधिवासः संशोध्यैव जलद्रोणीं 'शन्नो देवी' ति मन्त्रतः ।
क्षीरेण पूरयित्वाऽत्र 'अथर्वं क्षीर' मित्यपि ॥ १०१ ॥

'पवित्रं पुण्य' मित्युक्त्वा क्षीरेऽथर्वाणमर्चयेत् ।
पद्मोत्पलादिपुष्पाणि समास्तीर्य च तत्र वै ॥ १०२ ॥

शयनानि च पश्चात्त समास्तीर्य कुशैस्सह ।
क्षीरं क्षीरोदधिं तत्र शायिनं शेषशायिनम् ॥ १०३ ॥

देवदेवं स्मरंस्तत्र पूर्ववच्छाययेद्धरिम् ।
अतीते तद्दिने बिम्बं पश्चादुद्धृत्य पूर्ववत् ॥ १०४ ॥

संस्नाप्य भूषयित्वैव नववस्त्रैश्च भूषणैः ।
जलाधिवासः नदीतटाकवापीषु पूर्वालाभे तथोत्तरे ॥ १०५ ॥

प्रपां कृत्वा तु परितः पञ्जरं जालकाकृतिम् ।
कारयित्वा तु रक्षार्थं वितानाद्युपशोभितम् ॥ १०६ ॥

नववस्त्राणि चास्तीर्यदर्भपुष्पकुशैस्सह ।
'पुण्यं तीर्थं शिवं तोय' मिति तत्र समर्चयेत् ॥ १०७ ॥

पूर्ववच्छयने देवं शाययेदप्रमादतः ।
[1] एवं कर्तुमशक्तश्चेत्त्रिदिनं केवले जले ॥ १०८ ॥

दिनमेकमहर्वाऽथ यामं वा कालमेव वा ।
मन्त्रवद्बिम्बशुद्ध्यर्थमधिवासं समाचरेत् ॥ १०९ ॥

अशक्यबेर-स्यस्नापनम्

अशक्यमधिवासाय गौरवाद्बिम्बमत्वरः ।
पञ्चगव्यैश्च क्षीरेण कुशोदैश्च पृथक्पृथक् ॥ ११० ॥

शतमष्टोत्तरं कुम्भान् पूरयित्वाऽत्र देवताः ।
पूर्ववत्पूजयित्वैव मन्त्रैरेवाभिषेचयेत् ॥ १११ ॥

प्रतिष्ठादिन-पूर्वदिनकृत्यम्

प्रतिष्ठोक्तदिनात्पूर्वं सायं सन्ध्यामुपास्य च ।
सायं होमवसाने तु आचार्याद्याः पृथक्पृथक् ॥ ११२ ॥

प्राणायामशतं कृत्वा जप्त्वा सूक्तानि पूर्ववत् ।
तथाऽनुष्ठितकर्माणं यजमानं ततो गुरुः ॥ ११३ ॥

'अणोरणीया' नित्युक्त्वा प्रोक्षयेद्द्विजमत्वरः ।
ऋत्विजस्तान्समाहूय नियुञ्जीत स्वकर्मसु ॥ ११४ ॥

वास्तुशुद्धिः

तस्याऽऽलयस्योत्तरतः कुण्डे वा स्थण्डिलेऽथवा ।
वास्तुहोमं तथा हुत्वा गर्भगेहादिसर्वतः ॥ ११५ ॥

पर्यग्निपञ्चगव्याभ्यां पुण्याहेनापि शोधयेत् ।
देवालयस्याभिमुखे पञ्चवर्णैरलङ्कृते ॥ ११६ ॥

अग्निमथनम्

धान्यराश्युपरि न्यस्य त्वरणी प्राङ्मुखश्शुचिः ।
मन्थदण्डे हरिं ध्यायेदरण्यां मेदिनीं तथा ॥ ११७ ॥

ऊर्ध्वायामग्निमभ्यर्च्य मौञ्जीरज्जौ च वासुकिम् ।
जपन् वैश्वानरं सूक्तं रज्ज्वा मन्थं च वेष्टयेत् ॥ ११८ ॥

---

1. 'एवं कर्तुमशक्तश्चेत्सद्यः कालो विधीयते । अधिवासमशक्तश्चेत्सद्य एवक्रियाद्यदि पञ्चगव्यैश्च क्षीरेण' इति पाठः आ.

'जातवेदस'मुच्चार्य मथनं कारयेद्बुधः ।
करीषं परितः कृत्वा तत्सूक्तेनाहरेत्पुनः ॥ ११९ ॥

'अयं त इध्म' इत्युक्त्वा प्रक्षिपेदिन्धनानि च ।
'घृतप्रतीक' इत्युक्त्वा प्रज्वाल्याग्निं प्रणम्य च ॥ १२० ॥

'आयुर्दा' इति मन्त्रेण त्वप्रमादं निधापयेत । १२१ ॥

मथनाग्न्यलाभे कर्तव्यम्

अथवा श्रोत्रियागारादग्निमाहृत्य वै तथा ।
तत्र वैश्वानरं सूक्तं यजेदिति च केचन ॥ १२२ ॥

वास्त्वग्नेःकार्यान्तर योग्यताभावः

यदि प्रणीयते मोहाद्वास्तुहोमे हुताशनः ।
तत्सर्वमशुभं कर्म तमग्निं च निरस्य च ॥ १२३ ॥

मथितं श्रोत्रियागारादाहृतं वा निधाय च ।
शान्तिहोमावसाने तु यथोक्तं होममाचरेत् ॥ १२४ ॥

पञ्चाग्निषु अग्निप्रणयनम्

पूर्वं तु गार्हपत्याग्नावाघारं तेन वह्निना ।
'गार्हपत्याग्नि'मित्युक्त्वा 'यज्ञदैवत'मित्यपि ॥ १२५ ॥

'तत्रों भूः पुरुषं' चेति 'अच्युतं' चेति कीर्तयन् ।
आवाह्य जुष्टाकारञ्च स्वाहाकारञ्च कारयेत् ॥ १२६ ॥

तस्मादग्निं समादाय दक्षिणाग्नौ ततः परम् ।
'जातवेद' इति प्रोच्य प्रणीयाग्निं यथाविधि ॥ १२७ ॥

'अन्वाहार्याग्नि'मित्युक्त्वा 'यज्ञदैवत'मित्यपि ।
'ओं भुवः पुरुषं सत्यं'-कुर्यादावाहनादिकम् ॥१२८ ॥

अग्निं तु गार्हपत्याग्ने 'रग्न आयाहि' मन्त्रतः ।
प्रणीयाऽहवनीय्याग्नौ वदन्नाहवनीयकम् ॥ १२९ ॥

'यज्ञदैवत'मित्युक्त्वा ओं सुवः पुरुषं' त्विति ।
उच्चरन् 'पुरुषं' चेति कुर्यादावाहनादिकम् ॥ १३० ॥

'अयं ते योनि' रित्यग्निमावसथ्ये प्रणीय च ।
'आवसथ्याग्नि' मित्युक्त्वा 'यज्ञदैवत' मित्यपि ॥ १३१ ॥

'ओं महः पुरुषं' चेति देवम 'प्यनिरुद्धकम्' ।
इत्येवमावसथ्याग्नौ कुर्यादावाहनादिकम् ॥ १३२ ॥

'मयि गृह्णामि' मन्त्रेण सभ्ये चाग्निं प्रणीय च ।
'सभ्याग्निं यज्ञदे' वेति 'ओं जनः पुरुषं' तथा ॥ १३३ ॥

'विष्णु' मावाहयामीति सभ्यस्यावाहनादिकम् ।
'घृतप्रतीक' इत्यग्निं पौण्डरीके प्रणीय च ॥ १३४ ॥

'पौण्डरीकाग्नि' मित्युक्त्वा 'यज्ञदैवत' मित्यपि ।
'ओं तपः पुरुषं' चेति 'वासुदेव' मतः परम् ॥ १३५ ॥

'ओं तपः पुरुषं' चेति 'नारायण' मिति ब्रुवन् ।
एवमावाहनं कृत्वा निरुप्याज्याऽऽहुतीर्यजेत्[1] ॥ १३६ ॥

सर्वाग्नीनां प्रणयनं प्रकुर्याद्गार्हपत्यतः ।
अग्निध्यानम् [2]भ्राजमानसमासीनं कुण्डमध्ये हुताशनम् ॥ १३७ ॥

प्रत्यङ्मुखं रक्तवर्णं तरुणादित्यसन्निभम् ।
स्वाहास्वधाभ्यामासीनं सर्वदेवात्मकं परम् ॥ १३८ ॥

एकं वै हृदयं तस्य त्रयः पादाश्शिरोद्वयम् ।
चतुश्शृङ्गं चतुर्नेत्रं सप्तजिह्वं द्विनासिकम् ॥ १३९ ॥

दक्षिणाऽऽस्ये चतस्रस्तु तिस्रो जिह्वास्तथोत्तरे ।
सप्तहस्तं स्वरत्नाग्निं सर्वाभरणभूषितम् ॥ १४० ॥

कृष्णाजिनोत्तरासङ्गं मौञ्जीदण्डसमन्वितम् ।
स्रुक्स्रुवाक्षस्रजश्शक्तिं दधतं दक्षिणैः करैः ॥ १४१ ॥

---

1. ख. औपासनाग्निमित्युक्त्वा यज्ञदैवतमित्यपि ॥ औपासनाग्नावन्येन आवाह्याज्यं जुहोति वै । तथाऽऽज्यं जुहुयादेवमित्याघारविधिः क्रमात् इत्यधिकं ख कोशे दृश्यते.
2. क. इतः प्रभृति आध्यायान्तं ख. ग. कोशयोः न दृश्यते. अत्र अध्याय समाप्तिः ख. आ. ६

चामरं व्यजनं चाऽज्यपात्रं वै वामबाहुभिः ।
बिम्बञ्च यज्ञमूर्तेस्तु ध्यायेदेवमिति श्रुतिः ॥ १४२ ॥

अग्नेः सप्तजिह्वाः

हिरण्या कनका रक्ता कृष्णा चैव वसुप्रभा ।
अतिरक्ता बहुरूपा जिह्वास्सप्त प्रकीर्तिताः ॥ १४३ ॥

ईशानेन्द्राग्निनिर्ऋतिवरुणानिलमध्यगाः ।

आघारान्ते वैष्णवहोमः

आघारान्ते तु होतव्यं सप्तजिह्वासु वैष्णवम् ॥ १४४ ॥

जिह्वाभेदेन हविर्भेदहोमः

हिरण्यायां समिद्धोमं कनकायां यजेद्धृतम् ।
सर्षपांश्चैव रक्तायां कृष्णायां लाजमेव च ॥ १४५ ॥

वसुप्रभायां देवन्तं ध्यात्वाऽऽपूपं जुहोति च ।
होतव्यमतिरक्तायां तिलं सर्वामरप्रियम् ॥ १४६ ॥

हविर्विशेषहोमे अग्निभावनाप्रकारः

अन्यानि बहुरूपायां जुहोति मनसा स्मरन् ।
समिद्धोमे स्थितो वह्निश्शेते स च घृताऽऽहुतौ ॥ १४७ ॥

आसीनश्चरुहोमेऽपि तिलसर्षपसक्तुषु ।
अन्यथाऽग्नौ हुतं यत्तत् सर्वं भवति निष्फलम् ॥ १४८ ॥

हविर्भेदेन आहुतिप्रमाणम्

चतुरङ्गुलिसंस्राव्याप्यविच्छिन्ना घृताहुतिः ।
अङ्गुष्ठपर्वमात्रा तु गृहीताऽन्नाहुतिः स्मृता ॥ १४९ ॥

अन्नमक्षप्रमाणं स्याल्लाजं मुष्टिमितं भवेत् ।
तिलसर्षपसक्तूनां शुक्तिमात्राऽहुतिर्भवेत् ॥ १५० ॥

होमद्रव्याधिदेवाः

अतः परं प्रवक्ष्यामि होमद्रव्याधिदेवताः ।
सिकताया मृदश्चैव पृथिवी आधिदेवता ॥ १५१ ॥

स्थाण्डिलं सोमदैवत्यं कुण्डवेद्या यथाक्रमम् ।
ऊर्ध्ववेद्यधिपो ब्रह्मा मध्यवेद्याः प्रजापतिः ॥ १५२ ॥

सभ्ये च पौण्डरीके च सोमोऽधोवेदिदेवता ।
दलेषु वसवः प्रोक्ताः खननं पितृदैवतम् ॥ १५३ ॥

लेखाः स्कन्दाधिदेवत्याः ऋषयस्सप्तबर्हिषाम् ।
हव्यवाडिन्धनाधोशो विहारो वायुदैवतः ॥ १५४ ॥

पञ्चभूताधिदैवत्यं करकं समुदाहृतम् ।
कूर्चाग्रग्रन्थिमूलेषु ब्रह्मविष्ण्वीश्वराः क्रमात् ॥ १५५ ॥

चत्वारो विष्णुदैवत्याः परिस्तरणकूर्चकाः ।
पश्चिमः परिधिः प्रोक्तस्तथा गन्धर्वदैवतः ॥ १५६ ॥

दक्षिणश्चेन्द्रदैवत्यः परिधिः परिकीर्तितः ।
उत्तरः परिधिः प्रोक्तो मित्रावरुणदैवतः ॥ १५७ ॥

तथोर्ध्वसमिधोर्देवः [1]प्रजापति रिति स्मृतः ।
स्रुवस्सोमाधिदैवत्यो जुह्वादिषु दिवाकरः ॥ १५८ ॥

ब्रह्मसोमौ तु सम्प्रोक्तौ तथा प्रणिधिपात्रयोः ।
वर्षिष्ठसमिधोरग्निराज्यस्थाल्यां वसुन्धरा ॥ १५९ ॥

तोयस्य वरुणो देवश्चाज्यस्य च हुताशनः ।
चरुरिन्द्राग्निदैवत्य एवं ध्यात्वा जुहोति च ॥ १६० ॥

होमद्रव्यविशेषे पात्रविशेषः

वैष्णवं जुहुयाज्जुह्वा चरुणाऽग्निषु षट्स्वपि ।
आज्यमप्यग्निकुण्डेषु स्रुवेण जुहुयादिति ॥ १६१ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
महाप्रतिष्ठाकालनिर्णय संभाराहरण अक्षिमोचनाधिवासत्रया-
शक्यबिम्बाधिवासाऽऽचार्यानुज्ञाऽग्निमथनाग्निप्रणयनाग्निध्यानाग्नि
जिह्वास्थाननिर्णय होमद्रव्यप्रमाण होमद्रव्याधि-
देवनिर्णयो नाम षष्ठोऽध्यायः[2]

---

1. प्रजापतिरिथी स्मृतौ ख. 2. सप्तमोऽध्यायः ई.

# सप्तमोऽध्यायः



(उपोषितैः प्रकर्तव्यमृत्विग्भिर्वह्निमन्थनम्
अग्नेः प्रणयनं तोयाहरणं कुम्भपूजनम् ।

अथवा फलमूलाद्यैर्भवेयुः कृतभोजनाः
अशक्तौ विधिरेष स्यात्सर्वेषाञ्च पदार्थिनाम् )

कुम्भपूजाप्रकारः जलाहरणम्.

प्राङ्मुखः प्रयतो भूत्वा 'धारा'स्विति च मन्त्रतः ।
पुण्यनद्यां जलं शुद्धं शुद्धपात्रे समाहरेत् ॥ १ ॥

स्नात्वा गुरुः प्रसन्नात्मा श्वेतगन्धानुलेपनः ।
उत्तरीयाङ्गुलीयाद्यैर्भूषणैरपि भूषितः ॥ २ ॥

पादौ प्रक्षाल्य चाऽचम्य श्वेतमाल्यपरिष्कृतः ।

कुम्भलक्षणम्

द्वात्रिंशत्प्रस्थसम्पूर्णं लौहं मृण्मयमेव वा ॥ ३ ॥

पक्वालर्कफलाकारं खण्डस्फुटितवर्जितम् ।

कुम्भसंस्कारः

'इषे त्वोर्जे त्वे'ति जपन् 'स्वस्ति दे'त्यथवा पुनः ॥ ४ ॥

'इन्द्रं नरो न' इति वा तन्तुना परिवेष्टयेत् ।
'शुची वो हव्या' इत्युक्त्वा प्रक्षाल्याद्भिस्तु सर्वतः[1] ॥ ५ ॥

वस्त्रेणोत्पूय तत्तोय 'मिदमापश्शिवा' इति ।
कुशैः पश्चात्समुत्पूय कुम्भं तेनैव वारिणा ॥ ६ ॥

'आप उन्द'न्त्विति जपन् पूरयेत्सुसमाहितः ।
'[2]आपो हि' ष्ठेत्यभिमृशेत्सर्वगन्धाधिवासितम् ॥ ७ ॥

[3]रत्नानि गजताक्ष्यौं च मङ्गलान्यायुधान्यपि ।
कूर्मरूपं च सौवर्णं कुशपुष्पाक्षतानि च ॥ ८ ॥

---

1. आ. मूक्तः. 2. ख. आपो घेत्यभिमृश्यैव. 3. ख. नक्रत्नं गजं तार्क्ष्यं.

सुवस्रुवौ वर्णवृद्ध्यर्थं [1]श्वेतच्छत्रध्वजादिकम् ।
सन्न्यसेद्विष्णुगायत्र्या [2]अष्टनिष्ककृतं पृथक् ॥ ९ ॥

तानि द्व्यङ्गुलमात्राणि सौवर्णान्येव निक्षिपेत् ।
क्षौमाभ्यामथवा द्वाभ्यां सूक्ष्मवस्त्रद्वयेन वा ॥ १० ॥

कुम्भस्य[4] वेष्टयेत्कण्ठं तथा कुसुमदामभिः ।
अश्वत्थपल्लवं कूर्चं न्यसेद्दूर्वाङ्कुराण्यपि ॥ ११ ॥

कुम्भे रत्नादि प्रक्षेपणप्रयोजनम्

अस्थि रत्नं सिरास्तन्तुर्मांसं मृत्स्ना प्रकीर्तिता ।
शोणितं रक्तमृत्तत्र जलं मेदस्तथैव च ॥ १२ ॥

शुक्लं तु कूर्चमित्युक्तं चर्म स्याद्वेष्टनाम्बरम् ।
सप्तधातव इत्येते कुम्भेषु कलशेषु च ॥ १३ ॥

एतेष्वेकं विहीनं चेन्नास्ति तत्राऽस्य सन्निधिः ।
रत्निमात्रायते रम्ये तालोत्सेधे त्रिवेदिके ॥ १४ ॥

देवस्य पुरतः कुम्भं धान्यपीठे तु सन्न्यसेत् ।

अक्षरन्यासः ध्यानम्

वेष्टितं प्रणवैर्दिक्षु बीजवर्णादिं हृदि न्यसेत ॥ १५ ॥

आत्मसूक्तं ततो जप्त्वा पौरुषं सूक्तमेव च ।
नारायणानुवाकं च हृदये भावयेज्जपेत् ॥ १६ ॥

शुद्धस्फटिकसङ्काशमर्धचन्द्रसमाकृतिम् ।
[5]वारुणं मण्डलं ध्यायेत्पूते कुम्भस्थवारिणि ॥ १७ ॥

वैष्णवैः प्रणवैश्चापि तोयं तदभिमन्त्रयेत् ।
जगत्कारणमव्यक्तमादिबीजं सुवर्णरुक् ॥ १८ ॥

तदाधावे सुसन्न्यस्य प्रणवैर्दिक्षु वेष्टयेत् ।
'सहस्रशीर्षं देव' मिति जप्त्वा समाहितः ॥ १९ ॥

---

1. क. स्वर्णच्छत्रध्वजादिकान्. 2. ख. तुलाद्यं युगलाङ्गलम्. 3. क. पद्माभ्यां
4. कण्ठमावेष्ट्य पुष्पमालापरिष्कृतम्. ई. 5. क. ततो वारिणि कुम्भस्य ध्यायेद्वरुणमण्डलम्.

गुरूपदेशसंसिद्धो भगवद्ध्यानतत्परः ।
आचार्यस्सुप्रसन्नात्मा ध्यानकर्म समारभेत् ॥ २० ॥

स्वस्तिकासनमासीनो जितेन्द्रिय उदङ्मुखः ।
दक्षिणं पादमूर्ध्वञ्च वामपादमधस्तथा ॥ २१ ॥

जान्वन्तरे तदङ्गुष्ठौ द्वौ च सम्यङ्निगुह्य च ।
अङ्के वामं न्यसेत्पाणिमन्यञ्चोत्तानमूर्ध्वतः ॥ २२ ॥

ऋजुकायो निवातस्थप्रदीप इव निश्चलः ।
एवमासनमासीनो नासान्ताहितलोचनः ॥ २३ ॥

प्राणानायम्य विधिना रेचपूरककुम्भकैः[1] ।
विषयेभ्यश्च सर्वेभ्यः प्रत्याहृत्येन्द्रियाणि च[2] ॥ २४ ॥

एकाग्रं च मनः कृत्वा ततः पश्येत्समाधिना ।
पद्मकोशप्रतीकाशे विश्वस्यायतने पृथौ ॥ २६ ॥

हृदयेऽग्निशिखामध्ये परमात्मा व्यवस्थितः ।
(ध्यानात्तद्दृश्यते तस्य यत्सूक्ष्मं रूपमव्ययम् । )
निवात इव दीपार्चिर्विद्युल्लेखेव चाम्बरे ॥ २७ ॥

ईश्वरस्यात्मनो ज्योतिर्य एष पुरुषोऽक्षरः ।
शुद्धज्ञानात्मकं ब्रह्म तदक्षरमुदाहृतम् ॥ २८ ॥

यदोङ्कारमयं ब्रह्म सम्यग्धृदि निधाय च[3] ।
तच्चिन्तनपरं ध्यानं तद्ब्रह्मार्पणमुच्यते ॥ २९ ॥

ब्रह्मभूते च देहेऽस्मिन् दृढं कुर्यान्मनोऽर्पणम् ।
तत्राचलं मनः कृत्वा धारणां सम्प्रविश्य च ॥ ३० ॥

---

1. क. प्राणायामश्चकृत्वैव वशं नीत्वा मनस्ततः इत्यधिकं दृश्यते. 2. क. यत्रो[illegible] मनो याति निगृह्य च मनस्ततः इत्यधिकम्. 3. क. तच्चिन्तनपरं ध्यानं तद्ब्रह्मार्पणमुच्यते [illegible], ग. हृदिस्थितमजं देवं तद्ब्रह्मार्पणमुच्यते इति चाधिकं दृश्यते.

निर्गुणं निर्मलं नित्यमक्षरं सर्वकारणम् ।
निष्कलं सकलं देवं तेजोभासुरभासितम्[1] ॥ ३१ ॥

विष्णुं तं मनसा ध्यायन् भक्त्यैव परया मुदा ।
तं रुक्मवर्णं रक्तास्यं रक्तनेत्रं सुखोद्वहम् ॥ ३२ ॥

किरीटहारकेयूरप्रलम्बब्रह्मसूत्रिणम् ।
कौस्तुभोद्भासितोरस्कं श्रीवत्साङ्कं चतुर्भुजम् ॥ ३३ ॥

शङ्खचक्रधरं सौम्यं दक्षिणेनाभयप्रदम् ।
कटिन्यस्तेतरकरं शुकपिच्छाम्बरं परम् ॥ ३४ ॥

एवं तं परमात्मानं प्रणवात्मकमव्ययम् ।
[2](दक्षिणेनैकहस्तेन भक्तानामभयप्रदम् ।

वामेनाप्यन्यहस्तेन स्वकट्यामवलम्ब्य च ।
पराभ्याञ्चकराभ्याञ्च शङ्खचक्रधरं परम् ।

शुकपिञ्छाम्बरधरं विष्णुं प्रणवरूपिणम् ।)
एकाग्रमनसा भक्त्या सकलीकृत्य भावयन् ॥ ३५ ॥

कुम्भेऽम्भसि ततो भक्त्या देवमावाहयेत् ततः[3] ।
आसनादिभिरभ्यर्चेदर्घ्याद्याचमनान्तकैः ॥ ३६ ॥

आवाहनशब्दार्थः
आवाहनप्रकारभेदाः

सर्वत्र व्यापिनस्तस्य परस्य परमात्मनः ।
एकत्र स्मरणं यत्तदावाहनमुदीरितम् ॥ ३७ ॥

अरण्यां व्यापितो वह्निरेकत्र ज्वलितो यथा ।
तथा ध्यानेन भक्तस्य हृदि विष्णुः प्रकाशते ॥ ३८ ॥

[4]मन्त्रैरावाहितो बेरे स्थले कूर्चे जलेऽथवा ।
भक्तानुकम्पया स्थित्वा पूजां गृह्णति पूजितः ॥ ३९ ॥

---

1. ख. तेजोभास्वरभासुरम्. 2. इत आरभ्य श्लोकद्वयमन्यत्र न दृश्यते. 3. क. हरिम्. 4 ख. मन्त्रेण.

वदन्त्यावाहनं केचिद्धरेरादित्यमण्डलात् ।
देवेन सह तत्कुम्भे देव्यौ ध्यायेद्यथाविधि ॥ ४० ॥

मूलालयप्रतिष्ठा चेन्नीत्वा बालालयाद्धरिम् ।
देवं विशेषतोऽभ्यर्च्य हविस्सम्यङ् निवेदयेत् ॥ ४१ ॥

तद्बिम्बसंस्थितां शक्तिं कुम्भे कूर्चेन विन्यसेत् ।
ध्रुवानुरूपं तद्बिम्बं यदि दोषविवर्जितम् ॥ ४२ ॥

तदेव कौतुकं कुर्यान्नानुरूपं तु [1]लौकिकम् ।
संस्थाप्य [2]लौकिकादीनां स्थानादन्यत्र पूजयेत् ॥ ४३ ॥

सदोषं बिम्बमम्भोधौ नद्यां वा विधिना त्यजेत् ।
भूपरीक्षादिकर्मार्थमन्यस्थानस्थलौकिकम् ॥ ४४ ॥

याचितं चेत्प्रदातव्यं कर्मान्ते तद्यथा पुरा ।
स्थापयेद्वाग्नि पूर्वस्मिन् उत्सवार्थमथापि वा ॥ ४५ ॥

बालालयप्रतिष्ठार्थं याचयेदिति केचन ।
अन्यालयध्रुवस्यैतदनुरूपं भवेद्यदि ॥ ४६ ॥

कौतुकं चौत्सवं वापि स्थापयेदिति केचन ।
स्नपनोद्योगः वदन् शकुनसूक्तं तु कुम्भं बिम्बं समानयेत् ॥ ४७ ॥

कौतुकं पूर्वतो देव्यावौत्सवं स्नापनं क्रमात् ।
आचार्यश्शिरसा कुम्भं धारयन्नग्रतो व्रजेत् ॥ ४८ ॥

स्थापका बिम्बमादाय गच्छेयुरनु तं गुरुम् ।
विष्णुसूक्तेन देवेशं श्वभ्रमध्ये निवेश्य च ॥ ४९ ॥

श्वभ्रस्य दक्षिणे धान्यपीठे हस्ततलायते ।
षडङ्गुलसमुत्सेधे न्यसेच्छ्वभ्रसमीपतः ॥ ५० ॥

---

1. कौतुकम्. ई. 2. कौतुकादीनां संस्नाप्य. ई.

धान्यपङ्क्तिः

देव्यावप्यौत्सवं बिम्बं स्नापनं च तथा न्यसेत् ।
पङ्क्तिं तदग्रतो धान्यै[1]र्दक्षिणाद्युत्तरान्तकम् ॥ ५१ ॥

[2]कुर्याद्धस्तत्रयायामां हस्तविस्तारसंयुताम ।

कलशन्यासः स्नपनद्रव्याणि

उत्तरादि न्यसेत्तत्र कलशान् तन्तुवेष्टितान् ॥ ५२ ॥

[3]क्षीराज्यमधुसिद्धार्थाक्षतोदकुशचन्दनैः ।
पूरितांश्च सकूर्चांश्च सोपस्नानान्यथाक्रमम् ॥ ५३ ॥

[4]तदर्धपादहीनानि सिद्धार्थादीनि निक्षिपेत् ।
दध्याज्यमधुदुग्धानामाढके सति दुर्लभे ॥ ५४ ॥

त्रिपादमर्धहीनं वा पादार्धं वा यथोदयम् ।
सन्न्यसेदुत्तराद्येव देवेशाभिमुखांस्तथा ॥ ५५ ॥

उपस्नानकलश-न्यासः, कलशाधि-देवार्चनम्

तदुपस्नानकलशांस्तत्तत्पृष्ठे च सन्न्यसेत ।
अथर्वसामऋग्वेदाः आदित्यः काश्यपस्तथा ॥ ५६ ॥

ऋतवो मुनयश्चैव सप्त द्रव्याधिदेवताः ।
[5]अश्विनौ वत्सरा वायुः अप्सरा मरुतस्तथा ॥ ५७ ॥

तक्षको वायवश्चैव सप्तोपस्नानदेवताः ।
त्रयोदशोपचारैस्तांस्तत्तन्नामभिरर्चयेत् ॥ ५८ ॥

स्नपनप्रकारः

'शन्नो देवी' 'रम आया—ह्यग्निमील' इति क्रमात् ।
'पूतस्त-स्येमा ओषधयः' 'अभित्वा शूर' इत्यपि ॥ ५९ ॥

---

1. दक्षिणाद्युत्तरादिकम्. ख. 2. कुर्याद्धैरायतायामां. ख. 3. क्षीराज्यमधुसिद्धार्थकुशगन्धाक्षतोदकैः ख.। 4. दशाष्टांशादहीनानि ई। 5. उपस्नानाधिदेवश्च अश्विनौ वत्सरानसून्। पवित्रं वाक्पतिश्चैव तक्षकं मरुतस्तथा। समभ्यर्च्य च देवेशं संस्नाप्यैव च मन्त्रवित्। शन्नो देवी' रित्यादि ख पाठः ॥

'चत्वारि वा' गिति जपन् स्नापयेत्सप्तभिश्श्रुतैः ।
'वारीश्चतस्र' इत्युक्त्वा सर्वोपस्नानमाचरेत्[1] ॥ ६० ॥

द्रव्याणि प्रोक्ष्य चादाय गायत्र्या प्रणवेन वा ।
स्वललाटान्तमुद्धृत्य त्रिस्सकृद्वा प्रदक्षिणम् ॥ ६१ ॥

तत्तन्मन्त्रावसाने तु स्नापयेत्पञ्चमूर्तिभिः ।
पूर्वं कुम्भञ्च सम्प्रोक्ष्य तत्तद्द्रव्यैः पृथक्पृथक् ॥ ६२ ॥

सर्वेषामवताराणां देव्योः परिषदामपि ।
तत्तत्प्रधानमन्त्रान्ते तत्तन्मूर्तिभिराचरेत् ॥ ६३ ॥

'इषे त्वोर्जे' त्वेति जपन् 'आप उन्द' न्त्विति क्रमात् ।
शोधयेद्गन्धतोयेन स्नापयेच्च यथाविधि ॥ ६४ ॥

श्वभ्रादादाय देवेशं पीठे संस्थाप्य नैर्ऋते ।
[2] 'मित्रस्सुपर्ण' इत्युक्त्वा प्लोतेन विमृजेत्पुनः ॥ ६५ ॥

नवाम्बरोत्तरीयस्रग्भूषणैरपि भूषयेत् ।
देव्योश्चैवौत्सवादीनां तत्तद्देव्योरपि क्रमात् ॥ ६६ ॥

सर्वेषां परिवाराणां स्नापनं पृथगेव वा ।
मध्ये चोष्णोदकस्नानं प्रवदन्ति महर्षयः ॥ ६७ ॥

क्षीराज्यादीनि संशोध्य स्नाप्यालङ्कारमर्पयेत् ।
शयनाधिवासारम्भः शय्यावेद्यास्तु मध्ये च 'वेदाह' मिति मन्त्रतः ॥ ६८ ॥

---

1. द्रव्यं प्रति समभ्यर्च्य कुम्भं प्रोक्ष्यैव मन्त्रवित्
'इषे त्वो र्जेत्या' दि जपन् 'आप उन्दन्तु' वै पुनः ।
उष्णोदकेन संस्नाप्य द्रव्येणाम्लादिना क्रमात्
शोधयित्वा सुगन्धेन तोयेन स्नापयेत्तथा ' इति - अ पाठः ॥

2. प्लोतवस्त्रेण संमृज्य नवेनोत्तमवाससा । नवेनेवोत्तरीयेण भूषणैरपि शक्तितः । माल्यैर्गन्धैश्च देवेशमलङ्कुर्यात्प्रयत्नतः ' इति अ पाठः ।

तिलतण्डुलशालीनां राशिं कृत्वा विपर्ययात् ।
(शय्या वितर्दिक्रान्तस्था तद्बिम्बार्धाधिकायता ।
अधः खट्वाङ्गसंयुक्ता चोर्ध्वे पट्टीसमायुता ॥
शाण्यादिरज्जुसंयुक्ता खट्वा शय्या प्रकीर्तिता ।
एतल्लक्षणसंयुक्ता बिल्वादिफलका यदि ॥
शय्याख्यफलका प्रोक्ता यथालाभं समाहरेत् )
तदूर्ध्वे चर्मजादीनि 'वेदाह' मिति मन्त्रतः ॥ ६९ ॥
व्रीहीणां तण्डुलानाञ्च राशिमास्तीर्य चोर्ध्वतः ।
शयनानि समास्तीर्य क्रमेणैवं पृथक्पृथक् ॥ ७० ।

पञ्चशयनानि

चर्मजै रोमजैश्चैव मुण्डजैरण्डजैस्तथा ।
वामजैश्च सुसम्पन्नं शयनं तत्प्रचक्षते ॥ ७१ ॥

व्याघ्रादिचर्मणाक्लप्तं चर्मजं [1]शयनं स्मृतम् ।
रोमभिश्चाविकादीनां कृतं तद्रोमजं स्मृतम् ॥ ७२ ॥

कार्पासेन कृतं यत्तन्मुण्डजं त्वभिधीयते ।
पक्षिपिञ्छैः कृतं यत्तदण्डजं परिकीर्तितम् ॥ ७३ ॥

कौशेयं क्षौमसङ्क्लप्तं वामजं त्वभिधीयते ।
अलाभे चर्मजादीनां पञ्चवस्त्राणि वा तथा ॥ ७४ ॥

शयनं कल्पयेदेवं धान्यराश्युपरि क्रमात् ।
शिरः पादोपधाने द्वे देव्योश्चापि पृथक्पृथक् ॥ ७५ ॥
पूर्णकुम्भाङ्कुरान्दीपान्मङ्गलान्परितो न्यसेत्[2] ।
शयने पूजयेच्छेषं फणामण्डलमण्डितम् ॥ ७६ ॥

---

1. समुदाहृतं आ. 2. पश्चाद्देवं समादाय कुम्भेन सहितं क्रमात्। शय्यावेदिं सुसम्प्राप्य-देवेशमुपवेशयेत् । देव्यौ नञ्च भवेतां चेत्क्रमाद्दक्षिणवामयोः । स्नापनं चोत्सवञ्चापि न्यसेद्दक्षिणवामयोः। देवं कुम्भं समभ्यर्च्य देवं कुम्भमपि पृथक् । आचार्यः स्थापकै'रिति आ पाठः ।

मित्रादींश्च जयादींश्च प्रागाद्यभ्यर्च्य वै बहिः ।
शयनाधिवासः देवं शकुनसूक्तेन स्थापयेच्छयनोपरि ॥ ७७ ॥

दक्षिणे च श्रियं देवीं स्थापयेद्वामतो महीम् ।
स्नापनं चौत्सवं चापि न्यसेद्दक्षिणवामयोः ॥ ७८ ॥

शयनन्त्वेकवेद्यान्तु पृथगास्तृणुयात्तयोः ।
देववच्च सरम् कुम्भं भक्त्या देवाग्रतो न्यसेत् ॥ ७९ ॥

अष्टोपचारैरभ्यर्च्य देवं कुम्भञ्च वै पृथक् ।
आचार्यः स्थापकैर्युक्तः पुण्याहमपि वाचयेत् ॥ ८० ॥

प्रतिसरबन्धः पूरितञ्च न्यसेत्पात्रमाढकाहीनतण्डुलैः ।
सौवर्णं तान्तवं वाऽथ तत्र प्रतिसरं न्यसेत्[1] ॥ ८१ ॥

'कृणुष्व पाज' इत्युक्त्वाऽभिमृश्य 'स्वस्ति' देति च[2] ।
बध्नीयात् कौतुकं हस्ते देवदेवस्य दक्षिणे ॥ ८२ ॥

वामहस्ते च बध्नीयाद्देव्योः प्रतिसरं क्रमात् ।
स्नापने चौत्सवे बिम्बे बलिबेरे तथैव च ॥ ८३ ॥

ध्रुवे च बन्धयेत्पूर्वं क्रमेणैव समाचरेत् ।
'स्वस्तिदा' इति मन्त्रेण 'विष्णुस्त्वा' मिति मन्त्रतः ॥ ८४ ॥

एताभ्यां देवदेवस्याप्याचार्यस्यर्त्विजामपि ।
तत्तन्मन्त्रेण देव्योश्च बन्धयेद्वामहस्तके ॥ ८५ ॥

आचार्यस्यर्त्विजाञ्चैव बन्धयेद्दक्षिणे करे ।
प्रतिष्ठायामुत्सवे वा कुर्यात्कौतुकबन्धनम् ॥ ८६ ॥

---

1. सौवर्णमुत्तमं कुर्यान्मध्यमं राजितं तथा । अधमं क्षौमकार्पासमेवं प्रतिसरं न्यसेत् । इत्यधिकं आ. 2, स्वस्तिसूक्तं समुच्चरन् आ.

रक्षाबन्धनहीने च सर्वं कार्यं विनश्यति ।
'यद्वैष्णवं' समुच्चार्य शयने शाययेद्विभुम् ॥ ८७ ॥

तत्तन्मन्त्रेण देव्यौ च शाययेत्पार्श्वयोः क्रमात् ।
स्नापनं चौत्सवं चैव शाययेत्पार्श्वयोस्तथा ॥ ८८ ॥

प्राग्द्वारे देवतागारे देवोऽपि प्राक्छिरा भवेत् ।
दक्षिणादिषु दिक्ष्वेवं यतो द्वारं ततश्शिरः ॥ ८९ ॥

उत्तराच्छादनं कुर्यादहतेनैव वाससा ।
ध्रुवबेरे तु बध्नीयात् कौतुकं तद्वदेव हि ॥ ९० ॥

कौतुकार्चौत्सवाख्यानां तत्तद्देव्योस्तथैव च ।
(एककुम्भे सहध्यानं न स्नानं पृथगेव हि ।
शयनं चैकवेद्यान्तु स्नापनौत्सवयोः पृथक् ॥
निमित्तभेदेनाग्निभेदः
गर्भालयस्य भेदे च तलभेदे तथैव च )
पृथक्सर्वञ्च कर्तव्यं पौण्डरीकं विनाऽनलम् ॥ ९१ ॥

अथवा पुरुषादीनां तत्प्रधानाग्निरेव वा ।
स्थापिते कौतुके पश्चात्स्नापनस्यौत्सवस्य च ॥ ९२ ॥

तयोस्सह प्रतिष्ठायां पञ्चाग्नींश्च सहैव हि ।
सभ्यञ्च पौडरीकञ्च द्वावग्नी इति केचन ॥ ९३ ॥

तयोर्नित्याग्निमाधाय हुत्वा होमावसानके ।
[1]सभ्यकुण्डे तु सभ्याग्निमादधीत यथा पुरा ॥ ९४ ॥

नित्यहोमविहीने तु कृत्वा कुण्डानि पञ्च च ।
प्रणीय गार्हपत्याग्निं सर्वाग्निषु जुहोति च ॥ ९५ ॥

1. ख. नित्यकुण्डे.

तयोरपि पृथक्कुण्डे तु पृथगग्निं प्रकल्पयेत् ।
यथोक्तहोमं जुहुयुः कुम्भं सम्पूज्य पूर्ववत् ॥ ९६ ॥

देवस्याभिमुखे न्यस्य तत्रैवावाहयेद्ध्रुवात् ।
स्नपनं शयनं हौत्रं होमं पूर्ववदाचरेत् ॥ ९७ ॥

नाचरेद्देवताह्वानं सर्वदेवार्चनं तथा ।
ध्रुवबेरे समावाह्य तस्मादावाहयेत्तयोः ॥ ९८ ॥

बालालये तयोः पश्चात्प्रतिष्ठा यदि कौतुकात् ।
आवाहनं तथा प्रोक्तं सर्वमन्यत्समं भवेत् ॥ ९९ ॥

( अवतारप्रतिष्ठा चेन्नित्याग्निं नैव कारयेत् ।
आचार्यस्य गृहादग्निं गृहीत्वा विधिनाऽऽचरेत् )

चतुर्वेदाध्ययनम्
हौत्रप्रशंसनम्

प्रागादि चतुरो वेदान् अध्यापयति वै क्रमात् ।
होतारं समलङ्कुर्यात् वस्त्रपुष्पाङ्गुलीयकैः ॥ १०० ॥

सोत्तरीयैर्यथाशक्ति सोऽपि होता सुपूजितः ।
सभ्यात्प्रत्यङ्मुखः प्राच्यां हौत्रमेवं प्रशंसति ॥ १०१ ॥

अध्वर्यु 'होतरे' होति होतारमभिसंवदेत् ।
'अध्वर्वो देवता' श्चेति सोऽध्वर्युं प्रतिभाषते ॥ १०२ ॥

पश्चादायम्य कूर्चञ्च गृहीत्वा पश्चिमामुखः ।
'नमः प्रवक्त्रे' इत्यादि तिष्ठन्नुच्चैस्समुच्चरेत् ॥ १०३ ॥

एव 'मो' मिति मन्त्रान्ते होता शर्मान्तमेव च ।
स्वकं नाम द्वितीयान्त 'ममु' मित्येव योजयेत् ॥ १०४ ॥

'भूते भविष्यति' च 'हिं भूर्भुवस्सुवरो' मिति ।
वदन् स प्राङ्मुखो भूत्वा 'प्रवो वा' जेत्यृचं वदेत् ॥ १०५ ॥

'प्रवो वाजे' त्यृचं चादा 'वाजुहोते' ति चान्ततः ।
त्रिधा वाच्ये ततोऽन्यास्तु प्रणवेन समं ततः ॥ १०६ ॥

होता तेनोक्तमोङ्कारं श्रुत्वाऽध्वर्युर्विशेषतः ।
'ओं स्वा' हेति वदन् इध्ममाज्याक्तं जुहुयाद्बुधः ॥ १०७ ॥

सामिधेनीस्तथा शंसेद्धोता सप्तदश क्रमात् ।
'ब्राह्मण भार' तेत्यन्तमुक्त्वैवाग्निं च बोधयन् ॥ १०८ ॥

यजमानस्य गोत्रं च प्रवदेत्प्रवरं क्रमात् ।
'देवेद्धो मन्विद्ध' इति पुनराह तथैव च ॥ १०९ ॥

अग्रामस्तु यजमानश्चेत्काश्यपप्रवरं वदेत् ।
पुरोहितस्य प्रवरं ब्रूयात्कर्ता नृपो यदि ॥ ११० ॥

(आचार्यप्रवरं ब्रूयाद्वैश्यशूद्रादिकर्तृके ।
तमेव प्रवरं ब्रूयादस्ति चेत्क्षत्रवैश्ययोः ।)
आचार्यप्रवरं वाऽथ काश्यपप्रवरं तु वा ।
ब्राह्मणव्यतिरिक्तानां सर्वेषामिति केचन ॥ १११ ॥

होता हौत्रक्रमेणैव हौत्रमेवं प्रशंस्य च ।
'आया' त्विति समुच्चार्य मूर्तिमन्त्रैरनुक्रमात् ॥ ११२ ॥

तं देव 'माव' हेत्युक्त्वा अध्वर्युञ्च प्रयोजयेत् ।
अध्वर्युरपि तत्काले दक्षिणप्रणिधौ जले ॥ ११३ ॥

आदिमूर्त्यादिशर्वान्तं मूर्तिमन्त्रैः क्रमात्तदा ।
'आवाहया' मीत्यावाह्य चोत्तरप्रणिधौ ततः ॥ ११४ ॥

धात्रादिविष्णुभूतान्तं देवानावाहयेद्बुधः ।
आवाहनक्रमेणैव निरुप्याज्याहुतीर्यजेत् ॥ ११५ ॥

होमद्रव्यभेदेन हस्तभेदः

साङ्गुष्ठयानामिकया स्रुवमालम्ब्य यत्नतः ।
प्रदेशिनीं मध्यमां च स्रुवस्याधः प्रसार्य च ॥ ११६ ॥

कनिष्ठिकां विसृज्यैव समालम्ब्य स्रुवादिकम् ।
वेदाङ्गुलप्रमाणाञ्च यजेदाज्याहुतिं बुधः ॥ ११७ ॥

अङ्गुष्ठानामिकामध्यैस्समिधं जुहुयाच्चरुम् ।
अपूपतिललाजाश्च सक्तवो घृतमिश्रिताः ॥ ११८ ॥

सर्वेष्वग्निषु होतव्या महाशान्तिरिहोदिता ।

महाशान्तिहोमः

वैष्णवं विष्णुसूक्तञ्च सूक्तं पौरुषमेव च ॥ ११९ ॥

प्रत्येकं विंशतीर्हुत्वा व्याहृतत्यन्तं प्रतिप्रति ।
शर्कराज्यदधिक्षीरं समभागं प्रगृह्य च ॥ १२० ॥

जुहुयात्पौण्डरीकाग्नावुपजुह्वा स्मरन् हरिम् ।
कुण्डेषु लोकपालानां तत्तन्मन्त्रं यथाक्रमम् ॥ १२१ ॥

प्रत्येकं विंशतीर्हुत्वा स्वनामपदपूर्वकम् ।
सभ्याग्निं परिषिच्यैव जुहुयात्पञ्चवारुणम् ॥ १२२ ॥

जयादी 'न्यद्देवादीं'श्च व्याहृत्यन्तं प्रतिप्रति ।

सर्वदेवार्चनम्

पश्चात्समर्चयेद्देवान्परितः स्वस्वनामभिः ॥ १२३ ॥

विष्णुं पूर्ववदभ्यर्च्य श्रीभूमिसहितं क्रमात् ।
मार्कण्डेयं विधिं सव्ये भृगुं वामेऽर्चयेद्ध्रुवम् ॥ १२४ ॥

शालाद्वारेषु धात्रादीन् मणिकं सन्ध्यया सह ।
तापसं सिद्धिदं वाऽथ शङ्खं चक्रमथापि वा ॥ १२५ ॥

श्रीभूतमर्चयेदग्रे बहिर्मुखमनुस्मरन् ।
इन्द्रार्कश्रीहविःपालानग्निं वै पश्चिमामुखान् ॥ १२६ ॥

चैत्रादिषट्सु मासेषु क्रमादुत्तरतो रविम् ।
प्राच्यामभ्यर्च्य भौमञ्च गुहं दुर्गां यमं शनिम् ॥ १२७ ॥

रोहिणीं सप्तमातॄंश्च दक्षिणे चोत्तरामुखाः ।
नीलं [1] बृहस्पतिं धात्रीं विष्णुं च वरुणं बुधम् ॥ १२८ ॥

ज्येष्ठां [2] फुल्लञ्च वायुञ्च पश्चिमे प्राङ्मुखानिमान् ।
शुक्रं सप्तऋषीन् गङ्गां धन्यं चन्द्रं तथैव च ॥ १२९ ॥

पञ्चभूतामितेशानानुदीच्यां दक्षिणामुखान् ।
अष्टमूर्तिं शिवं चैव बलिरक्षं सरस्वतीम् ॥ १३० ॥

इन्द्रद्वारस्य वामे तु पश्चिमाभिमुखान्क्रमात् ।
न्यक्षञ्च भरतं मित्रं क्षत्तारं प्रागुपक्रमात् ॥ १३१ ॥

बहिर्मुखान् समभ्यर्च्य न्यक्षं देवाग्र एव वै ।
[3] पीठगोपुरयोर्मध्ये गरुडं सम्यगर्चयेत् ॥ १३२ ॥

बहिर्विघ्नेशनागेशौ [4] द्वारदक्षिणवामयोः ।
चक्रं ध्वजञ्च शङ्खञ्च यूथनाथाक्षहावपि ॥ १३३ ॥

द्वाराग्रे पूजयेदेतान्प्रागन्तान्बहिराननान् ।
त्रयोदशोपचारैस्तान्पूजयेच्च पृथक् पृथक् ॥ १३४ ॥

शयानं देवमासाद्य प्रणम्यैवानुमान्य च ।
[5] 'सुवर्भुवर्भू'रित्युक्त्वा मूर्धनाभिपदान् स्पृशन् ॥ १३५ ॥

सभ्याग्निं परिषिच्याथ तां सहस्राहुतिं यजेत् ।
'स्वस्ति चैवेह स्वा' हेति 'प्रजापतय' इत्यपि ॥ १३६ ॥

1. चैव महाकालीं आ 2. मूलं आ. 3. गोपुरागरयोर्मध्ये आ. 4. नागेन्द्रौ आ.
5. भूर्भुवस्सुवरित्युक्त्वा आ.

'अग्निर्धीमतये' चैव 'मादित्येभ्य' इति ब्रुवन् ।
'विश्वेभ्यो देवेभ्य' इति 'गणेभ्यो मरुता' मिति ॥ १३७ ॥

मन्त्रैरेतैर्यजेदाज्यं महाव्याहृतिभिस्सह ।
शतकृत्वो यजेदेतैर्यजेद्व्याहृतिभिः पुनः ॥ १३८ ॥

वैष्णवं विष्णुसूक्तञ्च सूक्तं पौरुषमेव च ।
श्रीसूक्तञ्च 'श्रिये जातो' भूसूक्तं भूमिदैवतम् ॥ १३९ ॥

यजेच्च सर्वदैवत्यं व्याहृत्यन्तं पृथक्पृथक् ।
अथवा नवधा मार्गे यन्मार्गमवलम्बते ॥ १४० ॥

तन्मार्गे परिषद्देवानावाह्य परितोऽर्चयेत् ।
विनैव सर्वदैवत्यं तत्तन्मन्त्रैस्तथा यजेत् ॥ १४१ ॥

प्रधानहोमः जुहुयात्पौरुषं सूक्तं विष्णुसूक्तमतः परम् ।
यद्देवाद्यैस्ततो हुत्वा वैष्णवञ्च सुहूयताम् ॥ १४२ ॥

जुहुयात्पौरुषं सूक्तं प्राच्यामाहवनीयके ।
अन्वाहार्ये सुहोतव्यं विष्णुसूक्तं यथाविधि ॥ १४३ ॥

गार्हपत्ये सुहोतव्यं ब्राह्ममेकाक्षरादिकम् ।
आवसथ्ये सुहोतव्यं 'त्वमग्ने रूद्र' इत्यपि ॥ १४४ ॥

पारमात्मिकमब्जाग्नौ वैष्णवं विष्णुसूक्तकम् ।
व्याहृत्यन्तं च जुहुयादथवा मुनिसत्तमाः ॥ १४५ ॥

पश्चाग्निषूक्तहोमः देवतावाहनान्ते तु सर्वदेवार्चनं चरेत् ।
सभ्यमग्निं परिस्तीर्य पालाशेध्मान् घृताप्लुतान् ॥ १४६ ॥

जुहुयाद्विष्णुगायत्र्या (अष्टोत्तरसहस्रकम् ।
पालाशेध्मैश्च होतव्यं) पुनष्षड्भिश्च वैष्णवैः ॥ १४७ ॥

सूक्तेन वैष्णवेनाज्यं यजेदुपभृता बुधः ।
वैष्णवं जुहुयाज्जुह्वा चरुमाज्यमतः परम् ॥ १४८ ॥

विष्णोर्नुकाद्यैस्सूक्तेन पौरुषेण च वैष्णवैः ।
'हिरण्यवर्णा' मित्युक्ता 'भूमिर्भूम्ने' ति च क्रमात् ॥ १४९ ॥

[1] ऋत्विक्कृत्वोऽर्ककृत्वो वा दशकृत्वोऽथवा यजेत् ।
तां सहस्राहुतिं हुत्वा धाताद्यैः पञ्च वारुणैः ॥ १५० ॥

जयादिभिश्च कूष्माण्डैर्जुहुयात्तदनु क्रमात् ।
तथैव सर्वदैवत्यं तत्तन्मार्गानुसारतः ॥ १५१ ॥

वैष्णवैर्विष्णुसूक्तेन मिन्दाहुत्या तथैव च ।
विच्छिन्नाहुतिभिश्चापि महाव्याहृतिभिस्तथा ॥ १५२ ॥

'नारायणाय वि'द्मेति हुत्वा [2] षड्वैष्णवी ऋचः ।
यजेदाहवनीयाग्नौ नरसूक्तं स्मरन् हरिम् ॥ १५३ ॥

अन्वाहार्ये विष्णुसूक्तं ब्राह्ममन्त्रद्वयं तथा ।
वैष्णवञ्च 'श्रिये जातो—मेदिनी 'ति समुच्चरन् ॥ १५४ ॥

गार्हपत्ये सुहोतव्यमावसथ्ये ततः परम् ।
एकाक्षरादिसूक्तेन रुद्रमन्त्रद्वयेन च ।
चतुरग्निषु चैतेषु मन्त्रैरेतैर्यथोदितम् ॥ १५५ ॥

आज्यं षोडशकृत्वश्च यजेद्द्वादश वा दश ।
पयोदधिघृतैस्सक्तैरुपजुह्वा यथाक्रमम् ॥ १५६ ॥

जुहुयाद्विष्णुसूक्तेन पञ्चाग्निषु सलाजकम् ।
[3] आज्यं स्रुचा गृहीत्वैव जुहुयात् वैष्णवैरपि ॥ १५७ ॥

---

1. ऋत्विग्भिरथवाऽऽचार्यः ? आ. 2. षड्वैष्णवैस्सह आ. 3. स्रुवेणाज्यं गृहीत्वाज्य आ.

जुहुयात्पौण्डरीकाग्नौ 'अतो देवा' दि वैष्णवम् ।
श्वेतमब्जं ततः पश्चाद्घृताक्तं जुहुयाद्बुधः ॥ १५८ ॥

जपन्वै विष्णुगायत्रीं रक्ताब्जं बिल्वमेव वा ।
आज्येन जुहुयात्सम्यक्सूक्तैः पौरुषवैष्णवैः ॥ १५९ ॥

पारमात्मिकमन्त्रैश्च देवं ध्यायन् जुहोति च ।
इन्द्रादीनाञ्च होमेषु तत्तन्मन्त्रं सवैष्णवम् ॥ १६० ॥

आज्यं विंशतिकृत्वश्च स्रुवेण जुहुयादिति ।
ऋषिरत्रिरुवाचैवं जुहुयादेवमेव वा ॥ १६१ ॥

अथवा हौत्रशंसान्ते वैष्णवैः पञ्चवारुणैः ।
जयादिभिश्च कूष्माण्डैर्हुत्वा तत्परिषद्गणान् ॥ १६२ ॥

समभ्यर्च्य यथामार्गं सप्तविंशतिविग्रहैः ।
त्रयोदशोपचारैर्वा पश्चाद्धोमं समाचरेत् ॥ १६३ ॥

सभ्यमग्निं परिस्तीर्य तां सहस्राहुतिं यजेत् ।
अब्जाग्नौ विष्णुगायत्र्या घृताक्तं श्वेतपङ्कजम् ॥ १६४ ॥

शतकृत्वो यजेदाज्यं जुहुयात्पारमात्मिकम् ।
यजेदाहवनीयाग्नौ पौरुषं सूक्तमेव च ॥ १६५ ॥

अन्वाहार्ये विष्णुसूक्तं ब्राह्मं व्याहृतिसंयुतम् ।
वैष्णवं गार्हपत्याग्नौ चावऽसथ्ये तु वैष्णवम् ॥ १६६ ॥

जुहुया[1]द्रुद्रसूक्तञ्च देवदेवमनुस्मरन् ।
यजेत्षोडशकृत्वस्तु तेनैव चतुरग्निषु ॥ १६७ ॥

जयादींश्च सकृद्धुत्वा ऐन्द्रादीनामथाग्निषु ।
एकविंशतिकृत्वस्तु तत्तन्मन्त्रैर्जुहोति च ॥ १६८ ॥

---

1. रात्रिसूक्तञ्च आ. अष्टमोऽध्यायः ई.

वीशशैषिकयोर्मन्त्रैश्शतमष्टोत्तरं यजेत् ।
एतेषां मूर्तिमन्त्रैश्च जुहुयात्सकृदग्निषु ॥ १६९ ॥

सभ्ये तु सर्वदैवत्यं हुत्वा वै वैष्णवं यजेत् ।
विष्णुसूक्तञ्च जुहुयान्निमिन्दाहुतिसमन्वितम् ॥ १७० ॥

'आश्राविता' दिमन्त्रैश्च जुहुयादिति काश्यपः ।
सभ्याग्निहोममाचार्यस्स्वयमेव समाचरेत् ॥ १७१ ॥

(अन्यथा जुहुयाच्चेत्तु सर्वमाशु विनश्यति)[1]
नृत्तैर्गेयैश्च वाद्यैश्च रात्रिशेषं नयेद्बुधः ॥ १७२ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
महाप्रतिष्ठातन्त्र शयनास्तरण प्रतिसर हौत्रप्रशंसाहवनीयादि-
होम विधानं नाम सप्तमोऽध्यायः[2]

---

1. प्रतिष्ठादिनमारभ्य तृतीये पञ्चमेऽहनि । गार्हपत्यादिकुण्डेषु पञ्चाग्निषु तथैव च । अग्निप्रणयनं कुर्यादाघारं विधिवद्यजेत् । आघारान्ते तु होतव्यं मन्त्रं पूर्वोक्तमेव च । यद्यत्कुण्डेषु योमन्त्रस्तत्तत्कुण्डेषु होमयेत् । आघारदिनमारभ्य अन्तहोमदिनान्तकम् । एतान् मन्त्रांश्च सर्वांश्च सायं प्रातर्यजेद्बुधः । प्रायश्चित्ताग्निकुण्डे तु सायान्तेहोममाचरेत् । तत्तत्कुण्डेषु तान् मन्त्रान् शान्तिहोमञ्चकारयेत् । दिने दिने तु कर्तव्यं प्रतिष्ठान्तं हुने द्बुधः । एवमेव क्रमेणैव यजेदहरहः क्रमात् । सभ्यञ्च पौण्डरीकञ्च त्रिनान्येष्वन्तहोमकम् । अन्तहोमावसानेऽग्निं सामिध्यारोपयेद्बुधः । समिध्यारोपिते पश्चात्सभ्याग्नौ तु सुहोमयेत् इत्यधिकं आ कोशेषु ।

2. १० अध्यायः ख. ८. ई.

# अष्टमोऽध्यायः

रत्नन्यासः

प्रातस्स्नात्वा विधानेन जप्त्वा सूक्तानि पूर्ववत् ।
प्रविश्य यागशालाञ्च देवदेवं प्रणम्य च ॥ १ ॥

ततस्सुप्तं हरिं किञ्चिदोङ्कारेण प्रबोधयेत् ।
प्रणम्य 'भूः प्रप'द्येति विष्णुसूक्तेन चोद्धरेत् ॥ २ ॥

(कौतुकाद्यधिवासञ्चेत्कौतुके स्नानमाचरेत् ।
उत्सवादिषु बेरेषु अधिवासं भवेद्यदि ।)
व्यपोह्य वस्त्रमाल्यादीन् पुनरन्यैश्च भूषयेत् ।
त्रयोदशोपचारैश्च समभ्यर्च्य यथाविधि ॥ ३ ॥

रत्नानि धातुबीजानि गृहीत्वाऽन्तः प्रविश्य च ।
अर्चापीठेऽवटं कृत्वा सोपपीठपदं तथा ॥ ४ ॥

उपपीठपदञ्चेति पञ्चविंशत्पदं स्मृतम् ।
'तमेकने'मिमित्युक्त्वा रत्नादीन्यभिमृश्य च ॥ ५ ॥

'प्रजापतेः प्रथम'मिति रौक्मं कूर्मन्तु सन्न्यसेत् ।
'तमेकनेमि' मन्त्रेण सौवर्णं दन्तिनं न्यसेत् ॥ ६ ॥

'शतधार'मिति प्रोच्य[1] सौवर्णं गरुडं तथा ।
ब्रह्मस्थाने ब्रह्ममणिं 'ब्रह्म देवा'दिमुच्चरन् ॥ ७ ॥

'इन्द्रं प्रणयन्त'मित्युक्त्वा वज्रमैन्द्रे विनिक्षिपेत् ।
'अग्नावग्नि'रिति प्रोच्य त्वाग्नेय्यां मौक्तिकं क्षिपेत् ॥ ८ ॥

'यमो दाधार' मन्त्रेण याम्ये वैडूर्यमाक्षिपेत् ।
'वसवः प्रथम' इत्युक्त्वा नैऋत्यां शङ्खजं क्षिपेत् ॥ ९ ॥

---

1. प्राच्यां क्षा.

चतुर्भिर्वारुणैर्मन्त्रैः स्फाटिकं वारुणे न्यसेत् ।
'मरुतः परमा' त्मेति वायव्ये पुष्यकं क्षिपेत् ॥ १० ॥

'सोमं राजान' मित्युक्त्वा चन्द्रकान्तमथोत्तरे ।
'ईशानस्सर्व' मन्त्रेण [1]नीलमीशानदिश्यपि ॥ ११ ॥

'शन्नो निधत्ता' मित्युक्त्वा वासुकेरमृताश्मकम् ।
'धाता धातृणा' मिति च साध्येभ्यो लोहिताश्मकम् ॥ १२ ॥

'विश्वे देवस्य' मन्त्रेण विश्वदेवेभ्य उत्पलम् ।
'अधिब्रह्मा यत' तेति सिद्धानान्तु प्रवालकम् ॥ १३ ॥

'इमां मूर्धन्या' इत्युक्त्वा गन्धर्वेभ्यो मनश्शिलाम् ।
'अप्सरस्सु' ब्रुवन्विद्वानप्सरोभ्योऽथ शुक्तिजम् ॥ १४ ॥

'यं काद्रवेया' इत्युक्त्वा नागेभ्यो विमलं मणिम् ।
'अर्यम्ण' इति मन्त्रेण अर्यम्णे कुरुविन्दकम् ॥ १५ ॥

'तत्त्रीण्ये'षेति च वदन् भूतेभ्यो नीलमुत्तमम् ।
अमृताश्मकादिरत्नानि मध्येऽवान्तरदिक्ष्वपि ॥ १६ ॥

'शन्नो निधत्ता' मित्याद्यैर्मन्त्रैः क्षिप्त्वा यथाक्रमम् ।
ततो बीजानि धातूंश्च न्यसेन्मध्यपदेऽष्टके ॥ १७ ॥

सौवर्णं गैरिकं मध्ये हरितालं मनश्शिलाम् ।
अञ्जनं श्यामकासीसं रसं सौराष्ट्रकं तथा ॥ १८ ॥

गोरोचनं चतर्दिक्षु तत्तन्मन्त्रैश्च सन्न्यसेत् ।
सर्वगन्धयुतं सर्वबीजं ब्राह्मे तु सन्न्यसेत् ॥ १९ ॥

ऐन्द्रे तु षष्टिकान्व्रीहीन्न्यसेन्माषकुलुत्थकौ ।
याम्ये गोधूममुद्गौ च तिलतिल्वौ च नैर्ऋतौ ॥ २० ॥

---

1. तत्र नीलमणिं क्षिपेत् ई.

यवद्वयं तु वारुण्यां नीवारञ्च प्रियङ्गुकम् ।
सौम्ये तु मुद्गगोधूमावीशान्ये सर्वबीजकम् ॥ २१ ॥

पूर्वोक्तैरेव मन्त्रैस्तु क्रमेणैतान्बहिर्न्यसेत् ।
[1] ब्रह्मस्थानस्य परितः विन्यसेदष्टमङ्गलान् ॥ २२ ॥

'भूयाम' इति मन्त्रेण श्रीवत्सं चैन्द्रके न्यसेत् ।
आग्नेय्यां पूर्णकुम्भन्तु 'नमस्सुलोमि' मन्त्रतः ॥ २३ ॥

याम्ये भेरीं न्यसेत्तत्र 'स एकोऽभू' दिति ब्रुवन् ।
नैर्ऋत्यां विन्यसेत्पश्चा 'द्देवस्य' त्वेति दर्पणम् ॥ २४ ॥

वैष्णवं मन्त्रमुच्चार्य वारुण्यां मत्स्ययुग्मकम् ।
वायव्यामङ्कुशं पश्चात् 'क्ष्मामेका' मिति च ब्रुवन् ॥ २५ ॥

'तन्मा यशोग्र' इत्युक्त्वा शङ्खं सौम्ये तु निक्षिपेत् ।
'ब्रह्मा देवे' ति चैशान्यामावर्तं निदधीत वै ॥ २६ ॥

गदाचक्रासिशक्तीश्च शरं मध्येऽथ दक्षिणे ।
'भूमाननोऽग्र' इत्युक्त्वा प्रत्येकं च विनिक्षिपेत् ॥ २७ ॥

वामभागे तथा शङ्खं शार्ङ्गं खेटकमेव च ।
'तन्मा यशोऽग्र' इत्युक्त्वा प्रत्येकं च विनिक्षिपेत ॥ २८ ॥

सुवादिवर्णचिह्नानि तत्तद्वर्णविवृद्धये ।
श्रीरूपं च श्रियः स्थाने 'श्रिये जात' इति ब्रुवन् ॥ २९ ॥

हरिणीं हरिणीस्थाने मेदिन्यादि समुच्चरन् ।
'प्रजापति' मिति प्रोच्य कूर्मं चोपरि विन्यसेत् ॥ ३० ॥

यथाशक्ति सुवर्णेन सर्वाण्येतानि कल्पयेत् ।
अलाभे प्रतिनिधिः रत्नालाभे सुवर्णं वा बीजानां यवमेव वा ॥ ३१ ॥

---

1. ब्रह्मस्थाने आ.

धातूनां पारदं वाऽपि तत्तत्प्रतिनिधिं हरेत् ।
क्षौमेणाच्छाद्य तच्छ्वभ्रं सुधयोपरि लेपयेत् ॥ ३२ ॥

पीठे पुरातने पूर्वं रत्नादौ सुप्रतिष्ठिते ।
तत्तद्रत्नादिकं बुद्ध्वा मन्त्रांस्तान्त्समुदीर्य च ॥ ३३ ॥

'आपो हिष्ठा' दिभिर्मन्त्रैः प्रोक्षयेच्च कुशोदकैः ।
पूर्णाहुतिः महाशान्तिः यज्ञशालां ततो गत्वा देवेशं सम्प्रणम्य च ॥ ३४ ॥

जुहुयात्पौण्डरीकाग्नौ विष्णुगायत्रिया शतम् ।
श्वेतपद्मं घृतासिक्तं रक्ताब्जं बिल्वमेव वा ॥ ३५ ॥

नरसूक्तं वैष्णवं च 'यद्देवा' दि तथैव च ।
ब्राह्मैन्द्रवारुणान् हुत्वा रात्रिसूक्तसमन्वितम् ॥ ३६ ॥

जुहुयाद्विश्वजित्सूक्तं महाशान्तिरियं स्मृता ।
[1]सभ्ये तु वैष्णवं विष्णुसूक्तं पुरुषसूक्तकम् ॥ ३७ ॥

एकाक्षरादि हुत्वा तु व्याहृत्यन्तं प्रतिप्रति ।
समिद्घृताभ्यां चरुणा देवदेवमनुस्मरन् ॥ ३८ ॥

( रात्रावेवाहुतिर्होमं प्रातर्नैवलिकाश्यपौ । )
दक्षिणादानम् दद्यादाचार्यपूर्वेभ्यो दक्षिणां च यथाविधि ।
( समिद्घृताभ्यां चरुणा देवदेवमनुस्मरन् ॥
पूर्णाहुतिं प्रकुर्वीत सर्वकर्म समापयेत् ।
ततस्तु पौण्डरीकाग्निं विसृजेद्विधिवद्बुधः ॥
सभ्यमग्निं सुसंरक्ष्य नित्यहोमाय विन्यसेत् ।
आलयाद्दक्षिणे पार्श्वे कुण्डमौपासनाग्निवत् ॥
कुर्यान्महानसे वाऽथ नैर्ऋतेऽर्चकसद्मनि ।
कृत्वा तत्र निधायाग्निं नित्यहोमं समाचरेत् ॥

1. सभ्ये तु नरसूक्तञ्च वैष्णवं विष्णुसूक्तकं आ.

नित्यहोमे त्वशक्तस्य विशेषस्संप्रवक्ष्यते ।
तत्रस्थाग्निषु सर्वेषु यजेयुर्वैष्णवं पुनः ॥

षडग्निकुण्डहोमान्तेऽप्यावसथ्ये ततः परम् ।
अन्तहोमं ततो हुत्वा स त्वाचार्यपुरस्सरम् ॥

समिध्यग्निं समारो 'प्योपावरोहे' ति च ब्रुवन् ।
समिधं तां समानीय आचार्याय समर्पयेत् ॥

समिधं गृहीत्वाऽप्याचार्यो हुनेदाहवनीयके ।
तत्कुण्डेऽप्यन्तहोमान्ते समिध्यारोपयेद्बुधः ॥

समिधं तां समानीय आचार्याय समर्पयेत् ।
आचार्यस्त्वरितः पश्चादन्वाहार्ये जुहोति च ॥

तत्कुण्डेऽप्यन्तहोमान्ते समिध्यारोपयेत्सुधीः ।
समिधं तां ततो गृह्य आचार्याय प्रदीयताम् ॥

समिधं गृहीत्वाप्याचार्यो जुहुयाद्गार्हपत्यके ।
तत्कुण्डेऽप्यन्तहोमान्ते समिध्यारोपयें द्बुधः ॥

समिधं तां समानीय आचार्याय समर्पयेत् ।
तत्कुण्डेऽप्यन्तहोमान्ते समिध्मारोपयेद्बुधः ॥

समिधं तां समानीय आचार्याय समर्पयेत् ।
समिधं गृहीत्वाऽऽचार्यस्तां जुहुयात्पद्मकुण्डके ॥

तत्कुण्डेऽप्यन्तहोमान्ते समिध्यारोपयेत्सुधीः ।
समिधं तां समानीय आचार्याय समर्पयेत ॥

समिधं गृहीत्वाऽऽचार्यस्तां हुनेत्सभ्याग्निकुण्डके ।
सभ्यमग्निं सुसंरक्ष्य नित्यहोमाय विन्यसेत् ॥

नित्यहोमेऽप्यशक्तिं तां ज्ञात्वाऽऽचार्यो यथाक्रमम् ।
कुम्भस्योत्थापनात्पूर्वं यजेत्पूर्णाहुतिं बुधः ॥

ध्रुवे अग्न्यारोपणम्: आचार्यः प्रयतो गत्वा अक्षतान्संप्रगृह्य च ।
साक्षतेनैव हस्तेन 'याते अग्न' इति ब्रुवन् ॥
सभ्याग्निं च समारोप्य शक्तिं कुम्भेऽक्षतान्न्यसेत् ।
ध्रुवस्यावाहनात्पश्चाद्देवेशं सम्प्रणम्य च ॥
कूर्चेनादाय तत्तोयं 'याते अग्न' इति ब्रुवन् ।
संस्राव्य बिम्बं परितः ध्रुवेऽग्न्यारोपणं चरेत् ॥
यद्यग्निः न गृहीतस्स्याद्भ्रूणहा भवति ध्रुवम् ।
तत्काले यजमानश्च श्रद्धया देवसन्निधौ ॥

दक्षिणादानम् यथोक्तमाचार्यादिभ्यो दक्षिणां सोदकं ददेत् ।)
सदनप्रदक्षिणम् देवं देवीसमायुक्तं सर्वालङ्करणैस्सह ॥ ३९ ॥
जपन्वै शाकुनं सूक्तं तोयधारापुरस्सरम् ।
आचार्यश्शिरसा कुम्भं गृहीत्वा पूर्वतो व्रजेत् ॥ ४० ॥
ततोऽनु देवं देव्यौ च नयन्ति स्थापकास्तथा ।
बिम्बस्थापनप्रकारः बहुबेरप्रतिष्ठा चेत्तत्तद्बेरक्रमान्नयेत् ॥ ४१ ॥
बहुभूमिप्रतिष्ठा चेत्तत्तद्बुद्ध्वा समाहितः ।
तले तले विधानेन यथोचितमथाऽचरेत् ॥ ४२ ॥
परीत्य मन्दिरं पश्चाद्गर्भगेहं प्रविश्य च ।
विष्णुसूक्तं समुच्चार्य स्थापयित्वा ततः परम् ॥ ४३ ॥
ध्रुवसूक्तं ततो जप्त्वा पौरुषं सूक्तमेव च ।
एकाक्षरादिसूक्तं च स्थापयेयुस्समाहिताः ॥ ४४ ॥
दक्षिणे ब्रह्मसूत्रस्य बेरमध्यं यथा तथा ।
देवदेवं जगद्योनिं स्थापयेद्विष्णुमव्ययम् ॥ ४५ ॥
स्थापयेदन्यदेवांस्तु तद्वामे बेरमध्यमम् ।
सूत्रसन्धौ न कुर्वीत सर्वेषां बेरमध्यमम् ॥ ४६ ॥

स्थापितं चेत्तदज्ञानात्सर्वमाशु विनश्यति ।
औत्सवं कौतुकाद्वामे दक्षिणे स्नापनं तथा ॥ ४७ ॥

औत्सवं दक्षिणे वामे स्नापनन्त्विति केचन ।
गर्भालयस्य सङ्कोचे त्वथवा मुखमण्डपे ॥ ४८ ॥

प्रतिष्ठाप्यान्तराले वा पूजयेदिति चाङ्गिराः ।
आचार्यः पुरतः कुम्भं धान्यपीठे सुसन्न्यसेत् ॥ ४९ ॥

व्याहृतिन्यासादि न्यसेद्बिम्बस्य मूर्धादि पादान्तं व्याहृतित्रयम् ।
यकारं पादयोर्मध्ये त्वकारं हृदये न्यसेत् ॥ ५० ॥

प्रणवेन समावेष्ट्य मूर्ध्नि च प्रणवं न्यसेत् ।
(एकाक्षरादिमन्त्रैश्च सन्न्यसेत्तु विधानतः ।
अकारादिक्षकारान्तं विन्यसेद्विधिना बुधः ।)
आत्मसूक्तं ततो जप्त्वा कूर्चेनादाय वै ततः ॥ ५१ ॥

आवाहनप्रकारः कुम्भाच्छक्तियुतं तोय 'मायातु भगवा' निति ।
'विष्णुमावाहया' मीति स्नावयेद्बिम्बमूर्धनि ॥ ५२ ॥

प्रागादि 'पुरुषं सत्यमच्युतं चानिरुद्धकम्' ।
बिम्बमूर्ध्नि समावाह्य पीठे तु परितः क्रमात् ॥ ५३ ॥

तत्तद्दिक्षु समावाह्य पुष्पन्यासोक्तदेवताः ।
श्रीदेवीहृदये कृत्वा श्रीवत्सादिकमक्षरम् ॥ ५४ ॥

लक्ष्मीपूर्वाक्षरं मन्त्रं हृदये चैव विन्यसेत् ।
सानुस्वारञ्च विन्यस्य 'श्रिये जात' इति श्रियम् ॥ ५५ ॥

मेदिन्यादीन् समुच्चार्य महीमावाहयेत्क्रमात् ।
गर्भालयस्थितान् देवान् द्वारेशान् द्वारपालकान् ॥ ५६ ॥

विमानेशान् लोकपालाननपायिन एव च ।
तत्तन्मन्त्रैस्समावाह्य ततो वै कौतुकादिषु ॥ ५७ ॥

कृत्वा मन्त्राक्षरन्यासौ ध्रुवादावाहयेत्क्रमात् ।

आवाहने विशेषः यद्यत्र लौकिकं बेरं प्रादुर्भावादयो ध्रुवाः ॥ ५८ ॥

प्रतिष्ठाप्य क्रमात्तेषां तस्मादावाहयेद्ध्रुवात् ।

यत्रालये तु यद्बेरं ध्रुवहीनं प्रतिष्ठितम् ॥ ५९ ॥

आवाह्य तद्ध्रुवादेव तत्तद्विधिवदर्चयेत् ।

पृथगेवाथवा कुम्भं संसाध्यावाहयेत्ततः ॥ ६० ॥

आसनादिभिरभ्यर्च्य हवींष्यपि निवेदयेत् ।

प्रतिष्ठान्तोत्सवः बलौ बल्युत्सवं कुर्यात्स्नापने स्नपनं चरेत् ॥ ६१ ॥

तद्दिने सायमारभ्य चौत्सवे चोत्सवं चरेत् ।

[1] घोषणं सद्य एवात्र कुर्यादित्याह **पूर्वजः** ॥ ६२ ॥

अङ्कुरार्पणविकल्पाः प्रतिष्ठान्तोत्सवारम्भध्वजस्नापनकर्मसु ।

नैवाङ्कुरार्पणं कुर्यादेकाहे बहुकर्मणाम् ॥ ६३ ॥

पूर्वस्मिन्नेव दिवसे चैकमेवाङ्कुरार्पणम् ।

पृथक्पृथक्प्रकर्तव्यं भिन्नकर्तृककर्मणाम् ॥ ६४ ॥

अङ्कुरार्पणकादूर्ध्वं प्रतिष्ठादिवसादधः ।

कर्मणां क्रियमाणानां [2]न कुर्यात्पृथगङ्कुरम् ॥ ६५ ॥

नियुक्तसम्भाराणां नियोगः देवयागोपयुक्तानि तानि द्रव्याणि यानि वै ।

गृह्णीयादुपयोज्यानि गुरुरेवाखिलानि च ॥ ६६ ॥

स्रुक्स्रुवादीनि पात्राणि त्वरणी मङ्गलाष्टकम् ।

पुनश्च कर्मयोग्यानि यानमासनमेव च ॥ ६७ ॥

वितानं च ध्वजं छत्रं चामरव्यजनादिकम् ।

ग्राह्यं पुनश्च कर्मार्थं हविरर्घ्यादिपात्रकम् ॥ ६८ ॥

1. ब्रह्मघोषमकृत्वैव इति पूर्वजशासनम् आ. 2. न कुर्यादङ्कुरार्पणम् ई.

अन्यान्यनुपयोज्यानि दाह्यान्याहुर्मनीषिणः ।
ब्रह्मस्थाने शिलाबेर-प्रतिष्ठा
एवं कर्तुमशक्तश्चेद्वर्णहीनं शिलामयम् ॥ ६९ ॥

ब्रह्मस्थानेप्रतिष्ठाप्य पूजयेदिति केचन ।
वक्ष्यामि तत्क्रमं बेरं चित्रं सर्वाङ्गसुन्दरम् ॥ ७० ॥

कृत्वाऽक्षिमोचनं पश्चादमन्त्रकमतः परम् ।
(पञ्चगव्याधिवासादीन् कृत्वा चैवमतः परम् ।)
तत्तत्पदे प्रतिष्ठाप्य शिलास्थापनमार्गतः ।
पर्यग्निपञ्चगव्याभ्यां शुद्धिं कृत्वा तु तत्र वै ॥ ७१ ॥

समन्त्रकाक्षिमोक्षान्ते पञ्चगव्यादिपूरितान् ।
कुम्भांस्त्रियष्टियोगेन सरन्ध्रान्बेरमूर्धनि ॥ ७२ ॥

पतेद्धारा यथा तस्मात्तथा सन्न्यस्य तान्क्रमात् ।
अधिवासक्रियां कुर्यादभिषेकान्वितं पृथक् ॥ ७३ ॥

अथवाऽभिमुखे कृत्वा पञ्चगव्यादिपूरितान् ।
अष्टोत्तरशतं जप्त्वा तत्तन्मन्त्रान्यथाक्रमम् ॥ ७४ ॥

अभ्युक्ष्य स्नापयेद्देवं प्रत्येकं भावयेज्जलैः ।
महाप्रतिष्ठामार्गेण प्रतिष्ठां पुनराचरेत् ॥ ७५ ॥

औत्सवे बलिबेरे च तस्मादावाहनं स्मृतम् ।
अथवा त्वरितः कर्तुमेकबेरविधिं यदि ॥ ७६ ॥

बेरं कृत्वाऽक्षिमोक्षान्ते गव्यादिष्वधिवास्य च ।
प्रतिष्ठोक्तक्रमेणैव कुम्भपूजादिकाः क्रियाः ॥ ७७ ॥

रात्रौ समाप्य विधिना प्रातःस्नात्वा यथाविधि ।
ब्रह्मस्थाने प्रतिष्ठाप्य रत्नन्यासपुरस्सरम् ॥ ७८ ॥

शिल्पिस्पर्शविशुद्ध्यर्थं वास्तुहोमावसानके ।
ध्रुवबेरोक्तवच्छुद्धिं कृत्वा बेरस्य मन्त्रवित् ॥ ७९ ॥

कुम्भाच्छक्तिं समावाह्य समभ्यर्च्य निवेदयेत् ।
ब्रह्मस्थनेऽथवा कृत्वा रत्नादिन्यासमत्वरः ॥ ८० ॥

पीठसंज्ञातमार्गेण तत्र संस्थाप्य शिल्पिना ।
अमन्त्रकाक्षिमोक्षं च कृत्वोद्वास्य च शिल्पिनम् ॥ ८१ ॥

अष्टबन्धे दृढे पश्चादनुकूले शुभे दिने ।
अक्ष्युन्मेषाधिवासादि प्रतिष्ठामाचरेत्तथा ॥ ८२ ॥

राष्ट्रान्तरानीत-बिम्बादिप्रतिष्ठा

राजा राष्ट्रान्तरं जित्वा बेरं यदि समानयेत् ।
तद्बिम्बञ्च समुद्दिश्य स्वराष्ट्रे च मनोरमे ॥ ८३ ॥

ध्रुवं तस्यानुरूपं च विमानमपि कारयेत् ।
संस्थाप्य पूर्ववत्तत्र कुर्यात्तत्रार्चनं बुधः ॥ ८४ ॥

ध्रुवबेरानुरूपञ्चेदथवा मन्दिरे क्वचित् ।
औत्सवं स्नापनं वाऽथ स्थापयेदिति केचन ॥ ८५ ॥

अथवा नानुरूपं चेल्लौकिकं वाऽथ कुत्रचित् ।
स्थाप्य त्रयाणां बिम्बानां स्थानादन्यत्र पूजयेत् ॥ ८६ ॥

स लभेदिष्टकादीनां फलं द्विगुणमेव च ।
नीतमाग्नेयबिम्बं चेत्सप्ताहं पञ्चकुण्डके ॥ ८७ ॥

महाशान्तिं च जुहुयादधिवासादि पूर्ववत् ।
कारयित्वा तु विधिना लौकिकं स्थापयेत्पुनः ॥ ८८ ॥

कुम्भं संसाध्य विधिना समावाह्यार्कमण्डलात् ।
कुम्भात्तस्मिन्समावाह्य पूजयेदिति शासनम् ॥ ८९ ॥

भूमिं परीक्ष्य विधिना सद्यः कर्तुं त्वरान्वितः ।
ब्रह्मपद्मावसाने तु गर्भगेहे विशेषतः ॥ ९० ॥

अधिष्ठानोदयान्ते तु घनं भित्तिं प्रकल्पयेत् ।
पञ्जरं च बहिः कृत्वा तत्र बेरं यथाविधि ॥ ९१ ॥

(प्रतिष्ठाप्याचर्नं कुर्वन्नारभेदालयक्रियाम् ।

तत्र प्रायश्चित्तनिमित्तसम्भवं

पतिते चौत्सवे बिम्बे राजराष्ट्रविनाशकृत् ॥
तदर्थं वै महाशान्तिं महास्नपनमुत्तमम् ।
कुर्याच्च पौण्डरीकाग्नावब्जपत्रं घृताप्लुतम् ॥
अष्टोत्तरसहस्रं वा शतमष्टोत्तरन्तु वा ।
यजेद्वै विष्णुगायत्र्या राजराष्ट्राभिवृद्धये ॥ )

प्रायश्चित्तविशेषाः

श्रद्धाभक्तीपुरस्कृत्य त्वरितो येन केनचित् ।
अकृत्वा भूपरीक्षादीन् विनाऽऽचार्यं पदार्थिभिः ॥ ९२ ॥
स्थापनानुक्तनक्षत्रमासादौ स्थापयेद्यदि ।
सुमासपक्षनक्षत्रमुहूर्तेषु यथाविधि ॥ ९३ ॥
मासं पक्षं च सप्ताहं पञ्चाहं वा त्र्यहन्तु वा ।
त्रिकालं पौण्डरीकाग्नौ महाशान्तिं जुहोति वै ॥ ९४ ॥
तत्तन्मन्त्रजपं कुर्याद्भूपरीक्षादिकर्मणाम् ।
कृत्वाऽङ्कुरार्पणं पश्चान्नयनोन्मीलनं तथा ॥ ९५ ॥
पञ्चगव्याधिवासादि कुर्याद्यत्नेन पूर्ववत् ।
प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत् ॥ ९६ ॥
स्नापनोत्सवयोः पश्चात्प्रतिष्ठामाचरेद्यदि ।
सभ्यञ्च पौण्डरीकञ्च द्वावग्नी इति केचन ॥ ९७ ॥
बलिबेरप्रतिष्ठायां सभ्यमेकाग्निमेव वा ।
तत्र प्रणीय नित्याग्निं होमं हुत्वा यथाविधि ॥ ९८ ॥
आदधीत प्रतिष्ठान्ते नित्यकुण्डे तु पूर्ववत् ।
नास्ति चेत्तत्र नित्याग्निः पञ्चाग्नीन् परिकल्पयेत् ॥ ९९ ॥
तत्कुण्डाद्गार्हपत्याख्यात्प्रणीय जुहुयात्तथा ।
देव्योः पश्चात्प्रतिष्ठायां कुण्डमौपसनोक्तवत् ॥ १०० ॥

प्रत्येकं कल्पयित्वा तु तन्त्रयित्वैकमेव वा ।
स्नपनं कुम्भपूजाञ्च शयनञ्च पृथक्पृथक् ॥ १०१ ॥

तत्तत्सूक्तञ्च तन्मन्त्रं वैष्णवेन शतं यजेत् ।
एष एव विशेषस्स्यात्सर्वमन्यत्समं भवेत् ॥ १०२ ॥

ध्रुवार्चायां विशेषः विमानारम्भतः पूर्वं स्थापिते चेद्ध्रुवार्चनम् ।
परितः पञ्जरं कृत्वा शिल्पिस्पर्शनिवारणम् ॥ १०३ ॥

तथाऽऽलयगतान् देवान् तथैवाऽऽवाह्य पञ्जरे ।
विमानं कारयेच्छीघ्रं परितः पञ्जराद्बहिः ॥ १०४ ॥

शिल्पिस्पर्शविशुद्ध्यर्थं तत्क्रियोपरतौ पुनः ।
वास्तुहोमं ततः कृत्वा पर्यग्निञ्चैव कारयेत् ॥ १०५ ॥

पञ्चगव्यैस्समभ्युक्ष्य पुण्याहमपि वाचयेत् ।
स्नापयेत्कलशैर्देवं यथाशक्ति मुदान्वितः ॥ १०६ ॥

देवालयस्याभिमुखे पौण्डरीके विशेषतः ।
महाशान्तिं तथैकाहं हुत्वा विप्रांश्च भोजयेत् ॥ १०७ ॥

सभ्याब्जकुण्डे कृत्वाऽग्रे तत्राघारं जुहोति च ।
रात्रिपूजावसाने तु देवं कुम्भे निवेश्य च ॥ १०८ ॥

संस्नाप्य सप्तकलशैर्बिम्बं कुम्भसमन्वितम् ।
धान्यपीठे प्रतिष्ठाप्य बिम्बं सन्न्यस्य पश्चिमे ॥ १०९ ॥

हौत्रं प्रशंस्य विधिना होता हौत्रक्रमेण वै ।
तदालयगतान्देवान्समावाह्य यथाविधि ॥ ११० ॥

आवाहनक्रमेणैव निरुप्याजाहुतीर्यजेत् ।
वैष्णवं विष्णुसूक्तञ्च पौरुषं सूक्तमेव च ॥ १११ ॥

वैष्णवं श्रीमहीसूक्तं पञ्चवारुणसंयुतम् ।
जयादिभिश्च कूष्माण्डैस्सहस्राहुतिभिस्तथा ॥ ११२ ॥

तदालयगतानाञ्च मन्त्रैः परिषदामपि ।
मिन्द्राहुतिभ्यां विच्छिन्नैर्विष्णुसूक्तेन वैष्णवैः ॥ ११३ ॥

तथैव विष्णुगायत्र्या पञ्चहोमं जुहोति च ।
तथाऽऽग्नेय्यान्तु पञ्चाग्नौ जुहुयात्पारमात्मिकम् ॥ ११४ ॥

प्रातः स्नात्वा विधानेन कुम्भमन्तः प्रगृह्य च ।
कुम्भाद्बिम्बे समावाह्य समभ्यर्च्य निवेदयेत् ॥ ११५ ॥

तदालये समावाह्य देवान्पञ्जरगानपि ।
व्यपोह्य पञ्जरं सर्वं शेषं पूर्ववदाचरेत् ॥ ११६ ॥

ध्रुवार्चादिनिरुक्तिः ध्रुवकौतुकसंयुक्तं ध्रुवार्चनमिति क्रमात् ।
स्थापनं तद्द्विधा प्रोक्तं देवदेवस्य शार्ङ्गिणः ॥ ११७ ॥

पतनादिषु सर्वेषु प्रायश्चित्तमिदं स्मृतम् ।
ध्रुवस्य कौतुकस्यापि विधिवत्स्थापनञ्च यत् ॥ ११८ ॥

ध्रुवकौतुकसंयुक्तं तदुवाच पितामहः ।
पदेषूक्तेषु यत्स्थाप्यं तद्ध्रुवार्चनमीरितम् ॥ ११९ ॥

ध्रुवञ्च कौतुकञ्चैकं ध्रुवार्चनमुदाहृतम् ।
तदेव देवीहीनञ्चेदेकबेरमिति स्मृतम् ॥ १२० ॥

एकबेरञ्च तत्प्राहुः केवलामुष्मिकप्रदम् ।
इति सङ्क्षेपतः प्रोक्तं स्थापनं मुनिसत्तमाः ॥ १२१ ॥

इति श्री वैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे महाप्रतिष्ठा-
रत्नन्यासावाहनाग्निसमारोपण राष्ट्रान्तरानीतबेरस्थापनानुक्तकालप्रतिष्ठा-
प्रायश्चित्तादि विधिर्नामाष्टमोऽध्यायः [1]

---

1. एकादशोऽध्यायः ख. ९. अध्यायः ई.

# नवमोऽध्यायः

—ooo—

निल्यार्चनम्, तत्र साकारनिरकारभेदः

अतः परं प्रवक्ष्यामि नित्यपूजाविधिं हरेः ।
साकारञ्च निराकारं हरेराराधनं द्विधा ॥ १ ॥

(प्रतिमाराधनं मुख्यं साकारमभिधीयते)
स्थण्डिले च जले चैव हृदये सूर्यमण्डले ॥ २ ॥

आराधनं निराकारमतः[1] साकारमुत्तमम् ।
साकारं तत् द्विधा प्रोक्तं नित्यं नैमित्तिकन्त्विति ॥ ३ ॥

कौतुकादीनां-स्थानम्

वक्ष्ये नैमित्तिकं पश्चान्नित्यमद्यवदाम्यहम् ।
कौतुकं ब्रह्मणः स्थाने स्थापितं सम्यगर्चयेत् ॥ ४ ॥

दक्षिणोत्तरयोस्तस्य पूजयेत्स्नापनौत्सवौ ।
औत्सवस्नापने वाऽथ स्थापयेदिति केचन ॥ ५ ॥

गर्भालयस्य सङ्कोचे त्वथवा मुखमण्डपे ।
अन्तरालेऽथवा स्थाप्य पूजयेदिति केचन ॥ ६ ॥

उत्तरे कौतुकस्यैव बलिबेरं समर्चयेत् ।
यथाकर्मण एकस्य कल्पिताः पञ्चवह्नयः ॥ ७ ॥

यथा चैकशरीरस्य वायुपञ्चककल्पनम् ।
तथैवैकविमानस्य पञ्चबेराणि कल्पयेत् ॥ ८ ॥

अथवा त्रीणि बेराणि यथा त्रेताग्निकल्पनम् ।
ध्रुवार्चाबेरमेकञ्च बलिबेरमथौत्सवम् ॥ ९ ॥

ध्रुवार्चामेकबेरन्तु कुर्यादौपासनाग्निवत् ।
ध्रुवार्चनविशेषः

पुष्पन्यासावसाना स्याद्ध्रुवबेरार्चना मता ॥ १० ॥

---

1, बेरे क.

अनर्च्यं ध्रुवबेरं तज्जलपुष्पानुलेपनैः ।
निष्कलं तन्निरालम्बं केवलामुष्मिकप्रदम् ॥ ११ ॥

कौतुकार्चनविशेषः सालम्बं सगुणं श्रेष्ठं सकलं कौतुकार्चनम् ।
सकामानां समुचितं संसाराश्रमिणामिदम् ॥ १२ ॥

ध्रुवबेरार्चनं प्रोक्तं निराशीःकर्मकारिणाम् ।
आवाह्य [1]कौतुके तस्मान्नित्यं विधिवदर्चयेत् ॥ १३ ॥

सकामाकामयोर्योग्यमैहिकामुष्मिकप्रदम् ।
सालम्बं सगुणं श्रेष्ठं सकलं कौतुकार्चनम् ॥ १४ ॥

तथापि ध्रुवबेरेऽपि भक्त्या पूजां यदीच्छति ।
स्नानप्लोतानुलेपैश्च विनाऽन्यै[2]रभिपूजयेत् ॥ १५ ॥

तत्रापि कौतुके कुर्यान्नित्यं विधिवदर्चनम् ।
कौतुकाद्यर्चनफलम् नित्यार्चामधिकार्चाञ्च विशेषार्चाञ्च कौतुके ॥ १६ ॥

नित्यार्चा बलियात्रान्ता यथाकालं विधीयते ।
उपसन्ध्यार्चनं यत्तदधिकार्चनमुच्यते ॥ १७ ॥

विशेषार्चनमित्युक्तमङ्कुरार्पणकादिषु ।
उत्सवं चौत्सवे कुर्याच्छ्रद्धाभक्तिक्रिया अपि ॥ १८ ॥

स्नपनं शान्तिकं कर्म विष्णुपञ्चदिनोत्सवम् ।
कारयेत्स्नापने बेरे श्रद्धाभक्तिसमन्वितः ॥ १९ ॥

स्नपनं चोत्सवाङ्गं यदौत्सवे तत्समाचरेत् ।
कुर्याद्बिम्बे स्नापने तु स्नपनाङ्गमथोत्सवम् ॥ २० ॥

नित्यं सन्ध्याद्वयस्यान्ते बलिबेरस्य चोत्सवम् ।
स्नानार्थं स्नापने हीने कुर्यादौत्सव एव वा ॥ २१ ॥

---

1. कौतुकं आ. 2. अपि. आ.

स्नापनोत्सवयोर्हीने कौतुके सर्वमाचरेत् ।
अर्चकलक्षणम् वैखानसेन सूत्रेण निषेकादिक्रियान्वितः ॥ २२ ॥

अध्यात्मगुणसंयुक्तो विप्रस्स्वाध्यायसंयुतः ।
वृत्तवान् सत्यवादी च स्नानशीलश्च योगवित् ॥ २३ ॥

गृहस्थो ब्रह्मचारी वा भक्त्यैवार्चनमारभेत् ।
अर्चकः प्रातरुत्थाय देवेशं मनसा स्मरन् ॥ २४ ॥

शान्तिकं पौष्टिकं काम्यमिति भिन्नं त्रिधार्चनम् ।
[1]द्रव्यं तदनुरूपञ्च तदादानञ्च चिन्तयेत् ॥ २५ ॥

अनुष्ठानप्रशंसा प्रातस्स्नात्वाऽथ सावित्रीं जप्त्वा सन्ध्यामुपास्य च ।
सूक्तानि ब्रह्मयज्ञान्ते जपेद्द्वादशसंख्यया ॥ २६ ॥

तथाऽनुदित[2]होमी चेत् होमं कुर्यात्तथाग्निषु ।
जुहोत्युदितहोमी चेत् प्रातस्सन्ध्यावसानके ॥ २७ ॥

परीत्य मन्दिरं पश्चा 'त्प्रतद्विष्णु' रिति ब्रुवन् ।
'मणिकं प्रपद्य' इत्युक्त्वा मणिकं सम्प्रणम्य च ॥ २८ ॥

'निरस्तं रक्ष' इत्युक्त्वा यन्त्रिकामाहरेत्ततः ।
'हिरण्यपाणि' मियुक्त्वा कवाटे योजयेत्पुनः ॥ २९ ॥

'दिवं विवृणो' तु मन्त्रेण कवाटोद्घाटनं चरेत् ।
मुखं समीक्ष्य देवस्य वैष्णवं मन्त्रमुच्चरन् ॥ ३० ॥

त्रिस्सम्प्रहार्य पाणिभ्यां 'शाम्य' न्त्विति समुच्चरन्[3] ।
कृत्वा प्रबोधनं विष्णोर्बलमन्त्रं समुच्चरन् ॥ ३१ ॥

देवदेवं प्रणम्याऽथ शिष्यान् स्वान् स्वेषु कर्मसु ।
परिचारकक्लृप्तम् नियुञ्जीत यथायोगमृत्विगुक्तगुणान्वितान् ॥ ३२ ॥

---

1. अर्चनं तदनुरूपञ्च विपर्यासञ्च चिन्तयेत् इति प्रायिकः पाठः. 2. होमश्चेत् जप्त्वा सन्ध्यामुपास्य च, सूर्योदयात्पूर्वमेव होमं कुर्यात्तथाग्निषु। इति **आ** कोशेषु. 3. परस्परम् **इ.**

'दुहतां दिव' मित्युक्त्वा घटमादाय कश्चन ।
नदीतटाककूपानां पूर्वालाभे तथोत्तरे ॥ ३३ ॥

'आद्यम 'भीति मन्त्रेण गृह्णीयादुदकं [1]शुचि ।
[2]प्रतिलोमादिवासानां समीपेषु न चाहरेत[3] । ३४ ॥

(घटद्वारं समावेष्ट्य वस्त्रखण्डेन चात्वरः ।)
स्नानपानीयशालायां 'सोमं राजान' मुच्चरन् ॥ ३५ ॥

उदकुम्भं च सन्न्यस्य कुशैर्वस्त्रेण[4] वा पुनः ।
'धारोस्वि' ति च मन्त्रेण तोयस्योत्पवनं चरेत् ॥ ३६ ॥

'इदमापश्शि 'वे त्युक्त्वागन्धद्रव्यैस्समर्चयेत् । [5]
'अवधूत' मिति प्रोच्य मार्जन्या मार्जनं चरेत् ॥ ३७ ॥

पांस्वादीन् सम्परित्यज्य गोमयेनोपलिप्य च ।
'आशासु सप्त' स्वित्युक्त्वा प्रोक्षयेत्पञ्चगव्यकैः ॥ ३८ ॥

अर्चनाङ्ग न्यासविशेषाः

पद्मासने समासीनः [6]शुचिर्ब्रह्मासनाञ्जलिः ।
पूजकः पुरुषो विष्णुः जितमन्युर्जितेन्द्रियः ॥ ३९ ॥

सोर्ध्वपुण्ड्रस्सोत्तरीयः सोष्णीषस्सपवित्रकः ।
तत्तन्मन्त्रं समुच्चार्य धृत्वा पञ्चाङ्गभूषणम् ॥ ४० ॥

'अन्तरस्मिन्निम' इति ब्रह्माणं हृदि संस्मरेत् ।
'ब्रह्म ब्रह्मेति' ति मन्त्रेण हृदयन्त्वभिमृश्य च ॥ ४१ ॥

'द्यौर्द्यौर' सीति मन्त्रेण शिरस्समभिमृश्य च ।
'शिखे उद्वर्तया' मीति शिखामुद्वर्तयेत्सकृत् ॥ ४२ ॥

---

1. शुचिः । ई. 2. प्रतिलोमसमीपेषु राजकेषु न चाहरेत् इ. 3. उत्पूय वस्त्रखण्डेन प्राङ्मुखो वाऽप्युदङ्मुखः. इत्यधिकं दृश्यते आ. 4. दर्भेण. इ. 5. अभिमन्त्र्य च तत्तोयमिदमापश्शिवा, इति अ. पाठः 6. ऋजुः इ.

रक्षां सर्वत्र कृत्वा तु 'देवानामायुधै' रिति ।
'सुदर्शनम' मीत्युक्त्वा दक्षिणे तु सुदर्शनम् ॥ ४३ ॥

'रविपा' मिति वामे च शङ्खञ्च बिभृयात्करे ।
'सूर्योऽसि चन्द्रोऽ' सीत्युक्त्वा नेत्रयोर्दक्षवामयोः ॥ ४४ ॥

रवीन्दुमण्डले पाण्योर्दक्षिणोत्तरयोर्न्यसेत् ।
अकारं हृदये न्यस्य प्रणवैरपि वेष्टयेत् ॥ ४५ ॥

अङ्गुष्ठादिकनिष्ठान्तं 'अङ्कुरण्यं विधिं' तथा ।
'यज्ञं ब्रह्माण' मित्युक्त्वा 'देवेन्द्र' मिति च न्यसेत् ॥ ४६ ॥

निर्माल्यशोधनदि 'नश्य' न्त्विति च मन्त्रेण बिम्बनिर्माल्यशोधनम् ।
'अहमेवे' ति निर्माल्यं [1]पश्चात्पीठञ्च शोधयेत् ॥ ४७ ॥

'पूतस्त' स्येति मन्त्रेण वेदिमद्भिस्सुशोधयेत् ।
पादयोर्विष्णुगायत्र्या दद्यात्पुष्पाणि मूर्तिभिः ॥ ४८ ॥

निर्माल्यं देवदेवस्य गृहीत्वा शान्तमूर्तिभिः[2] ।
विष्वक्सेनमलङ्कृत्य शेषद्रव्यैस्तथाऽर्चयेत् ॥ ४९ ॥

स्नानासनम् 'भूः प्रपद्ये' ति मन्त्रेण देवदेवं प्रणम्य च ।
'परं रंहे' ति मन्त्रेण पीठादादाय चात्वरः ॥ ५० ॥

'प्रतद्विष्णुः स्तवत' इति विष्टरेऽभिमुखे न्यसेत् ।
पादप्रक्षालनं कृत्वा 'त्रीणि पदे' ति मन्त्रतः ॥ ५१ ॥

'शन्नो देवी' रिति जलं दद्यादाचमनं पुनः ।
'अन्नाद्याये' ति मन्त्रेण दन्तधावनमाचरेत् ॥ ५२ ॥

पुनराचमनं दत्वा 'देवस्य' त्वेति दर्पणम् ।
दर्शयित्वा तु ताम्बूलं 'विचक्रम' इति ब्रुवन् ॥ ५३ ॥

---

1. पीठादपि च शोधयेत् इ. 2. (ततःपश्चात्) 'मुकुन्दस्नानपूर्वं तु स्नानकर्मसमाचरे'-दित्यधिकं ई. कोशेषु.

निवेद्य तैलमादाय सोमं तत्र समर्चयन् ।
'अतो देवे'ति मन्त्रेण तैलाभ्यङ्गं समाचरेत् ॥ ५४ ॥

पुष्पैर्मूर्धानमावेष्ट्य प्रातःकालविकासिभिः ।
मूर्धादि पादपर्यन्तं गन्धेनोद्वर्तयेत्पुनः ॥ ५५ ॥

अथवा माषपिष्टेन शालिपिष्टेन वा तथा ।
अष्टम्याञ्च नवम्याञ्च चतुर्दश्याञ्च पर्वणि ॥ ५६ ॥

अभ्यञ्जनञ्च दन्तानां धावनं वर्जयेत्तथा ।
आलयस्योत्तरे वेदिमौपासनविधानतः ॥ ५७ ॥

कृत्वा तत्र प्रतिष्ठाप्य 'प्रतद्विष्णु' रिति ब्रुवन् ।
पाद्यमाचमनं दत्वा पश्चाद्दूर्वाक्षताम्बुभिः ॥ ५८ ॥

मूर्धादि पादपर्यन्तं प्रत्यङ्गमभिपूजयेत् ।
'परिलिखित' मिति मन्त्रेण आम्लेन परिशोधयेत् ॥ ५९ ॥

'वारीश्चतस्र' इत्यद्भिः शुद्धाभिरभिषिच्य च ।
क्षीरेण पुष्पतोयैर्वा 'नमो वरुण' इत्यतः ॥ ६० ॥

अङ्गं हरिद्रयाऽऽलिप्य 'सिनीवा' लीति मन्त्रतः ।
संस्नाप्य शुद्धतोयेन दद्यादाचमनं पुनः ॥ ६१ ॥

वस्त्रोत्तरीयोपवीतपवित्राणि ददेत्पुनः ।
अष्टोपचारैरभ्यर्च्य तत्तन्मन्त्रं समुच्चरन् ॥ ६२ ॥

पुनः पुरुषसूक्तेन 'भूरानिलय' इत्यपि ।
गन्धतोयेन संस्नाप्य प्लोतेन विमृजेत्तथा॥ ६३ ॥

वस्त्रमाचमनं दत्वा विष्टरे स्थापयेत्पुनः ।
वस्त्राभरणमाल्याद्यैरलङ्कृत्यानुलिप्य च ॥ ६४ ॥

(दर्शयेद्धूपदीपौ च अर्घ्यमाचमनं तथा ।
नीराजनविधानेन नीराजनमथाचरेत् ॥ )

दर्पणं चामरं छत्रं नृत्तं गेयञ्च वाद्यकम् ।
दर्शयित्वाऽथ देवस्य दत्वा पुष्पाञ्जलिं पुनः ॥ ६५ ॥

' भूरसि भूः प्रतिष्ठित्या ' इति मन्त्रं समुच्चरन् ।
जीवस्थाने प्रतिष्ठाप्य ' क्षमस्वे ' ति [1]प्रणम्य च ॥ ६६ ॥

वेद्यामेवाथवा स्थाप्य कृत्वाऽऽम्लादिविशोधनम् ।
गन्धतोयाभिषेकञ्च कृत्वा क्षीराभिषेचनम् ॥ ६७ ॥

गन्धतोयाभिषेकान्ते जीवस्थाने निवेशयेत् ।
अथ स्नानक्रियास्सर्वा ' इषे त्वा ' दि समुच्चरन् ॥ ६८ ॥

' इषे त्वा ' स्नापयेन्नित्यमङ्गिरोमुनिभाषितम् [2]।
अथवा पौरुषं सूक्तमुच्चरन् स्नापयेत्प्रभुम् ॥ ६९ ॥

तत्राशक्तकल्पः नित्यं कर्तुमशक्तश्चेत्सति वा बेरगौरवे ।
संस्थाप्य दर्पणं शुद्धं देवदेवस्य सन्निधौ ॥ ७० ॥

प्रतिबिम्बगतं [3]बिम्बं दर्शयित्वा दिने दिने ।
( स्नापयेत्सफलं प्रोक्तमिति शातातपोऽब्रवीत् )
विष्णुपञ्चकसङ्क्रान्तिराजकर्तृदिनेषु च ॥ ७१ ॥

अभिषेकं ततः कुर्यान्नित्यस्नानोक्तमार्गतः ।
देव्यौ नित्यमशक्तश्चेद्विष्णुपञ्चदिनेषु च ॥ ७२ ॥

तत्तन्नक्षत्रयोश्चैव स्नापयेदिति केचन ।
स्नापनस्यौत्सवस्यापि लौहस्यापि ध्रुवस्य च ॥ ७३ ॥

दर्शे वा श्रवणे वापि स्नानं कुर्याद्यथाविधि ।
मन्त्रासनम् प्रणिधिं प्रणवेनाद्भिः पूरयित्वा सहाक्षतम् ॥ ७४ ॥

गायत्र्या तु ध्रुवस्थानं प्रोक्षयेत्तेन वारिणा ।
सम्बन्धकूर्चविचारः ' संयुक्तमेत ' दित्युक्त्वा ध्रुवकौतुकयोस्तथा ॥ ७५ ॥

---

1. प्रसादयेत् इ. 2. कृत्वावास्थापयेत्रत प्राणपीठेऽङ्गिराःखलु? ख. 3. तत्र स्नापयित्वा ई.

न्यसेत्कौतुकबेराग्रं कूर्चं सम्बन्धसंज्ञकम् ।
(तद्देव्योश्च तथा न्यस्य गर्भागारे प्रतिष्ठिते ।
स्नापनस्यौत्सवस्यापि तत्तद्देव्योश्च सन्न्यसेत् ॥)
जलं पङ्कञ्च नालञ्च पुष्पञ्चेति चतुष्टयम् ।
मूलबेरन्तु पङ्कं स्यात्पुष्पं कौतुकमेव हि ॥ ७६ ॥
जलं विमानं कूर्चन्तु नालमित्येव भावयेत् ।
देवस्यावततीर्षोस्तत्सोपानं कौतुकं ध्रुवात् ॥ ७७ ॥
अन्यथा तु कृता पूजा [1]देवं नैवोपतिष्ठति ।
गर्भालयात्ततोऽन्यत्र यदि तु स्नापनौत्सवौ ॥ ७८ ॥
आवाहनविसर्गौ द्वौ नाचरेदिति चाङ्गिराः ।
न तत्र सन्न्यसेत्कूर्चं यत्र नावाह्यते हरिः ॥ ७९ ॥
प्रमाणं तस्य कूर्चस्य सम्बन्धो बेरयोर्यथा ।
प्रतिमासं व्यपोह्यैव कूर्चमन्यन्तु सन्न्यसेत् ॥ ८० ॥
(आवाहनमिदं [2]नित्य मादावेवेति केचन ।)
पुष्पन्यासः ध्रुवस्य पादयोर्मध्ये ' विष्णवे ' इति सन्न्यसेत् ।
प्रागादि ' पुरुषं सत्यमच्युतं चानिरुद्धकम् ' ॥ ८१ ॥
विदिक्षु ' कपिलं यज्ञं नारायण ' मनुस्मरन् ।
' पुण्यं ' चैव च पीठोर्ध्वे प्रथमावरणे न्यसेत् ॥ ८२ ॥
' वाराहं नारसिंहञ्च वामनञ्च त्रिविक्रमम् ' ।
[3]स्मरन् प्रागादि दिक्ष्वेवं ' सुभद्रा–येशितात्मने ' ॥ ८३ ॥
' सर्वोद्वहाय ' चेत्युक्त्वा ' सर्वविद्येश्वराय ' च ।
एवं द्वितीये सन्न्यस्य तृतीयावरणेऽपि च [4] ॥ ८४ ॥

1. ध्रुवं इ. 2. नैत्यं. क. 3. स्मरेत्. क. 4. अथ क.

इन्द्रादीनां तथाऽष्टानां तत्तद्दिक्षु सुसन्न्यसेत् ।
श्रीभूम्योश्च चतुर्दिक्षु पुष्पन्यासं समाचरेत् ॥ ८५ ॥

प्रणवादि नमोऽन्तैश्च चतुर्थ्यन्तैश्च नामभिः ।
प्रादुर्भावेषु पुष्पन्यासविधिः
चतुर्मूर्तिविधिर्यत्र प्रादुर्भावेषु सत्तमाः ॥ ८६ ॥

सन्न्यस्य पादयोर्मध्ये 'विष्णवे नम' इत्यपि ।
तन्मूर्तिभिश्चतुर्दिक्षु पुष्पन्यासं तथा चरेत् ॥ ८७ ॥

एवं [1]ध्रुवे सुसन्न्यस्य (स्वप्रधाने ततः परम् ।
कपिलदीन् सुसन्न्यस्य इन्द्रादींश्च सुसन्न्यसेत् ॥ ८८ ॥

कौतुकपुष्पन्यासः
वाराहादीन् विहायैव) कौतुके च[2] पुनर्न्यसेत् ।
प्रागादिषु 'सुभद्रञ्च हयात्मक' मनुस्मरन् ॥ ८९ ॥

'रामदेवं पुण्यदेव' मिति दिक्षु क्रमान्न्यसेत् ।
'सर्वं सुखावहञ्चैव संवहं सुवहं' स्मरेत् ॥ ९० ॥

पुष्पाणि पूर्वन्न्यस्य [3]पीठस्याधः प्रपूजयेत् ।
'शिवं विश्वं मित्रमत्रिं' पश्चिमादि बहिर्मुखान् ॥ ९१ ॥

'सनत्कुमारसनकसनातनसनन्दनान् ।
वायव्यादिषु कोणेषु तथैकादशविग्रहैः ॥ ९२ ॥

पुष्पन्यास-देवनां स्थितिः
ध्रुवपीठस्थिता देवा देवैरिन्द्रादिभिर्विना ।
बहिर्मुखास्तथेन्द्राद्या देवेशाभिमुखाः स्मृताः ॥ ९३ ॥

स्मरेत्कौतुकपीठान्ते सुभद्रादीन्बहिर्मुखान् ।
अनिरुद्धं वराहञ्च नारसिंहं हयात्मकम् ॥ ९४ ॥

विनाऽन्ये संस्थिता देवे संस्थिते मुनिसत्तमाः ।
[4]आसीनाश्च तथाऽऽसीने [5]शयाने तु न शायिनः ॥ ९५ ॥

---

1. ध्रुवेषु आ. 2. तु क. 3. पूजयेत्पीठधारकान् क. 4. आसीने च तथाऽऽसीनाः क. 5. शयानाश्शयने तथा, ध्रुवकौतुकयोर्देवा ये चान्ये च विशेषतः क.

ध्यायेत्कौतुकवद्देवान् शयनेषु विशेषतः ।
चत्वारस्सर्वदाऽऽसीना अनिरुद्धादयोऽमराः ॥ ९६ ॥

स्थितावेव सदा ध्यायेद्वामनं च त्रिविक्रमम् ।
परिषद्देवानां स्थितिः मार्कण्डेयं भृगुञ्चैव ब्रह्माणं शङ्करं तथा ॥ ९७ ॥

भित्तिपार्श्वे समभ्यर्च्य दक्षिणोत्तरयोः क्रमात् ।
धात्रादीन्द्वारदेवांश्च द्वारे द्वारे समर्चयेत् ॥ ९८ ॥

यजेद्गर्भगृहाद्बाह्ये मणिकं द्वारदक्षिणे ।
वामभागे तथा सन्ध्यां तस्य पत्नीं समर्चयेत् ॥ ९९ ॥

आलये सर्वदिग्द्वारे देवाग्रे न्यक्षमर्चयेत् ।
तत्क्रमेणार्चयेदन्यान्विमानेशान्यथाविधि ॥ १०० ॥

तापसं सिद्धिदञ्चैव द्वितीयद्वारपालकौ ।
अथवा चक्रशङ्खौ द्वौ तृतीयद्वारपालकौ ॥ १०१ ॥

सोपानमध्ये श्रीभूतमर्चयेद्बहिराननम् ।
पुरस्ताद्गरुडं तस्य देवाभिमुखमर्चयेत् ॥ १०२ ॥

उत्तरे वीशसूले तु विष्वक्सेनं समर्चयेत् ।
त्रयोदशोपचारैस्तु तत्तन्मन्त्रैस्समर्चयेत् ॥ १०३ ॥

शिष्यैर्वा कारयेत्सम्यग्द्वारदेवादिपूजनम् ।
द्वारं यवनिकाच्छन्नं कृत्वाऽभ्यन्तरमाविशेत् ॥ १०४ ॥

कूर्मपीठम् द्विहस्तायतविस्तारे षडङ्गुलसमुच्छ्रिते ।
बिल्वाश्वत्थपलाशाद्यैः कल्पिते कूर्मविष्टरे ॥ १०५ ॥

एकजानुक्रमः एकजानुक्रमेणैव समासीनस्समर्चयेत् ।
आसने निहितस्सव्यो वामपादस्समुद्धृतः ॥ १०६ ॥

एवं दक्षिणपार्श्वे[1] तु एकजानुक्रमो भवेत् ।
विपरीतमितो वामे [2]यद्यासीनोऽर्चयेत्तथा ॥ १०७ ॥

[3]तिष्ठन्वा पूजयेद्देवं यथार्हं बेरगौरवे ।
आसने चैवमासीनस्सम्भृत्य द्रव्यसञ्चयम् ॥ १०८ ॥

[4]तत्तद्द्रव्याधिदेवांस्तान् तत्तद्द्रव्यसमीपतः ।
तत्तद्द्रव्यधरान्स्मृत्वा पूजयेत्तु यथाविधि ॥ १०९ ॥

द्रव्याधिदेवार्चनम्

आसनस्य भवेद्धर्मो जलस्य वरुणस्स्मृतः ।
पुष्पे तु हरितः प्रोक्तो गन्धे तु पृथिवी मता ॥ ११० ॥

धूपे बृहस्पतिः प्रोक्तो दीपे तु श्रीरुदाहृता ।
अर्घ्यपात्रे स्मृतस्सोमः [5]शुक्रोऽर्घ्याधिपतिस्स्मृतः ॥ १११ ॥

उद्दिष्टानामथार्घ्यस्य द्रव्याणामधिदेवताः ।
सिद्धार्थस्य भवेत्सोमः कुशाग्रस्याथ जाह्नवी ॥ ११२ ॥

तिलस्य पितरो ज्ञेयास्तण्डुलस्य रविर्भवेत् ।
यजुर्वेदोऽधिपो दध्नः क्षीरस्याथर्ववेदकः ॥ ११३ ॥

अक्षते काश्यपः प्रोक्तो जलस्य वरुणस्स्मृतः ।
प्लोते त्वष्टाऽम्बरे सूर्य उत्तरीये निशाकरः ॥ ११४ ॥

भूषणे षण्मुखः प्रोक्तो वह्निर्यज्ञोपवीतके ।
छत्रे शेषस्तथा वायुश्चामरव्यजनादिषु ॥ ११५ ॥

दर्पणे चन्द्र उद्दिष्टश्चतुरङ्गेषु पक्षिराट् ।
नृत्ते शर्वस्तथा गाने सामवेदोऽधिदैवतम् ॥ ११६ ॥

वाद्ये नन्दीश्वरः प्रोक्तः स्मृत्वा तान् मनसाऽर्चयेत् ।
स्त्रीषु नृत्ताभियुक्तासु [6]जयाद्यप्सरसोऽर्चयेत् ॥ ११७ ॥

---

1. पार्श्वस्थः क. 2. यथाऽऽसीनः क. 3. तिष्ठन् न पूजयेत् क. 4. तत्तद्द्रव्याधिपांस्स्मृत्वा क. 5. अर्कः ख. 6. गणिकास्वप्सरास्तथा क.

ऋग्वेदो मधुपर्कस्य शर्वो मात्राधिपः स्मृतः ।
हविःपात्राधिपस्सूर्यो हविषां कमलासनः ॥ ११८ ॥

मुखवासाधिपा भूमिर्यानेषु गरुडः स्मृतः ।
वरुणः शङ्खकुक्षौ तु तन्मूले पृथिवी मता ॥ ११९ ॥

सर्वतीर्थास्तु धारायां चन्द्रश्शङ्खाधिदैवतम् ।
[1]घण्टाया अधिपो वेधास्तज्जिह्वायां षडाननः ॥ १२० ॥

घण्टानादे महादेव इति ध्यात्वा समर्चयेत् ।
पानपात्रेषु सर्वेषु सोम एवाधिदेवता ॥ १२१ ॥

उपहारादिभोज्यानां पात्रेषु च दिवाकरः ।
(त्रिमूर्तयः त्रिपादे स्युर्वलयं चन्द्रदैवतम् । )
अथवा कारयेच्छिष्यैर्द्रव्याधिपसमर्चनम्[2] ॥ १२२ ॥

अवाहनार्थं पाद्यार्थं तथैवाचमनार्थकम् ।
स्नानार्थं चाद्भिरापूर्य शङ्खांश्च चतुरो न्यसेत् ॥ १२३ ॥

आत्मसूक्तं ततो जप्त्वा तन्मयत्वेन भावयेत् ।
व्याहृतिन्यासादिः 'सुवर्भुवर्भू' रित्युक्त्वा मूर्ध्नि नाभौ च पादयोः ॥ १२४ ॥

यकारं पादयोर्मध्ये पीठे चैव सुसन्न्यसेत् ।
यकारं व्यक्तरूपञ्च सम्यग्ध्यात्वा मरुत्पतिम् ॥ १२५ ॥

[3]पलालधूम्रवर्णञ्च द्विभुजं रक्तवाससम् ।
अकारं हृदये न्यस्य कदम्बकुसुमप्रभम् ॥ १२६ ॥

---

1. घण्टानादधिपः क.

2. नाममन्त्राक्षरध्यानकेतुनक्षत्रसंयुतम् । मन्त्रसङ्ख्यासमायुक्तमृषिच्छन्दोधिदेवताः ॥ देवतायाविभक्तं तमक्षराकारसंयुतम् । अष्टभक्तिसमायुक्तो भूत्यादिदशसंयुतः ॥ एवं सम्यग्विदित्वा तु पूजकः पूजयेद्धरिम् । एतेष्वेकं विहीनं चेदसुरा गृह्णते सदा ॥ आ.

3. पलालधूमधूम्राभं आ.

वैभवीशक्तिसंरूढं चतुर्बाहुं परात्परम् ।
शङ्खचक्रधरं पीतवाससं विष्णुदैवतम् ॥ १२७ ॥

एतांश्च प्रणवैर्मध्ये दिक्ष्वष्टासु च वेष्टयेत् ।
पश्चात्प्राणिधिमुद्धृत्य ध्रुवबेरात्तु तज्जले ॥ १२८ ॥

(यदर्थमम्बु सम्पूर्णं शङ्खोऽन्योऽन्यं न संस्पृशेत् ? ।
तद्रूपवत्कृतं शङ्खं पूजायां लोहजं वरम् ।
यथा निष्कलरूपे तु तथा ध्यात्वा समाहितः ।)

ध्यानप्रकारः

सुवर्णवर्णं रक्तास्यं रक्तनेत्रं सुखोद्वहम् ।
शुकपिञ्छाम्बरधरं विष्णुं प्रणवरूपिणम् ॥ १२९ ॥

किरीटहारकेयूरप्रलम्बब्रह्मसूत्रिणम् ।
श्रीवत्साङ्कं चतुर्बाहुं शङ्खचक्रधरं परम् ॥ १३० ॥

एवं ध्यात्वा समावाह्य पश्चात्कौतुकमूर्धनि ।

आवाहनम्

कूर्चेनादाय तत्तोय 'मिदं विष्णु' रिति ब्रुवन् ॥ १३१ ॥

'आयातु भगवां' श्चेति [1]संस्मृत्याऽवाहनं चरेत् ।
विष्णुमावाहयेन्मध्ये पुरुषादींश्चतुर्दिशम् ॥ १३२ ॥

दक्षिणे श्रियमावाह्य वामे चावाहयेन्महीम् ।
औत्सवं स्नापनं चैव क्रमादावाहयेद्ध्रुवात् ॥ १३३ ॥

स्नापनौत्सवयोः केचित्[2] नेच्छन्ति मुनिसत्तमाः ।
आसनाद्युपचाराणां प्रयोगं शृणुत क्रमात् ॥ १३४ ॥

तत्तन्मन्त्रावसाने तु देवेशं मनसा स्मरन् ।
पञ्चभिमूर्तिभिः [3]द्रव्यनाम योज्य पृथक् पृथक् ॥ १३५ ॥

पञ्चधैव ददामीति दद्याद्देवं प्रणम्य च ।

घण्टाताडनम्

प्रतिद्रव्यं विशेषेण घण्टां सन्ताड्य पूजयेत् ॥ १३६ ॥

---

1. स्मरन् क. 2. केचिदिच्छन्ति क. 3. द्रव्यं संयोज्यैव क.

गृह्णन्ति [1]पूजामसुरा घण्टानादं विना कृतम् ।
अर्चनम् 'प्रतद्विष्णुःस्तवत' इति 'चास्त्वासन' मिति ब्रुवन् ॥ १३७ ॥

पुष्पदर्भकुशेष्वेकं पीठान्ते त्वासनं ददेत् ।
'विश्वाधिकाना' मित्युक्त्वा स्वागतं परिकल्पयेत् ॥ १३८ ॥

'मनोभि' मन्त्रेत्युक्त्वा तु 'प्रसीदे' त्यनुमान्य च[2] ।
'त्वं स्त्रीत्व' मिति मन्त्रेण पाद्यं तदभिमन्त्रयेत् ॥ १३९ ॥

'त्रीणिप' देति मन्त्रेण पाद्यं दद्यात्तु पादयोः ।
'[3]शन्नो दे' वीति मन्त्रेण दद्यादाचमनं करे ॥ १४० ॥

'तद्विष्णो' रिति वै पुष्पं मूर्ध्नि पूर्वं सुसन्न्यसेत् ।
पीठान्ते परितो दद्यान्मूर्तिभिः पुरुषादिकैः ॥ १४१ ॥

'तद्विप्रास' इति प्रोच्य गन्धं दद्यात्तथैव च ।
'बृहस्पति' रिति प्रोच्य धूपं दद्याच्चतुर्दिशम् ॥ १४२ ॥

'शुभ्रा ज्योति' रिति प्रोच्य दीपं देवस्य दर्शयेत् ।
अर्घ्यपात्राणि पञ्च द्वे चैकं [4]वाऽथाऽहरेद्बुधः ॥ १४३ ॥

'[5]आमा वाजस्य' मन्त्रेण क्षालयित्वा पृथक्पृथक् ।
सोमं तेषु समभ्यर्च्य [6]पुष्पाण्यपि विशोधयेत् ॥ १४४ ॥

गायत्रीमुच्चरन् द्रव्यैरापूर्यैवाभिघार्य च ।
'त्रिर्देव—इन्द्रिया' णीति सम्यगर्घ्यं निवेदयेत् ॥ १४५ ॥

[7]पात्रद्वयं यदि भवेदेकं विष्णोर्निवेदयेत् ।
दद्याद्द्वे पुरुषादीनां कूर्चेनादाय चान्यतः ॥ १४६ ॥

---

1. पूजां रक्षांसि क. 2. अनुमानकम् क. 3. दद्यादाचमनं हस्ते शन्नोदेवीरिति ब्रुवन् क. 4. वापि यथोदयं क. 5. आमावाच्जयस्येति प्रोच्य क. 6. पुनश्चापि क. 7. पात्रद्वयञ्च कुर्वीत क.

[1]एकं चेत्पुरुषादीनां कूर्चेनैव निवेदयेत् ।
त्रिविधमर्घ्यम् दृश्यं स्पृश्यं निवेद्यं च त्रिधार्घ्यं परिकीर्तितम् ॥ १४७ ॥

अलङ्कारसने दृश्यं स्पृश्यं स्नानासने तथा ।
मन्त्रासने निवेद्यं स्यात्तत्रापि स्पृश्यमेव वा ॥ १४८ ॥

पुनराचमनं दद्यात्पूर्ववद्दक्षिणे करे ।
'इषे त्वोर्जे' त्वेति तथा मन्त्रस्नानं समाचरेत् ॥ १४९ ॥

'मित्रस्सुपर्ण' इत्युक्त्वा प्लोतेन विमृजेत्ततः ।
'तेजो वत्सव' इत्युक्त्वा वस्त्रं दद्यात्ततः परम् ॥ १५० ॥

'सोमस्ये' ति वदन्मन्त्रमुत्तरीयं प्रयच्छति ।
'[2]भूतो भूते' ष्विति तथा भूषणैरपि भूषयेत् ॥ १५१ ॥

(जातिहिङ्गुलिकैर्नाभ्यामञ्जनेन विलोचने ।
उरोमनश्शिलाख्येन गलं रोचनया तथा ।

पाणिपादतलञ्चैव जातिहिङ्गुलिकेन वै ।
'जातवेदस' इत्येतैरलङ्कुर्याद्यथाविधि ।)

'[3]अग्निं दूतं' समुच्चार्य दद्याद्यज्ञोपवीतकम् ।
पुनः पाद्यादि दीपान्ते तथैवाचमनं ददेत् ॥ १५२ ॥

राजविग्रहाः कृत्वा यवनिकोद्धारं कारयेद्राजविग्रहान् ।
दर्पणं चामरं छत्रं व्यजनं चतुरङ्गकम् ॥ १५३ ॥

नृत्तं गेयञ्च वाद्यञ्च वैष्णवं मन्त्रमुच्चरन् ।
देवस्य दर्शयित्वा तु स्तोत्रं वेदै[4]श्च कारयेत् ॥ १५४ ॥

(पुराणैः स्तोत्रपाठैश्च भाषाभेदैरिति क्रमात् ।
गोग्रासं च ततो दद्यात्सूक्तं गोदानमुच्चरन् ।)

---

1. एकश्चेत्पञ्चमूर्तीनां क. 2. भूतो भूतेषु इत्युक्त्वा क. 3. ततोऽग्निं दूतमित्युक्त्वा क.
4. क्रमाच्चरेत् क.

मात्रादानम् द्रोणतण्डुलमादाय तदर्धं पादमेव वा ।
तण्डुलार्धतिलैर्युक्तं मुखवास[1]फलान्वितम् ॥ १५५ ॥
दर्शयद्देवदेवस्य 'सोमं राजान' मुच्चरन् ।
[2]आचार्याय ततो दद्याद्भक्त्या सम्पूज्य पूजकः ॥ १५६ ॥
(अथ वाप्यर्चकेभ्यो वा दद्यादित्याह पद्मभूः ।)

मधुपर्कम् समांशानि दधिक्षीरमध्वाज्येक्षुरसानि च ।
'अग्निमीले' ति मन्त्रेण मधुपर्कं निवेदयेत् ॥ १५७ ॥
पञ्चानामप्यलाभे तु दधि केवलमेव वा ।

हविर्निवेदनम् 'अथावनीद' मित्युक्त्वा मण्डलञ्चोपलिप्य च ॥ १५८ ॥
'आ मा वाजस्य' मन्त्रेण हविः पात्राणि शोधयेत् ।
रविं तत्र समभ्यर्च्य पुनश्चापि विशोधयेत् ॥ १५९ ॥
अभिघार्य घृतेनैव 'देवस्य' त्वेति मन्त्रतः ।
'अमृतोपस्तरे' त्युक्त्वा हविः प्रक्षिप्य तत्र वै ॥ १६० ॥
गायत्रीमन्त्रमुच्चार्य[3]क्षिपेत्सर्वोपदंशकम् ।
अन्नसूक्तेन मन्त्रेण हवींषि चाभिमृश्य च ॥ १६१ ॥
घृतपात्रं ततो गृह्य त्रिपादोपरि संस्थितम् ।
'यत्ते सुसीम' इत्युक्त्वा घृतमास्रावयेत्पुनः ॥ १६२ ॥
'तदस्य प्रिय' मित्युक्त्वा 'सुभूस्स्वय' मिति क्रमात् ।
'हिरण्यगर्भ' इत्युक्त्वा पायसं पुरुषाय च ॥ १६३ ॥
'इह पुष्टि' मिति प्रोच्य सत्यनाम्ने तिलौदनम् ।
'समा ववर्ती' त्युच्चार्य गौल्यं स्यादच्युताय च ॥ १६४ ॥
'त्रीणि पदे' त्यनिरुद्धाय यावकञ्च निवेदयेत् ।
सर्वेषामप्यलाभे तु शुद्धान्नं वा पृथक् ददेत् ॥ १६५ ॥

1. समन्वितं क. 2. आचार्यायैव तद्दद्यान्मनसा भावयन् हरिम् क. 3. सूपैस्सर्वोपदंशकैः । क.

पञ्चपात्रेष्वलब्धेषु एकस्मिन्पात्र एव वा ।
हविर्यथैकपात्रस्थमात्मयाजी जुहोति च ॥ १६६ ॥

प्राणादीनाञ्च पञ्चानां विष्ण्वादीनां तथा ददेत् ।
पञ्चभिर्मूर्तिभिर्दद्यात् बुद्ध्या सङ्कल्प्य पञ्चधा ॥ १६७ ॥

पक्वान्यनुक्तद्रव्याणि 'सुभूस्स्वय' मिति ब्रुवन् ।
अपक्वानि च सर्वाणि दद्यादष्टाक्षरेण वा ॥ १६८ ॥

पेयानि सर्वद्रव्याणि 'इदं विष्णु' रिति ब्रुवन् ।
दद्यादष्टाक्षरेणैव मन्त्रो यस्य न विद्यते ॥ १६९ ॥

देवीभ्याञ्च मुनिभ्याञ्च ब्रह्मेशाभ्यां तथैव च ।
नित्यौपासनम् नित्याग्निकुण्डे छुल्ल्यां वा परिषिच्य च पावकम्[1] ॥ १७० ॥

'अतो देवा' दिभिष्षड्भिः पञ्चभिर्मूर्तिभिस्तथा ।
देव्यादिपरिवाराणां मूर्तिभिश्चापि हूयताम् ॥ १७१ ॥

नित्यमग्निमविच्छिन्नमशक्तो रक्षितुं यदि ।
समिध्यग्निं समारोप्य निधायाहरहर्यजेत् ॥ १७२ ॥

तस्मात्सर्वप्रयत्नेन समिध्यारोपयेद्बुधः ।
समिधावप्यशक्तश्चेदात्मन्यारोपयेत्सुधीः ॥ १७३ ॥

आत्मना चाप्यशक्तोपि ध्रुवे चारोपयेद्बुधः ।
ध्रुवादग्निं प्रणीयाथ अहरहर्यजेत्क्रमात् ॥ १७४ ॥

तस्मात्सर्वप्रयत्नेन अग्निं संरक्षयेद्बुधः ।
येन केन प्रकारेणाप्यग्निमारोपयेद्गुरुः ॥ १७५ ॥

---

1. ततः इन्द्रादिलोकपालांश्च तत्तद्दिक्षु समर्चयेत् । परिस्तरणकूर्चादीन् परिधीः समिधस्तथा । प्रतिमासं व्यपोह्यैव तद्वदन्यानि निक्षिपेत् । दिनं प्रति तथा शोध्य प्रणिधी पूरयेज्जलम् । इत्यधिकं क.

अग्नौ च न गृहीतेऽपि भ्रूणहा भवति ध्रुवम् ।
बलिप्रकारः, द्वारपाल-लोकपालानपायिनः विमानद्वारलोकेशानपायिभ्यो[1] बलिं ददेत् ॥ १७६ ॥

मणिकश्च तथा सन्ध्या तापसस्सिद्धिदस्तथा ।
किष्किन्धतीर्थौ विघ्नेशनागेशौ द्वारपालका: ॥ १७७ ॥

न्यक्षो विवस्वान् मित्रश्च क्षत्ता विमानपालकाः ।
भूतद्वयामितार्यब्जध्वजा वीशोऽनपायिनः ॥ १७८ ॥

अष्टाविन्द्रादिदिग्देवाः लोकपाला इति स्मृताः ।
(अर्चनं नित्यमेतेषां न कुर्यच्छक्तिवञ्चनाम् ) ॥ १७९ ॥

'इदं विष्णु' रिति प्रोच्य पानीयं शीतलं ददेत् ।
दद्यादाचमनान्ते तु 'विचक्रम' इति ब्रुवन् ॥ १८० ॥

मुखवासं शिलाचूर्णयुक्तं रहितमेव वा ।
विधिना बलिमाराध्य कारयित्वा प्रदक्षिणम् ॥ १८१ ॥

पञ्चप्रणामैरानम्य विष्णुसूक्तं समुच्चरन् ।
द्वादशाष्टाक्षराभ्याञ्च 'नमो ब्रह्मण' इत्यपि ॥ १८२ ॥

'नारायणाय वि' श्चेति पादे पुष्पाञ्जलिं ददेत् ।
पौरुषं सूक्तमुच्चार्य देवं संस्तूय भक्तितः ॥ १८३ ॥

---

1. धातारञ्च विधातारं भुवङ्गञ्च पतङ्गकम् ।
पतिरं वरणश्चैव षडेते द्वारदेवताः ॥

मणिकश्च तथा सन्ध्या तापसः सिद्धिदः पुनः ।
किष्किन्धस्तीर्थसहितः चक्रचूडस्तु शङ्खकः ॥

धनदश्चैव रक्ताब्जो विघ्नेशो नागराजकः ।
एतैर्द्वादशभिर्देवैः द्वारपालाः प्रकीर्तिताः ? ॥

न्यक्षश्चैव विवस्वांश्च मित्रः क्षत्ता तथैव च ।
चत्वारः प्रथिता देवाः विमानपालाः प्रकीर्तिताः ॥

इन्द्रश्चाग्निर्यमश्चैव निर्ऋतिर्वरुणस्तथा ।
वायुः कुबेर ईशान अष्टौ ते लोकपालकाः ॥

प्रणवेन यथाशक्ति दक्षिणां विष्णवे ददेत् ।
दक्षिणेत्यविशेषोक्तौ मुखवासं निवेदयेत् ॥ १८४ ॥

समयभेदेन ध्यानप्रकारभेदः

स्नानादिषट्सु तिष्ठन्तमन्येष्वासीनमेव च ।
ध्यायन्नेवार्चयेद्भक्त्या प्रतिद्रव्यं प्रणम्य च ॥ १८५ ॥

द्रव्यं स्वस्य ललाटान्तमुद्धृत्वोर्ध्वमुखं ददेत् ।
कवाटबन्धनं कुर्या 'त्सूर्यस्त्वे ' ति समुच्चरन् ॥ १८६ ॥

तत ' उद्वय ' मित्याद्यैरुपतिष्ठेत भास्करम् ।
जुहोत्युदितहोमी चेत्कृत्वाऽऽत्मयजनं ततः ॥ १८७ ॥

मध्याह्नार्चनम्

कवाटोद्घाटनादीनि मध्याह्ने पूर्ववच्चरेत् ।

रात्र्यर्चनम्

विना बिम्बाभिषेकेन त्वासनादित्रयेण च ॥ १८८ ॥

रात्रौ स्नानादिषड्भिश्च विनान्यैर्विग्रहैर्यजेत् ।
हविर्निवेदनात्पूर्वं रात्रौ नीराजनं चरेत् ॥ १८९ ॥

नीराजनविधिः

शातकुम्भमयं कुम्भं गृहीत्वाऽऽढकपूरणम् ।
राजतं ताम्रजं वाऽथ यथाशक्ति प्रगृह्य च ॥ १९० ॥

तन्मुखे चषकं न्यस्य तदूर्ध्वे वर्तिकायुतम् ।
अथवा बलिपात्रोक्तप्रमाणं पात्रमाहरेत् ॥ १९१ ॥

नव वा पञ्च चैकं वा कल्पयेत्तत्र वर्तिकाः ।
आनीतान्देवदासीभिर्दीपांश्च पचनालयात् ॥ १९२ ॥

दीपमारोप्य देवाग्रे त्रिपादोपरि विन्यसेत् ।
श्रियं तत्र समभ्यर्च्य ' शुभ्रा ज्योति ' रिति ब्रुवन् ॥ १९३ ॥

उभाभ्यामेव हस्ताभ्यां [1]त्रिस्सकृद्वा प्रदक्षिणम् ।
[2]समाहितं परं नेयात् देवपार्श्वे [3]प्रभाकृतिम् ॥ १९४ ॥

(गन्धेनोर्ध्वाग्रमालिप्य दद्यादाचमनं पुनः ।
नीत्वा पुष्पाक्षताम्बूनि देवस्याग्रे प्रदक्षिणम् । )

1. तिस्रः कृत्वा प्रभाकृतीः क. 2. समाहितोऽत्वरः क. 3. प्रदक्षिणम् क.

चतुर्वेदादिमन्त्रैश्च इन्द्रादीनां च नामभिः ।
विसृजेदुक्तदिक्ष्वेवं पुनः पुष्पाञ्जलिं ददेत् ॥ १९५ ॥

[1]स्नपनोत्सवार्चनान्तेषु एकं नीराजनं चरेत् ।
हविर्निवेदनादीनि कुर्यात्सर्वाणि पूर्ववत् ॥ १९६ ॥

अर्धयामाद्यर्चनम्

अर्धयामेऽर्चयेद्देवं पाद्याद्यैरष्टविग्रहैः ।
हविर्दत्वा यथापूर्वं पानीयादि निवेदयेत् ॥ १९७ ॥

उपसन्ध्यासु सर्वासु केवलं स्वष्टविग्रहैः ।
अर्चयित्वा निवेद्यैव पानीयाचमनं ददेत् ॥ १९८ ॥

मुखवासावसानानि हविरादीनि कारयेत् ।

प्रादुर्भावादीनामर्चने विशेषः

प्रादुर्भावांश्च सर्वान्वै देवान्ब्रह्मादिकानपि ॥ १९९ ॥

तत्तन्मन्त्रावसाने तु तत्तन्मूर्तिभिरर्चयेत् ।

कौतुकादीनामर्चनम्

पूर्वं कौतुकमभ्यर्च्य औत्सवार्चाबलीनपि ॥ २०० ॥

समभ्यर्च्य क्रमेणैव हविः पञ्च निवेदयेत् ।

देव्योरर्चनम्

देव्यौ प्रत्युपचारं तु सहदेवेन पूजयेत् ॥ २०१ ॥

तन्मन्त्रैर्मूर्तिभिश्चैव सूक्ताभ्यां पृथगर्चनम् ।
मन्त्राणां स्खलने कुर्यात् स्वमूर्त्याष्टाक्षरेण वा ॥ २०२ ॥

ध्रुवार्चापूजाविशेषः

अतः परं ध्रुवार्चायाः प्रवक्ष्याम्यर्चनक्रमम् ।
परीत्य मन्दिरं विष्णोः 'प्रतद्विष्णु' रिति ब्रुवन् ॥ २०३ ॥

'अतो देवा' दिना देवं प्रणम्यैवानुमान्य च ।
अङ्गन्यासं ततः कुर्यादात्मसूक्तं तथोच्चरेत् ॥ २०४ ॥

'अहमेवेद' मन्त्रेण कुर्यान्निर्माल्यशोधनम् ।
'पूतस्त' स्येति मन्त्रेण वेदिमद्भिस्सुशोधयेत् ॥ २०५ ॥

पादपुष्पं ततो दत्वा गायत्रीं वैष्णवीं वदन् ।
विष्वक्सेनमलङ्कृत्य देवनिर्माल्यहारिणम् ॥ २०६ ॥

---

1. अर्चनान्ते स्नापनान्ते उत्सवान्ते विशेषतः, नीराजनं चरेदेवं देवाय प्रयतोऽर्चकः ॥

दद्याद्वै पादयोः पाद्यं विष्णो 'स्त्रीणि प' देति च ।
दद्यादाचमनं हस्ते 'शन्नो देवी' रिति ब्रुवन् ॥ २०७ ॥
'अतो देवा' इति वदन् तैलाभ्यङ्गं समाचरेत् ।
'इषे त्वोर्जेत्वे' ति जपन् स्नानकर्म समाचरेत् ॥ २०८ ॥
विष्णुसूक्तेन वस्त्राद्यैरलङ्कृत्य यथाविधि ।
देवस्य पादयोर्मध्ये 'विष्णवे नम' इत्यतः ॥ २०९ ॥
प्रागादि पुरुषादिभ्यः पुष्पन्यासं समाचरेत् ।
आग्नेयादिषु कोणेषु कपिलादिभ्य एव च ॥ २१० ॥
वाराहादिचतुर्णान्तु पूर्वाद्येव प्रदक्षिणम् ।
आग्नेयादिषु कोणेषु सुभद्रादिभ्य एव च ॥ २११ ॥
तृतीयावरणे पश्चाद्दद्यादिन्द्रादिनामतः ।
सुभद्रादिचतुर्भ्यश्च चतुर्थावरणे ददेत् ॥ २१२ ॥
आग्नेयादिषु कोणेषु सर्वादिभ्यस्तथैव च ।
शिवं विश्वं मिलमलिं [1]प्रागादिषु च पूजयेत् ॥ २१३ ॥
सनत्कुमारं सनकं सनातनसनन्दनौ ।
[2]आग्नेयादिषु कोणेषु पूजयित्वा तथैव च ॥ २१४ ॥
ऐन्द्रादिषु तथैशान्तं जयाद्यप्सरसोऽर्चयेत् ।
जयां च विजयां विन्दां नन्दकां पुष्टिकामपि ॥ २१५ ॥
कुमुद्वतीमुत्पलकां विशोकाञ्चापि पूजयेत् ।
द्वारदेवद्वारपालधामपालानपायिनः ॥ २१६ ॥
पूजयित्वा प्रविश्यान्तः पाद्यमाचमनं ददेत् ।
'तद्विष्णोः परम'श्चेति दद्यात्पुष्पञ्च भक्तितः ॥ २१७ ॥
गन्धेन लेपनं कुर्या 'त्तद्विप्रास' इति ब्रुवन् ।
'परो मात्र' येति मन्त्रेण धूपं दद्याच्चतुर्दिशम् ॥ २१८ ॥

1. पश्चिमादिषु क. 2. वायव्यादिषु कोणेषु क.

'विष्णोः कर्माणि' चेत्युक्त्वा पार्श्वे दीपञ्च दर्शयेत् ।
अर्घ्यं 'त्रिर्देव' इत्युक्त्वा देवेशाय निवेदयेत् ॥ २१९ ॥

पुनराचमनं दत्वा राजवद्विग्रहानपि ।
दर्शयित्वा तथा मालां मधुपर्कं निवेदयेत् ॥ २२० ॥

'तदस्य प्रिय' मित्युक्त्वा हवींषि च निवेदयेत् ।
प्रणवादि नमोऽन्तं वै परिवारबलिं ददेत् ॥ २२१ ॥

मूर्तिहोमावसाने तु पानीयं स्वादुशीतलम् ।
गन्धाधिवासितं दद्या 'दिदं विष्णु' रिति ब्रुवन् ॥ २२२ ॥

दद्यादाचमनान्ते तु मुखवासं यथाविधि ।
'विचक्रमे' ति च जपन् देवदेवस्य भक्तितः ॥ २२३ ॥

विधिना बलिमाराध्य कुर्याद्धामप्रदक्षिणम् ।
पञ्चप्रकारैरानम्य विष्णुसूक्तेन वै पुनः ॥ २२४ ॥

द्वादशाष्टाक्षराभ्याञ्च दद्यात्पुष्पाञ्जलीन् बहून् ।
पुरुषसूक्तेन संस्तूय तं यज्ञपुषं स्मरन् ॥ २२५ ॥

कवाटबन्धनं कुर्या 'त्सूर्यस्त्वे 'ति ततो जपन् ।
तत 'उद्वय' मित्याद्यैरुपतिष्ठेत भास्करम् ॥ २२६ ॥

रात्रौ स्नानं न कुर्वीत सर्वमन्यत्समाचरेत् ।
निर्माल्यशोधनं पीठात्प्रतिस्नानं ध्रुवार्चने ॥ २२७ ॥

स्नपने स्नापने बेरे प्रतिद्रव्यं विशोधयेत् ।
हविर्निवेदनात्पूर्वं कुर्यान्नीराजनं तथा ॥ २२८ ॥

एष एव विशेषः स्यात्सर्वमन्यत्समं भवेत् ।
(नवषट्पञ्चमूर्तीनामर्चनं मुनिसत्तमाः ।
खिले विस्तरशः प्रोक्तं तथैव च समाचरेत् ।
अर्चनं पञ्चवीराणां पश्चाद्वक्ष्यामि सत्तमाः ।)
अर्चनाकालविचारः उदयादथ मध्याह्नात्तथैवास्तमयाद्रवेः ॥ २२९ ॥

कालः स्यादुत्तमे यामो मध्यमे पञ्च नाडिकाः ।
यामार्धमधमे प्रोक्तो हविर्हीने तु तद्भवेत् ॥ २३० ॥

एका स्याद्द्रव्यसम्भारे सार्धैका स्नानकर्मणि ।
घटिके द्वेऽर्चने स्यातामेका स्याद्राजविग्रहे ॥ २३१ ॥

घटिकार्धं हविर्दाने घटिकैका तथा बलौ ।
शेषाः शेषोपचाराणमिति यामे प्रकीर्तिताः ॥ २३२ ॥

एका स्याद्द्रव्यसम्भारे एका स्यत्स्नानकर्मणि ।
अर्चने घटिके स्यातामेका स्याद्धविरादिषु ॥ २३३ ॥

समांशा अधमे द्रव्यसम्भारे स्नापनेऽर्चने ।
मध्यमं बलिहीनं स्याद्धविर्हीनं तथाऽधमम् ॥ २३४ ॥

उपसन्ध्यासु यामार्धं नाडिकास्तिस्र एव वा ।
प्रादुर्भावानां कालविशेषे ध्यानप्रकारः हविर्दानेऽर्चनाकाले रामकृष्णादि सायुधान् ॥ २३५ ॥
निरायुधान् स्मरेद्बुद्ध्या [1]अथवा सहजायुधान् ।
वंशस्यायुधसाधर्म्यं भवेद्गोपालविग्रहे ।
अत्रानुक्तानि सर्वाणि खिलोक्तविधिना चरेत् ॥ २३६ ॥

( स्नानादिषु च तिष्ठन्तमन्येष्वासीनमेव च ।
ध्यायन्नेवार्चयेद्देवं शयाने यानकेऽपि च )

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
नित्यार्चनविधानं नाम नवमोऽध्यायः [2] ।

---

1. यद्वि वा आ. 2. १२ अध्यायः ख. १० अध्यायः ई.

# दशमोऽध्यायः

अर्चनाङ्गोपचाराः

अथोपचारान्वक्ष्यामि शृणुध्वं मुनिसत्तमाः ।
देवोपचारहेतुत्वादुपचाराः प्रकीर्तिताः ॥ १ ॥

पूजनार्थं विशेषेण ग्रहणाद्विग्रहाश्च ते ।
चतुष्षष्ट्युपचारांश्च पञ्चपञ्चाशदेव च ॥ २ ॥

चत्वारिंशत्सहाष्टाभिर्द्विचत्वारिंशदेव च ।
षट्त्रिंशच्च चतुस्त्रिंशत् द्वात्रिंशन्नवविंशतिः ॥ ३ ॥

सप्तविंशतिरित्येते नवधा परिकीर्तिताः ।
आलयार्चाविधावेते हविर्हीने त्रयोदश ॥ ४ ॥

द्रव्यदेवार्चने चैव परिवारार्चने तथा ।
एकादशोपचाराः स्युश्शिवादीनां तथाऽर्चने ॥ ५ ॥

प्रतिद्रव्यार्चने प्रोक्तास्स्नपने त्वष्टविग्रहाः ।
होमे षड्विग्रहाः प्रोक्ता अवतारेषु षोडश ॥ ६ ॥

बालालये ध्रुवार्चायां पञ्चविंशतिविग्रहाः ।
द्वौ विग्रहावशक्तानामेको विग्रह एव वा ॥ ७ ॥

इत्येतेषाञ्च सर्वेषामाद्यमावाहनं तथा ।
सामान्यमर्चनान्ते च तथैवोद्वासनं स्मृतम् ॥ ८ ॥

उत्तमकल्पे चतुष्षष्ट्युपचाराः

ताभ्यां विनैव सङ्ख्यातमासनं स्वागतं तथा ।
अनुमानञ्च पाद्यञ्च तथैवाचमनं पुनः ॥ ९ ॥

पुष्पं गन्धञ्च दीपञ्च दीपार्घ्याचमनानि च ।
स्नानं प्लोतञ्च वस्त्रञ्च उत्तरीयञ्च भूषणम् ॥ १० ॥

उपवीतञ्च पाद्यञ्च तथैवाऽचमनं पुनः ।
पुष्पं गन्धञ्च धूपञ्च दीपमाचमनं तथा ॥ ११ ॥

हविर्मन्त्राभिधानं स्यात्पानीयाचमनं पुनः ।
मुखवासोऽष्टपाद्यादि दर्पणं छत्रचामरौ ॥ १२ ॥

तालवृन्तं ध्वजगजरथाश्वा नृत्तगेयकौ ।
वाद्यमायुधसेवा च मङ्गलानां प्रदक्षिणम् ॥ १३ ॥

वेदपारायणं दिक्षु पुराणस्तुतिरेव च ।
(देवस्यापरभागे तु वेदमन्त्रान्सुघोषयेत् ॥

ब्राह्मणैः विष्णुभक्तैश्च सह्याचार्यपुरस्सरम् ।
देवेशमनुगच्छेयुर्वेदानुच्चार्य भूसुराः ॥ )
माला च मधुपर्कश्च हविर्होमौ ततः परम् ॥ १४ ॥

पानीयाचमने चैव मुखवासमतः परम् ।
बलिश्चैव प्रणामश्च पुष्पाञ्जलिरतः परम् ॥ १५ ॥

स्तुतिश्च दक्षिणा पश्चादनुमानश्च भक्तितः ।
चतुष्षष्ट्युपचाराः स्युरुत्तमोत्तमपूजने ॥ १६ ॥

पञ्चपञ्चाशदुपचाराः गजध्वजरथाश्वैश्च मङ्गलैरायुधैरपि ।
[1]विनैवाप्यनुमानेन स्तुत्या दक्षिणया तथा ॥ १७ ॥

विग्रहाः पञ्चपञ्चाशत् प्रोक्ता उत्तममध्यमे ।
षड्भिश्च दक्षिणापूर्वैः [2]पुष्पस्याञ्जलिना विना ॥ १८ ॥

अष्टचत्वारिंशदुपचाराः भोगाष्षडष्टसङ्ख्याता उत्तमाधमपूजने ।
मध्यमकल्पे ततो मन्त्रहावः पूर्वैर्विनाषड्भिश्च विग्रहैः ॥ १९ ॥

द्विचत्वारिंशदुपचाराः द्विचत्वारिंशदुद्दिष्टा मध्यमोत्तमपूजने ।
षट्त्रिंशदुपचाराः स्तोत्रेण च विना वेदैर्मधुपर्केण मालया ॥ २० ॥

छत्रेण व्यजनेनापि ततष्षट्त्रिंशदीरिताः ।
षट्त्रिंशद्विग्रहा एते प्रोक्ता मध्यममध्यमे ॥ २१ ॥

---

1. वितानैश्चामरैश्चापि ख. 2. पुष्पन्यासाञ्जली विना क.

चतुस्त्रिंशदुपचाराः मध्यमाधमपूजायां विना दर्पणचामरौ ।
विग्रहाश्च चतुस्त्रिंशन्नृत्तगेयविवर्जिताः ॥ २२ ॥

अधमकल्पे द्वात्रिंशदुपचाराः द्वात्रिंशद्विग्रहाः प्रोक्ता अधमोत्तमपूजने ।
विनैव वाद्यहोमाभ्यां दीपान्ताचमनेन च ॥ २३ ॥

एकोनत्रिंशदुपचाराः नवविंशतिभोगास्ते प्रोक्ता अधममध्यमे ।
सप्तविंशत्युपचाराः विना बलिप्रणामाभ्यां सप्तविंशतिविग्रहाः ॥ २४ ॥

अधमाधमपूजायां [1]नवधा विग्रहाः स्मृताः ।
कौतुकादीनामुपचाराः अन्येषाञ्च हविर्लाभे सप्तविंशतिविग्रहाः ॥ २५ ॥

अर्चायामौत्सवे वापि लौकिकेष्वितरेषु वा ।
विहितं पूजनं सद्भिः सप्तविंशतिविग्रहैः ॥ २६ ॥

हविर्हीने प्रयोक्तव्यास्ते त्रयोदश विग्रहाः ।
अर्घ्याद्याचमनान्ताः स्युरासनाद्याश्च विग्रहाः ॥ २७ ॥

पुष्पाञ्जलिनमस्कारयुता एते त्रयोदश ।
पुष्पाञ्जलिनमस्कारहीना एकादशैव ते ॥ २८ ॥

अष्टोपचाराः पाद्याद्या अर्घ्याद्याचमनान्तकैः ।
पुष्पादयस्ते षट् प्रोक्ताः होमध्यानार्चनाय वै ॥ २९ ॥

एकादशोपचारास्ते चयुर्भिर्हविरादिभिः ।
प्रणामेन च संयुक्ताः प्रोक्ताष्षोडश विग्रहाः ॥ ३० ॥

(पुष्पाञ्जलिस्तुतिभ्याञ्चेत्युक्तास्तेऽष्टादश स्मृताः ।
पाद्यमाचमनं स्नानं धौतवस्त्रोत्तरीयके ।
भूषणं यज्ञसूत्रञ्च पाद्याद्या अष्टविग्रहाः । )

हविः पानीयमाचामो मुखवासो बलिस्तथा ।
होमश्चैव प्रणामश्च तथा पुष्पाञ्जलिः स्तुतिः ॥ ३१ ॥

---

1. अष्टधा परिकीर्तिताः । एवं विमानपूजायां नवधा विग्रहाः स्मृताः आ.

एकबेरार्चने उपचाराः

एकबेरार्चने प्रोक्ताः पञ्चविंशतिविग्रहाः ।
पुष्पाञ्जलिप्रणामौ द्वौ प्रणामस्त्वेकविग्रहः ॥ ३२ ॥

प्रादुर्भावार्चनायां षोडशोपचाराः

प्रादुर्भावालयार्चायां वक्ष्ये षोडशविग्रहान् ।
पाद्याद्यष्टोपचारान्ते चत्वारो हविरादयः ॥ ३३ ॥
बलिश्चैव प्रणामश्च स्तुतिः पुष्पाञ्जलिस्तथा ।
आलयार्चाविधाने तु पूर्वोक्तविधिनाऽर्चयेत् ॥ ३४ ॥

उपचाराणां चातुर्विध्यम्

स्पृश्या दृश्यास्तथा श्राव्या भोज्याश्चैव चतुर्विधाः ।
आसनं पाद्यदानञ्च पुष्पं गन्धं तथैव च ॥ ३५ ॥
अर्घ्यं स्नानादयष्षट् च माला च मधुपर्ककम् ।
पुष्पाञ्जलिप्रयोगश्च स्पृश्या दक्षिणया सह ॥ ३६ ॥
भोज्या एव समुद्दिष्टाश्चत्वारो हविरादयः ।
देवस्य दक्षिणे हस्ते दद्यात्तानर्घ्यसंयुतान् ॥ ३७ ॥
गीतं वाद्यं तथा वेदाः पुराणं स्तुतिरेव च ।
श्राव्या एव समुद्दिष्टा [1]दृश्याश्चाष्टोपचारकाः ॥ ३८ ॥
धूपार्घ्यमधुपर्काणि आघ्रेयाणीति केचन ।
उपचारा इति प्रोक्तास्तत्प्रयोगक्रमादिकम् ॥ ३९ ॥
स्वरूपञ्च खिले प्रोक्तं विज्ञेयं विधिवित्तमैः ।

ध्रुवबेरपूजायां विशेषः

भक्त्याऽथवा ध्रुवे बेरे पूजां कर्तुं यदीच्छति ॥ ४० ॥
स्नानानुलेपनप्लोतैर्विनाऽन्यैः सर्वविग्रहैः ।
पूजयेन्मुखवासान्तैः ध्रुवबेरन्तु केचन ॥ ४१ ॥

कौतुके नित्यपूजा, उपचारसमर्पणप्रकारः

नित्यपूजां विशेषेण कुर्यात्कौतुक एव वै ।
तत्तन्मन्त्रावसाने तु पञ्चभिर्मूर्तिभिः पृथक् ॥ ४२ ॥
द्रव्यनाम च संयोज्य 'ददा'मीति वदन्ददेत् ।
वस्त्रोत्तरीयोपवीतभूषणादीन् यथाविधि ॥ ४३ ॥

---

1. शेषोपचारकाः अ.

संयोज्य पञ्चमूर्तिभ्यो दद्यादित्याह काश्यपः ।
वस्तूना[1]मर्चनार्थानामाधावमधिकं स्मृतम् ॥ ४४ ॥
[2]अर्चने तु विहीनं यत्तत्तोयेन प्रकल्पयेत् ।

प्रातःकालार्चनार्ह-पुष्पाणि

पङ्कजञ्च पलाशञ्च तुलसी नवमालिका ॥ ४५ ॥
नन्द्यावर्तञ्च मन्दारं माधवी चम्पकं तथा ।
पुन्नागं केतकी चापि प्रातःकालार्चने दश ॥ ४६ ॥

मध्याह्नकालार्चनार्ह-पुष्पाणि

श्वेताब्जं करवीरञ्च पलाशं तुलसी तथा ।
उत्पलं बिल्वपत्रञ्च रक्तोत्पलमथापिवा ॥ ४७ ॥
कोविदारैकपत्रञ्च तापसाङ्कुरमेव च ।
प्रोक्तान्येतानि पुष्पाणि दश मध्याह्नपूजने ॥ ४८ ॥

सायमर्चनार्ह-पुष्पाणि

रक्ताब्जं कुमुदञ्चैव मल्लिका जातिमालती ।
माधवी करवीरञ्च ह्रीबेरं [3]गजकर्णिका ॥ ४९ ॥
तथा दमनकञ्चैव सायंकालार्चने दश ।

सर्वकालार्चनार्ह-पुष्पाणि

दूर्वा च तुलसी बिल्वं करवीरञ्च चम्पकम् ॥ ५० ॥
सर्वकालार्चनार्हाणि विष्णुक्रान्तञ्च भद्रया ।

तुलसीमहिमा

वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम् ॥ ५१ ॥
न वर्ज्यं तुलसीपत्रं न वर्ज्यं जाह्नवीजलम् ।

कपित्थदलप्रशंसा

बिल्वपत्रसमं रात्रौ कपित्थदलमुच्यते ॥ ५२ ॥
यद्यत्पुष्पाणि चोक्तानि तत्तत्पत्रैश्च पूजयेत् ।
अर्चको वारि दीपञ्च पुष्पमेतच्चतुष्टयम् ॥ ५३ ॥
ग्राह्यं सामान्यतस्तेन सम्पूर्णं पूजनं भवेत् ।

पञ्चाङ्गमर्चनम्

ध्रुवबेरार्चनं पूर्वं द्वितीयं शान्तपूजनम् ॥ ५४ ॥
कौतुकाभ्यर्चनं पश्चाद्भूतपीठार्चनं परम् ।
पञ्चमं बलिपूजा स्यादेतैः पञ्चभिरर्चनैः ॥ ५५ ॥

---

1. अर्चनास्थानां जा. 2. अर्चनेन विधानेन क. 3. पुष्पदंसकम् ? आ.

सम्पूर्णमर्चनं युक्तमयुक्तं विकलार्चनम् ।
(पञ्च तुल्यफलान्याहुरर्चनानि तपोधनाः ॥ )
ध्रुवबेरार्चनात्सिद्ध्येत् सायुज्यं पदमक्षयम् ॥ ५६ ॥
सर्वलोकाधिपत्यं वै सारूप्यं शान्तपूजया ।
ऐहिकामुष्मिकं सर्वं भुक्त्वा सायुज्यमाप्नुयात् ॥ ५७ ॥
कौतुकाभ्यर्चनाद्वापि भूतपीठार्चनात्ततः ।
सर्वशत्रुजयं दीर्घमायुरारोग्यमेव च ॥ ५८ ॥
[1]श्रियं पुत्रसमृद्धिञ्च सालोक्यं पदमाप्नुयात् ।
सर्वलोकेऽपि विख्यातिं सामीप्यं बलिपूजया ॥ ५९ ॥
तत्तत्प्रतिष्ठाकर्तॄणां तत्तत्फलमुदाहृतम् ।
बेरे चैव विमाने च भूतपीठे तथैव च ॥ ६० ॥
सदा सन्निहितो विष्णुः छाययोर्धामबेरयोः ।
प्रदक्षिणविधावेतल्लङ्घनन्तु न दोषकृत् ॥ ६१ ॥
युग्मप्रदक्षिणं कुर्यादयुग्मं त्वाभिचारिकम् ।
नैव प्रदक्षिणं कुर्यादन्तरे देवशान्तयोः ॥ ६२ ॥
देवपीठान्तरे चैव न कुर्यादिति केचन ।
एष एव विशेषस्स्यादन्यत्सर्वं खिलोक्तवत् ॥ ६३ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे उपचारभेदपुष्पनिर्णयविधानं नाम दशमोऽध्यायः[2] ।

---

1, पुत्रमित्र आ. 2, १२ अध्यायः ख. ॥ ११, अध्यायः ई.

# एकादशोऽध्यायः ।

---

दशावतारकल्पः (वक्ष्ये दशावताराणां प्रतिष्ठां मुनिसत्तमाः । )

मत्स्यः कूर्मो वराहश्च नारसिंहोऽथ वामनः ।
रामो रामश्च रामश्च कृष्णः कल्कीति ते दश ॥ १ ॥

आविर्भावाः पञ्च पूर्वे प्रादुर्भावास्तथाऽपरे ।
मत्स्यकूर्मौ द्विधा प्रोक्तौ वाराहस्त्रिविधः स्मृतः ॥ २ ॥

पञ्चधा नारसिंहस्तु द्विविधो वामनः स्मृतः ।
एकधा भार्गवो रामो राघवो द्विविधः स्मृतः ॥ ३ ॥

द्विविधो बलभद्रश्च कृष्णोऽसङ्ख्यातविग्रहः ।
एकधा कल्किरूपश्च तेषां शृणुत लक्षणम् ॥ ४ ॥

मत्स्यः महाजलौघप्रलये चराचरजगत्क्षये ।
तत्तोयमुपसंहर्तुमासीत्प्रथममत्स्यकः ॥ ५ ॥

तद्रोमकूपविवरे प्रमितः प्रलयार्णवः ।
कल्पावसानप्रलयलीनवेदोपदेशकः ॥ ६ ॥

मत्स्य आसीद्द्वितीयश्च देवदेवो जनार्दनः ।
तप्तहाटकसङ्काशः प्रथमोऽन्योऽञ्जनप्रभः ॥ ७ ॥

[1]रक्तपद्मासनारूढौ वितस्तिविस्तृतौ ? तथा ।
विस्तारद्विगुणायामौ कुर्यान्मत्स्यौ यथाविधि ॥ ८ ॥

पौण्डरीकः प्रधानाग्निरन्यत्सर्वं **खिलोक्तवत्** ।
कूर्मः स्वस्थानचलितक्षोणीभरणायादिकच्छपः ॥ ९ ॥

द्वितीयश्चामृतोद्धारमन्थमन्दरधारकः ।
अञ्जनाभं तयो रूपं चतुरश्रासनस्थितिः ॥ १० ॥

---

1. रक्तमण्डपमारूढैः द्विहस्तविस्तृतौ ? आ.

गार्हपत्यः प्रधानाग्निरन्यत्सर्वं खिलोक्तवत् ।

वाराहः पातालमग्नां वसुधामुद्धर्तुं प्रथमस्तथा ॥ ११ ॥

आसीदादिवराहाख्यस्तस्य वक्ष्यामि लक्षणम् ।
नररूपो वराहश्च सस्यश्यामश्चतुर्भुजः ॥ १२ ॥

दक्षिणस्सुस्थितः पादः पीठे वामस्तु कुञ्चितः ।
पञ्चतालप्रमाणेन तदूरौ श्यामलां महीम् । १३ ॥

प्राञ्जलीकृतहस्तां तां प्रसारितपदद्वयाम् ।
पुष्पाम्बरां समुद्वीक्ष्य व्रीलाहर्षसमन्विताम् ॥ १४ ॥

देवो दक्षिणहस्तेन देव्योः पादौ प्रगृह्य च ।
वाममाधारवत्कृत्वा देव्या बाह्वोरधोपरि ॥ १५ ॥

पातालमग्नां वसुधां तामुद्धृत्य समुत्थितः ।
पराभ्याञ्च कराभ्याञ्च शङ्खचक्रधरं परम् ॥ १६ ॥

जिघ्रन्मूर्ध्नि तथा देवीं सर्वाभरणभूषिताम् ।
श्वेतपद्मसिताभौ तु पुण्यतीर्थौ तदर्चकौ ॥ १७ ॥

[1]ब्रह्मराजश्रियौ श्वेतरक्ताभौ द्वारपालिके ।
श्वेताभाश्च चतुर्वेदाः वाहनस्थानमाश्रिताः ॥ १८ ॥

पुलिन्दं शैषिकं श्यामं शेषं पूर्ववदाचरेत् ।
प्रलयेऽवान्तरोद्भूते तञ्च संहर्तुमुद्यतः ॥ १९ ॥

वराहः प्रलयाख्योऽभू[2]त्पूर्ववच्च किटेर्मुखम् ।
तप्तहाटकसङ्काशं नीलाम्बरधरं परम् ॥ २० ॥

अभयं दक्षिणं हस्तं वामं कट्यवलम्बितम् ।
शङ्खचक्रधरावूर्ध्वमन्यत्सर्वं च पूर्ववत् ॥ २१ ॥

---

1. ब्रह्मा च श्वेतरक्ताभः कनकाभश्च मौलिकः । इति आ पाठः 2 पूर्ववच्चाहवोन्मुखं

आ. देवस्य दक्षिणे भागे महीं देवीं प्रकल्पयेत् इत्यधिकं ई.

देवस्य दक्षिणे पार्श्वे महीं देवीं प्रकल्पयेत् ।
देवदेव्यौ सुखासीनौ तस्य सिंहासनादधः ॥ २२ ॥

नारदं रक्तवर्णञ्च वीणाहस्तं प्रकल्पयेत् ।
पूजकौ[1] भृगुपुण्यौ तावन्यत्सर्वञ्च पूर्ववत् ॥ २३ ॥

हिरण्याक्षासुरं हत्वा सर्वयज्ञविनाशकम् ।
[2]यज्ञस्य स्थापनं कर्तुमासीद्यज्ञवराहकः ॥ २४ ॥

श्वेतो वर्णोऽखिलश्चान्यत्प्रलयाख्यवराहवत् ।
सिंहासने सुखासीनः श्रीभूमिसहितः परः ॥ २५ ॥

उक्तौ कनकयज्ञाख्यौ पूजकौ रुक्मसन्निभौ ।
तेषां सभ्यः प्रधानाग्निरन्यत्सर्वं खिलोक्तवत् ॥ २६ ॥

'क्षमामेका' मिति मन्त्रेण शतमष्टोत्तरं यजेत् ।
नारसिंहभेदाः — गिरिजः स्थूणजश्चैव सुदर्शननृसिंहकः ॥ २७ ॥

तथा लक्ष्मीनृसिंहश्च पातालनरसिंहकः ।
इति पञ्चविधः प्रोक्तो नारसिंहो मनीषिभिः ॥ २८ ॥

गिरिजस्थूणजौ प्रोक्तौ खिले विस्तरतो मया ।
सुदर्शननृसिंहः — सुदर्शननृसिंहस्य लक्षणं सम्प्रवक्ष्यते ॥ २९ ॥

कोटिसूर्यप्रतीकाशं चक्रं विमलमुज्ज्वलम् ।
बृहद्भानुपुरद्वन्द्वं[3] चक्रमध्ये प्रकल्पयेत् ॥ ३० ॥

तस्य मध्ये [4]सुखासीनं नृसिंहमरुणप्रभम् ।
अत्यन्तभीषणाकारं भक्तानामभयप्रदम् ॥ ३१ ॥

चक्रायुधं चतुर्बाहुं देवदेवं प्रकल्पयेत् ।
तस्य सिंहासनाधस्ताद्दक्षिणेतरपार्श्वयोः ॥ ३२ ॥

---

1. पृथु आ. 2. यज्ञार्थस्थापने आ. 3. द्वारं आ. 4. समासीनं आ.

[1]वदन्तौ कोपशान्त्यर्थं ब्रह्मरुद्रौ प्रकल्पयेत् ।
' यो वा नृसिंह ' इत्युक्त्वा चक्रमन्त्रद्वयेन च ॥ ३३ ॥

अष्टोत्तरशतं होममन्यत्सर्वं नृसिंहवत् ।
लक्ष्मीनृसिंहः वक्ष्ये लक्ष्मीनृसिंहस्य लक्षणं मुनिसत्तमाः ॥ ३४ ॥

सिंहासने सुखासीनं वामपादं प्रसार्य च ।
आसने निहितं पादं दक्षिणं कुञ्चितं तथा ॥ ३५ ॥

देवस्योरौ प्रकुर्वीत लक्ष्मीं सर्वाङ्गसुन्दरीम् ।
सर्वाभरणसंयुक्तां व्रीलाहर्षसमन्विताम् ॥ ३६ ॥

प्राञ्जलीकृतहस्तान्तां[2] पद्मकिञ्जल्कसन्निभाम् ।
प्रसारितपदां देवीं पञ्चतालप्रमाणतः ॥ ३७ ॥

वरदाभयहस्तां वा उद्यत्पद्मधरान्तु वा ।
दक्षिणेनैव हस्तेन कुर्वंस्तदुपगूहनम् ॥ ३८ ॥

वाममूरौ निवेश्यैव पराभ्यां शङ्खचक्रभृत् ।
भुक्तिमुक्तिफलापेक्षी कुर्याद्देवं यथाविधि ॥ ३९ ॥

केवलामुष्मिकापेक्षी लक्ष्मीं वामे प्रकल्पयेत् ।
वामभागे तु कुर्याच्चेद्वामोरौ तां निवेश्य च ॥ ४० ॥

(प्रसार्य दक्षिणं पादं वामपादन्तु कुञ्चितम् । )
वामेन तां परिष्वज्य दक्षिणेनाभयप्रदम् ।
पराभ्याञ्च कराभ्याञ्च शङ्खचक्रधरं तथा ॥ ४१ ॥

एवं सम्परिकल्प्यैनं ब्रह्मेशावपि [3]पूजयेत् ।
औपासनाग्निकुण्डञ्च कुर्याद्देव्याः पृथक् श्रियः ॥ ४२ ॥

एककुण्डेऽथ वा होमं कुर्यादस्याश्च केचन ।
लक्ष्म्याः श्रीसूक्तसंयुक्तं ' श्रिये जात ' इति ब्रुवन् ॥ ४३ ॥

1. बन्दन्तौ आ. 2. हस्ताभ्यां आ. 3. पूर्ववत् ई.

'शं सा नियच्छती' त्युक्त्वा शतमष्टोत्तरं यजेत् ।
'श्रियं धृतिं पवित्रीञ्च लक्ष्मी' मिति च मूर्तिभिः ॥ ४४ ॥

पृथक्कुण्डं यदि भवेत्पुरुषसूक्तसमन्वितम् ।
पूर्ववन्नारसिंहस्य सर्वं कुर्याद्यथाविधि ॥ ४५ ॥

नृसिंहस्थापने विशेषः

(ध्रुवार्चास्थापनं चेद्द्वै भोगं चेद्दैविके पदे । )
सुदर्शनन्नृसिंहञ्च स्थूणजञ्च विनेतरान् ।
सर्वत्र कल्पयेत्पुष्ट्यै ग्रामादिषु च वास्तुषु ॥ ४६ ॥

ग्राममध्ये यदि भवेत् [1]तद्दृष्ट्या सर्वनाशनम् ।
तस्मात्सर्वप्रयत्नेन चतुर्द्वाराणि कारयेत् ॥ ४७ ॥

सुदर्शनन्नृसिंहञ्च स्थूणजञ्च यथाविधि ।
[2]स्थापयेद्ग्रामबाह्येषु ग्रामाभिमुखमेव वा ॥ ४८ ॥

(पर्वताग्रे नदीतीरे वने वा वृक्षसङ्कुले ।
आरामेषु सरित्तीरे जर्झरे स्थापयद्बुधः ॥
सुदर्शनन्नृसिंहस्य अत्रिणोक्तं समाचरेत् । )
पातालनरसिंहञ्च प्रवक्ष्यामि समासतः ।
बामजानु समुद्धृत्य दक्षिणेनैव जानुना ॥ ४९ ॥

आसीनं गरुडं कुर्याच्चतुर्भुजसमन्वितम् ।
उभाभ्यामपि पाणिभ्यां हृदयेऽञ्जलिसंयुतम् ॥ ५० ॥

कराभ्यामितराभ्याञ्च दधानं शेषविग्रहम् ।
भोगिभोगत्रिवलयं स्कन्धे कुर्याद्गरुत्मतः ॥ ५१ ॥

उत्तमाङ्गं समुद्धृत्य फणामण्डलमण्डितम् ।
कल्पयेत्तत्फणाधस्तान्नारसिंहं यथाविधि ॥ ५२ ॥

---

1. ग्रामाधिक्यं निरीक्षणम् आ. 2. कल्पयेत् आ.

कुञ्चितं वामपादन्तं शेषभोगे निधाय च ।
आसीनं दक्षिणं पादं वीशस्कन्धे प्रसार्य च ॥ ५३ ॥

अष्टबाहुसमायुक्तमभयं दक्षिणं करम् ।
शेषैश्चक्रं शरं खड्गं दधतं बाहुभिस्त्रिभिः ॥ ५४ ॥

वामे शङ्खञ्च शार्ङ्गञ्च खेटकञ्च गदामपि ।
शेषं पूर्ववदुद्दिष्टं प्रतिष्ठांकारयेद्बुधः ॥ ५५ ॥

गारुडं शेषदैवत्यं जुहुयादेकविंशतिः ।
'यो वा नृसिंह' इत्युक्त्वा शतमष्टोत्तरं यजेत् ॥ ५६ ॥

(एवं लक्ष्मीनृसिंहञ्च कुर्यादित्येव केचन ।)
नारसिंहप्रतिष्ठायामग्नावाहवनीयके ।
हौत्रं प्रशंस्य तन्मूर्त्या निरुप्याज्याहुतीर्यजेत् ॥ ५७ ॥

अन्यत्सर्वं खिले प्रोक्तं तत्र ज्ञात्वा समाचरेत् ।
नारसिंहविकल्पाश्च बहुधा [1]परिकीर्तिताः ॥ ५८ ॥

तेषां तालविभागश्च मन्त्रा मूर्तय एव च ।
कुण्डञ्च परिवाराणां गिरिजस्योक्तवद्भवेत् ॥ ५९ ॥

वामनः वैरोचने बलवति बलिनोऽसुरपुङ्गवात् ।
काश्यपाद्वामनोऽदित्यामपहर्तुं जगच्छलात् ॥ ६० ॥

आसीत्तस्य प्रवक्ष्यामि प्रतिष्ठामर्चनादिकम् ।
त्रिविक्रमः स एवासीत्त्रिलोकक्रमणोद्यतः ॥ ६१ ॥

त्रिविक्रमस्त्रिताधा प्रोक्तः प्रथमश्च द्वितीयकः ।
तृतीयश्चेति तद्रूपं यथेष्टं कारयेद्बुधः ॥ ६२ ॥

अष्टबाहुं चतुर्बाहुं दशतालक्रमेण वै ।
गदाचक्रासिशक्तीश्च शरं शङ्खञ्च शार्ङ्गकम् ॥ ६३ ॥

---

1. परिकल्पिताः अ.

दधतं श्यामदेहञ्च महारूपधरं हरिम् ।
स्थितं दक्षिणपादेन वामपादं प्रसार्य च ॥ ६४ ॥

हर्षवेगसमायुक्तं सर्वाभरणभूषितम् ।
अष्टबाहुं प्रकुर्वीत प्रवक्ष्यामि चतुर्भुजम् ॥ ६५ ॥

पराभ्याञ्च कराभ्याञ्च शङ्खचक्रधरं परम् ।
दक्षिणं हस्तमादाय पादमन्यत्प्रसारितम् ॥ ६६ ॥

वाममूर्ध्वे प्रसार्याङ्घ्रिं दक्षिणेनैव सुस्थितम् ।
तत्प्रसारितपादोर्ध्वे हस्तं सम्यक्प्रसारितम् ॥ ६७ ॥

इन्द्रं छत्रधरं कुर्यादाकाशस्थं यथाविधि ।
पार्श्वयोश्च यमं सम्यग्वरुणं व्याजनौ तथा ॥ ६८ ॥

जानुमात्रोद्धृते पादे प्रथमस्तु विधीयते ।
नाभिमाने द्वितीयः स्यात्तृतीयस्स्याल्ललाटके ॥ ६९ ॥

ब्रह्माणं कल्पयेदूर्ध्वे तत्पादक्षालनोद्यतम् ।
ततो गङ्गां प्रकुर्वीत ब्रह्मलोकात्परिस्रुताम् ॥ ७० ॥

प्राञ्जलीकृतहस्तान्तां नाभेरूर्ध्वे शरीरिणीम् ।
तस्य पादोर्ध्वतः कुर्यान्नमुचिं भ्रममाणकम् ॥ ७१ ॥

शुक्रं विघ्नकरं कुर्यात्स्थितपादस्य वामतः ।
मुष्टिना प्रहरन्तं तदूर्ध्वे वीशं प्रकल्पयेत् ॥ ७२ ॥

तद्दक्षिणे स्थितं कुर्यात् [1]वटुरूपञ्च वामनम् ।
छत्रदण्डधरं पुण्यं शिखाकौपीनसंयुतम् ॥ ७३ ॥

तत्पार्श्वे बलिनं कुर्याद्गृहीतकरकं[2] तथा ।
सर्वाभरणसंयुक्तं हर्षयुक्तं प्रकल्पयेत् ॥ ७४ ॥

---

1. वररूपं क. 2. कलशं क.

नीलाभं जाम्बवन्तञ्च कल्पये[1]द्वानराकृतिम् ।
इन्द्रं श्यामनिभं कुर्याद्यममञ्जनसन्निभम् ॥ ७५ ॥

वरुणं श्यामवर्णञ्च भास्करञ्चाग्निसन्निभम् ।
श्वेतं निशाकरं कुर्याद्ब्रह्माणं हाटकप्रभम् ॥ ७६ ॥

गङ्गां [2]श्वेतप्रभाङ्कुर्यान्नमुचिं श्याममेव च ।
शुक्रं श्वेतनिभं कुर्यात्कार्यविघ्नत्वरान्वितम् ॥ ७७ ॥

चक्रं श्वेतनिभं कुर्याद्गरुडं पञ्चवर्णकम् ।
वामनञ्च तथा श्यामं बलिनं कनकप्रभम् ॥ ७८ ॥

एवं त्रिभेदतो रूपं स्वेच्छया कारयेद्बुधः ।
अन्वाहार्ये प्रधानाग्नौ हौत्रशंसनमाचरेत् ॥ ७९ ॥

'यो वा त्रिमूर्ति' रित्येकं शतमष्टाधिकं यजेत् ।
[3]स्थापनादीनि सर्वाणि विष्णुसूक्तेन कारयेत् ॥ ८० ॥

वामनो न पृथक् स्थाप्यस्सर्वमन्यत्त्विखिलोक्तवत् ।
परशुरामः
महाबलक्षत्रवधाद्भूभारस्य निरासकः ॥ ८१ ॥

जमदग्निसुतो रामो बभूवात्यन्तदारुणः ।
कल्पयेद्द्विभुजं रामं दशतालप्रमाणतः ॥ ८२ ॥

दक्षिणे परशुं हस्ते वाममुद्देशकं तथा ।
रक्तवर्णं प्रकुर्वीत जटामकुटमण्डितम् ॥ ८३ ॥

नीलाम्बरधरं देवमासीनं स्थितमेव वा ।
तद्रूपं कौतुकं कुर्यादृषींस्तत्परितो लिखेत् ॥ ८४ ॥

अन्वाहार्ये प्रधानाग्नौ हौत्रशंसनमाचरेत् ।
'विष्णुर्वरिष्ठ' इत्युक्त्वा सप्तत्येकोत्तरं यजेत् ॥ ८५ ॥

---

1. वामनाकृतिं क. 2. श्वेतदृहां क. 3. स्नापनादीनि क.

शिष्टानि सर्वकार्याणि पूर्ववत्सम्यगाचरेत् ।
दाशरथिरामः देवहिंसाकरान् हन्तुं रावणाद्यांश्च राक्षसान् ॥ ८६ ॥

आसीद्दाशरथी रामः सायुधाङ्गो निरायुधः ।
सार्धाष्टतालमानेन राघवं सम्प्रकल्पयेत् ॥ ८७ ॥

श्यामलं द्विभुजं कुर्यात्त्रिभङ्गेन च सुस्थितम् ।
शरं दक्षिणहस्तेन चापं वामेन बिभ्रतम् ॥ ८८ ॥

सर्वाभरणसंयुक्तं किरीटमकुटोज्ज्वलम् ।
सीताञ्च दक्षिणे पार्श्वे पीतवर्णां प्रकल्पयेत् ॥ ८९ ॥

सपद्मवामहस्ताञ्च सम्प्रसारितादक्षिणाम् ।
दक्षिणं सुस्थितं पादं वामं किंचिच्च कुञ्चितम् ॥ ९० ॥

पादं हस्तं प्रकुर्वीत विपरीतमथापि वा ।
वामतो लक्ष्मणं कुर्यादष्टतालेन रुक्मभम् ॥ ९१ ॥

[1]बालकुन्तलसंयुक्तमन्यत्सर्वञ्च रामवत् ।
वार्ताविज्ञापनपरं हनूमन्तञ्च दक्षिणे ॥ ९२ ॥

रुक्माभं दक्षिणेनैव पाणिना पिहिताननम् ।
प्रह्वाङ्गमूर्ध्ववदनं वामेनापि धृताम्बरम् ॥ ९३ ॥

एवं सायुध उद्दिष्टो वक्ष्याम्यन्यं निरायुधम् ।
सिंहासने समासीनं देवं देवीं यथाविधि ॥ ९४ ॥

वामतो लक्ष्मणं कुर्यात्प्राञ्जलीकृत्य सुस्थितम् ।
कारयेत्कौतुकं तद्वदासीनं स्थितमेव वा ॥ ९५ ॥

सायुधे सायुधं तद्वत्कौतुकञ्च समाचरेत् ।
एकस्मिन्नेव कुम्भे तु त्रयाणां ध्यानमाचरेत् ॥ ९६ ॥

---

1. बालकुन्दजसंयुक्तं आ.

तस्य देवस्य देव्याश्च शयनक्रम उच्यते ।
तद्वेद्यां लक्ष्मणस्यापि शयनं तु पृथग्भवेत् ॥ ९७ ॥

अन्वाहार्ये प्रधानाग्नौ हौत्रशंसनमाचरेत ।
'रायामीश' इति जपन् सप्तत्येकोत्तरं यजेत् ॥ ९८ ॥

श्रीवत्सर्वेञ्च सीताया युक्त्या बुद्ध्या समाचरेत् ।
बलभद्ररामः वक्ष्यामि बलभद्राख्यरामं यदुकुलोद्भवम् ॥ ९९ ॥

दानवेन्द्रवधात्सोऽपि भूमिभारापनोदकः ।
हस्तिपृष्ठविमाने वा सोमच्छन्देऽथवा पुनः ॥ १०० ॥

कृष्णस्यार्धासनासीनं स्थापयेत्पृथगेव वा ।
शङ्खेन्दुकुन्दधवलं द्विभुजं नीलवाससम् ॥ १०१ ॥

मुसलं दक्षिणे हस्ते हलं वामे च कल्पयेत् ।
इत्येवं सायुधः प्रोक्तः प्रवक्ष्यामि निरायुधम् ॥ १०२ ॥

वामपादं समाकुञ्च्य दक्षिणं सम्प्रसार्य च ।
सव्यञ्चाभयहस्तन्तु वाममूरुनिवेशितम् ॥ १०३ ॥

रेवतीं दक्षिणे पार्श्वे नीलोत्पलदलप्रभाम् ।
पद्मं दक्षिणहस्तेन गृहीत्वाऽन्यं तथैव च ॥ १०४ ॥

ऊरौ निवेश्य चासीनां रेवतीञ्च प्रकल्पयेत् ।
सर्वाभरणसंयुक्तं देवं देवीसमन्वितम् ॥ १०५ ॥

एवञ्च कौतुकं कुर्यात्स्थापनारम्भमाचरेत ।
अग्नावाहवनीये तु हौत्रशंसनमाचरेत् ॥ १०६ ॥

'क्ष्मामेका' मिति मन्त्रेण शतमष्टोत्तरं यजेत् ।
अन्यत्सर्वं विशेषेण विष्णोरिव समाचरेत ॥ १०७ ॥

कृष्णः कूटे वा गोपुराकारे कुम्भाकारेऽथवाऽऽलये ।
नवतालप्रमाणेन कृष्णं कृत्वा समर्चयेत् ॥ १०८ ॥

श्यामलं त्रिणतं रक्तवाससं द्विभुजं तथा ।
पाणिना दक्षिणेनैव क्रीडायष्टिधरं परम् ॥ १०९ ॥

वामेनोत्क्रीडनकरं लीलयैव च सुस्थितम् ।
सर्वाभरणसंयुक्तं सुन्दरं सौम्यलोचनम् ॥ ११० ॥

रुक्मिणीं सत्यभामाञ्च देव्यौ दक्षिणवामयोः ।
श्यामरक्तनिभे कृष्णपीतवस्त्रविभूषिते ॥ १११ ॥

गरुत्मान् बाहुसीमान्तमानेन कारयेद्भूषणोज्ज्वलम् ।
कल्पयेत्प्राञ्जलिं वीशं वामपार्श्वे तु तत्र वै ॥ ११२ ॥

ध्रुवबेरानुरूपं वै कौतुकञ्च समाचरेत् ।
सिंहासने [1]समासीनं देवीभ्यां तु निरायुधम् ॥ ११३ ॥

पूर्वोक्तेन विधानेन सर्वाभरणसंयुतम् ।
नवनीतनटं वाऽथ तथा कालीयमर्दनम् ॥ ११४ ॥

गोपालविग्रहं वाऽथ पार्थसारथिमेव वा ।
रूपाण्यन्यान्यसङ्ख्यानि कृष्णस्य मुनिसत्तमाः ॥ ११५ ॥

शिल्पशास्त्रोक्तविधिना तत्तद्रूपाणि [2]कल्पयेत् ।
दक्षिणं कुञ्चितं पादं वामपादं तु सुस्थितम् ॥ ११६ ॥

तस्य कुञ्चितपादन्तु [3]वामपार्ष्णिनिवेशितम् ।
गृहीतवेणुं हस्ताभ्यां वेणुरन्ध्राहितातननम् ॥ ११७ ॥

बर्हिबर्हावतंसञ्च कुर्याद्गोपालविग्रहम् ।
युक्त्या बुद्ध्या समूह्यैव कुर्यात्तद्रूपकल्पनम् ॥ ११८ ॥

क्रीडायष्टिधरं कृष्णं तथा गोपालविग्रहम् ।
विनान्यान्यस्य रूपाणि देवीविरहितानि वै ॥ ११९ ॥

---

1. सुखासीनं आ. 2. कारयेत् आ. 3. वामपादनिवेशितं आ.

क्रीडायष्टिधरं कृष्णं चौत्सवं विष्णुमेव वा ।
(ज्ञात्वा च हरिवत्सर्वान्परिवारान्प्रकल्पयेत् ॥ १२० ॥

सुन्दरं नामगोपालं विधिवत्स्थानमाश्रितम् ।
द्विभुजं पुष्पवहं चैव कुर्यान्निर्माल्यहारिणम्) ॥ १२१ ॥

पौण्डरीके प्रधानाग्नौ हौत्रशंसनमाचरेत् ।
'सत्यस्सत्यस्थ' इत्युक्त्वा शतमष्टोत्तरं यजेत् ॥ १२२ ॥

हरेरिव समस्तानि स्थापनादीनि कारयेत् ।
चतुर्भुजकृष्णः कृष्णं चतुर्भुजं केचिदिच्छन्ति मुनिसत्तमाः ॥ १२३ ॥

पूर्ववत्पूर्वहस्तौ तु शङ्खचक्रधरौ परौ ।
कृष्णादिमूर्तयः प्रोक्ताः वासुदेवपुरस्सराः ॥ १२४ ॥

सर्वमन्यत्समं प्रोक्तमिति पूर्वजशासनम् ।
कल्की युगान्तसमये विष्णुः कल्किनामा भविष्यति ॥ १२५ ॥

खड्गखेटकहस्तस्तु म्लेच्छादीन् संहनिष्यति ।
भिन्नाञ्जननिभं रक्तवाससं सम्प्रकल्पयेत् ॥ १२६ ॥

पौण्डरीके प्रधानाग्नौ हौत्रशंसनमाचरेत् ।
'ऋतं स' त्येति मन्त्रेण शतमष्टोत्तरं यजेत् ॥ १२७ ॥

अवतारार्चने विकल्पाः अन्तरालेऽथवा विष्णोर्दक्षिणोत्तरपार्श्वयोः ।
कल्पयेद्रामकृष्णौ तु मुखमण्डप एव वा ॥ १२८ ॥

अथान्तर्मण्डले वाऽपि तथाऽऽवरणमण्डपे ।
संस्थाप्य कौतुकं बेरमर्चयेदिति केचन ॥ १२९ ॥

नारसिंहं वराहञ्च वामनञ्च त्रिविक्रमम् ।
ध्रुवबेरं विना कृत्वा कौतुकं लक्षणान्वितम् ॥ १३० ॥

स्थापयित्वा तथा विष्णुं पूजयेदग्रमण्डपे ।
पाद्यमाचमनं स्नानमलङ्कारं तथैव च ॥ १३१ ॥

पाद्यमाचमनं पुष्पं गन्धं धूपमतः परम् ।
दीपार्घ्याचमनान्येव हविः पानीयमेव च ॥ १३२ ॥

तथैवाचमनं पश्चान्मुखवासमतः परम् ।
परप्रधानबिम्बानामेते षोडश विग्रहाः ॥ १३३ ॥

स्वप्रधानावताराणां हरेरिव समाचरेत् ।
स्थानं दशावतारणां ध्रुवकौतुकसंयुतम् ॥ १३४ ॥

अन्तरालयके केचिदिच्छन्ति मुनिसत्तमाः ।
स्थानाश्रयावताराणां मुखवासान्तमर्चनम् ॥ १३५ ॥

तत्तत्प्रधानमन्त्रान्ते तत्तन्मूर्तिं समुच्चरन् ।
अर्चनं स्नपनञ्चैव कुर्याद्भक्तिसमन्वितः[1] ॥ १३६ ॥

आविर्भावावताराः

अतः परं प्रवक्ष्यामि [2]ह्याविर्भावांश्च शार्ङ्गिणः ।
त्रैलोक्यमोहनञ्चैव हरिशङ्करमेव च ॥ १३७ ॥

पूर्वमेव मया प्रोक्ताः खिले विस्तरतस्तथा ।
(मत्स्यकूर्मवराहाणां नारसिंहस्य कल्किनः ॥ १३८ ॥

ऋक्षं श्रवणमेवोक्तं वामनस्य तथैव च ।
अन्येषामवताराणां पृथगृक्षमुदीरितम्) ।

लक्ष्मीनारायणः

लक्ष्मीनारायणं वक्ष्ये सर्वसम्पत्करं वरम् ।
वीशस्कन्धे समासीनं नारायणमनामयम् ॥ १३९ ॥

सर्वमासीनवत्कृत्वा तस्योरौ दक्षिणे तथा ।
देवीं श्रियं प्रकल्प्यैव सर्वाभरणभूषिताम् ॥ १४० ॥

प्राञ्जलीकृतहस्तां तां [3]व्रीलाहर्षसमन्विताम् ।
देवेशेनोपगूढां तां दक्षिणापरपाणिना ॥ १४१ ॥

---

1. अत्र अध्यायसमाप्तिः, ख. 2. स्वाविर्भावांश्च आ. 3. क्रीडा ई.

वामापरभुजो विष्णोः सम्यगूरौ निवेशितः ।
एष एव विशेषस्स्यादन्यत्सर्वं हरेरिव ॥ १४२ ॥

वामोरौ कारयेल्लक्ष्मीमिति केचिद्वदन्ति च ।
(वीशस्कन्धं विना केचिदेवमासीनमासने) ॥ १४३ ॥

सभ्यहोमे प्रधानाग्नौ प्रतिष्ठोक्ताहुतीः क्रमात् ।
नारायणानुवाकञ्च श्रियः सूक्तं तथैव च ॥ १४४ ॥

यजेदष्टोत्तरशतमन्येष्वग्निषु पूर्ववत् ।
'श्रिये जात' इति जपन् पद्माग्नौ पद्महोमकम्[1] ॥ १४५ ॥

(ध्रुवार्चनं यदि भवेत् भोगत्वाद्दैविके पदे ? ।)
लक्ष्मीनारायणाख्यन्तु यजेद्विष्ण्वादिमूर्तिभिः ।
विशेषात्स्थापने तत्र विष्णुमूर्तिं प्रकल्पयेत् ॥ १४६ ॥

औत्सवं बलिबेरञ्च विष्णुं वा तद्वदेव वा ।
पूर्वमष्टोपचारैस्तु ध्रुवमभ्यर्च्य मन्त्रतः ॥ १४७ ॥

द्वात्रिंशद्विग्रहैः पूजां कौतुके तु समाचरेत् ।
निष्कलार्चाविचारः 'नारायणपरं ब्रह्म' परमात्मेति कीर्त्यते ॥ १४८ ॥

तद्रूपं परमं सूक्ष्म[2]मक्षरं निष्कलञ्च यत् ।
तत्स्थानीयं ध्रुवं प्रोक्तमशक्यं निष्कलार्चनम् ॥ १४९ ॥

तत्पुष्पन्यासमात्रं स्याद्ध्रुवबेरार्चनं मतम् ।
विष्णोर्यत्सकलं रूपं स्थूलं सर्वस्य कारणम् ॥ १५० ॥

तत्स्थानीयं कौतुकं स्यात्तत्र पूजां समाचरेत् ।
यथोपयोगशक्यत्वात्कर्तुं पुष्पादिपूजनम् ॥ १५१ ॥

---

1. ततः परं 'शंसानियच्छ' दित्युक्त्वा शतमष्टोत्तरं यजेत् । श्रियं धृतिं पवित्रीश्च लक्ष्मीमित्येव मूर्तिभिः । विशेषात् स्थापने तत्र विष्णुमूर्तिं प्रकल्पयेत् । लक्ष्मीशं लक्ष्मीपतिश्च लक्ष्मीवल्लभमेव च । लक्ष्मीनारायणमिति चतुर्मूर्तिभिरर्चये' दिति अधिकम् **आ.**
2. अत्यन्तं **ई.**

सालम्बनत्वाद्विहितं [1]सकलत्वाच्च पूजनम् ।
ध्रुवस्य निष्कलत्वाच्च निरालम्बनहेतुना ॥ १५२ ॥

अशक्यत्वात्तत्र कर्तुं स्नानगन्धादिविग्रहम् ।
आदिकालव्यवच्छेदान्नेष्यते तद् ध्रुवार्चनम् ॥ १५३ ॥

तथापि पूजनं कर्तुं ध्रुवबेरे यदीच्छति ।
स्नानप्लोतौ विना सर्वैरुपचारैर्यथाविधि ॥ १५४ ॥

'ऋतं सत्ये' ति मन्त्रेण पूजयेदिति केचन ।
नारायणानुवाकेन पुनः पुष्पाञ्जलिं ददेत् ॥ १५५ ॥

रविमण्डलमध्यस्थं तप्तहाटकसन्निभम् ।
शङ्खचक्रधरं सौम्यं प्रसन्नेन्दुनिभाननम् ॥ १५६ ॥

अभयं दक्षिणं पाणिं वामं कट्यवलम्बितम् ।
चन्द्रमण्डलमध्यस्थं शुद्धस्फटिकसन्निभम् ॥ १५७ ॥

अग्निमण्डलमध्यस्थं पूर्ववत्परिकल्पयेत् ।
चक्रम् अतः परं प्रवक्ष्यामि महाचक्रस्य लक्षणम् ॥ १५८ ॥

स्वतन्त्रं स्थापयेन्नैव महाचक्रं विशेषतः ।
देवस्य दक्षिणे पार्श्वे नैऋते वा प्रकल्पयेत् ॥ १५९ ॥

यमनैऋतयोर्मध्ये स्थापयेदालयाश्रयम् ।
उपानात्स्थूपिपर्यन्तं वृत्तमेवास्य मन्दिरम् ॥ १६० ॥

एकबेरविधानेन स्थापयेत्तद्ध्रुवार्चनम् ।
अष्टोत्तरशतज्वालं चक्रं कृत्वाऽस्य मध्यमे ॥ १६१ ॥

अग्निमण्डलयुग्मान्तर्गतं चक्रं प्रकल्पयेत् ।
उत्तमे षोडशभुजं मध्यमेऽष्टभुजं तथा ॥ १६२ ॥

---

1. सकलार्चनपूजनम् आ.

अधमे च चतुर्बाहुं कल्पयेद्वा सुदर्शनम् ।
चक्रञ्च पट्टसं कुन्तं दण्डाङ्कुशहविर्भुजः ॥ १६३ ॥

क्षुरिकाञ्चैव शक्तिञ्च सव्यैर्दधतमष्टभिः ।
शङ्खं शरञ्च चापञ्च पाशं हलमतः परम् ॥ १६४ ॥

वज्रं गदां तोमरञ्च दधद्वामैश्च बाहुभिः ।
इत्युक्तष्षोडशभुजस्त्वष्टबाहुः प्रवक्ष्यते ॥ १६५ ॥

शङ्खचक्रगदापद्ममुसलाङ्कुश[1]पाशिनम् ।
चापिनं कल्पयेच्चक्रमष्टबाहुधरं परम् ॥ १६६ ॥

शङ्खचक्रधरञ्चैव गदापद्मधरं परम् ।
चतुर्बाहुं द्विबाहुं वा यथाशक्ति प्रकल्पयेत् ॥ १६७ ॥

दंष्ट्राकरालवदनं अर्केन्द्वग्निविलोचनम् ।
आजङ्घान्तावलम्बञ्च स्कन्धात्किङ्किणिमालया ॥ १६८ ॥

राजमानमुदाराङ्गं सर्वशत्रुविदारणम् ।
श्रीवत्सकौस्तुभोद्भासिवक्षसं भक्तवत्सलम् ॥ १६९ ॥

वह्निज्वालावृतञ्चापि किरीटमकुटोज्ज्वलम् ।
शरोङ्गाराग्निसङ्काशं शुकपत्त्रनिभाम्बरम् ॥ १७० ॥

एवं कृत्वा महाचक्रं स्थापनारम्भमाचरेत् ।
अक्ष्युन्मेषादिकं कृत्वा चक्रमन्त्रद्वयेन च ॥ १७१ ॥

अधिवास्य यथाशास्त्रं पञ्चगव्यादिषु क्रमात् ।
कुम्भे ध्यात्वा समावाह्य संस्नाप्य कलशैस्तथा ॥ १७२ ॥

औपासनाग्नौ विधिना हौत्रं सम्यक्प्रशंस्य च ।
वैष्णवं विष्णुसूक्तञ्च पौरुषं सूक्तमेव च ॥ १७३ ॥

1. पाशकं आ.

चतुरावर्त्य हुत्वा तु चक्रमन्त्रद्वयेन च ।
अष्टोत्तरशतं हुत्वा जुहुयाच्चक्रमूर्तिभिः ॥ १७४ ॥

प्रातर्मुहूर्ते संस्थाप्य समावाह्य समर्चयेत् ।
एतद्वैदिकमुद्दिष्टं भुक्तिमुक्तिफलप्रदम् ॥ १७५ ॥

(केवलं भुक्तिकामश्चेत् स्मरेन्मंत्रं षडक्षरम् ।
सर्वान्कृत्वा विधानेन होमकाले विशेषतः ॥ १७६ ॥

अष्टोत्तरसहस्रं तन्मन्त्रमावर्त्य हूयताम् ।
एष एव विशेषः स्यादन्यत्सर्वञ्च चक्रवत् ) ॥ १७७ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे दशावतारलक्ष्मीनारायणमहाचक्रस्थापनविधानं नाम एकादशोऽध्यायः[1] ।

---

1. अत्र १२ अध्यायसमाप्तिः ई. १४ अध्यायसमाप्तिः ख.

# द्वादशोऽध्यायः



स्नापनौत्सवयोः पृथक्प्रतिष्ठा

[1](स्नापनौत्सवयोः पश्चात्प्रतिष्ठां प्रवदाम्यहम् ।
कौतुके स्थापिते पूर्वं शक्तौ सत्यां पुनस्तथा ॥ १ ॥

औत्सवं स्नापनं कृत्वा स्थापयेद्विभवार्हतः ।
बिम्बं सलक्षणं कृत्वा सङ्घातं विधिना चरेत् ॥ २ ॥

अक्ष्युन्मेषाधिवासौ च कृत्वा तस्य यथाविधि ।
सभ्याब्जकुण्डे वा कृत्वा प्रतिष्ठां पूर्ववच्चरेत् ॥ ३ ॥

अन्याग्निविहितं होमं सभ्य एव समाचरेत् ।
तत्र प्रणीय नित्याग्निं होमकर्म समाचरेत् ॥ ४ ॥

कुर्यान्नित्याग्निविच्छेदे पञ्चकुण्डानि पूर्ववत् ।
तत्रापि गार्हपत्याग्नेः प्रणीयान्येषु हूयताम् ॥ ५ ॥

पूर्वेद्युरेव शर्वर्यां रात्रिपूजावसानके ।
देवं विशेषतोऽभ्यर्च्य हविस्सम्यङ्निवेदयेत् ॥ ६ ॥

ध्रुवबेरे समावाह्य प्रणम्यैवानुमान्य च ।
संसाध्य विधिना कुम्भं तत्राऽवाह्य ध्रुवात्तथा ॥ ७ ॥

कुम्भं बिम्बस्य पार्श्वे तु स्नानश्वभ्रे निवेश्य च ।
स्नापनं शयनारोहं तथा कौतुकबन्धनम् ॥ ८ ॥

हौतं होमं तथा कृत्वा प्रातस्संस्थाप्य पार्श्वयोः ।
कृत्वा मन्त्राक्षरन्यासौ पूर्वमावाह्य कौतुके ॥ ९ ॥

पश्चाच्चैवौत्सवेऽर्चायां समावाह्य तथा ध्रुवात् ।
आसनादिभिरभ्यर्च्य हविस्सम्यक् निवेदयेत् ॥ १० ॥

---

1. इत आरभ्य सार्धपञ्चविंशतिश्लोकपर्यन्तं मातृकान्तरेषु न दृश्यते ।

उत्सवं चौत्सवे बिम्बे स्नापने स्नपनं तथा ।
यथाशक्ति प्रकुर्वीत दद्यादाचार्यदक्षिणाम् ॥ ११ ॥

लौकिकस्थापनायान्तु नित्याग्निर्न प्रणीयते ।
आवाहनं तथा कुम्भे कुर्यादादित्यमण्डलात् ॥ १२ ॥

कुम्भात्तु लौकिके बिम्बे समावाह्य समर्चयेत् ।
एकबेरविधानञ्चेत् स्थापनं न विधीयते ॥ १३ ॥

कारयित्वौत्सवं बिम्बं रात्रिपूजावसानके ।
एकबेरं समभ्यर्च्य कुम्भे शक्तिं निवेश्य च ॥ १४ ॥

पूर्ववत्स्थापनादीनि कारयित्वा यथाविधि ।
एकबेरे समावाह्य तस्मादावाह्य चार्चयेत् ॥ १५ ॥

एष एव विशेषः स्यादन्यत्सर्वञ्च पूर्ववत् ।
बलिबेरस्य पृथक् प्रतिष्ठा
बलिबेरप्रतिष्ठा चेत्तस्मिन्नावाह्य कौतुके ॥ १६ ॥

समभ्यर्च्य निवेद्यैव बल्युत्सवमथाचरेत् ।
देव्योः पश्चात् प्रतिष्ठा
देव्योः पश्चात्प्रतिष्ठायां विशेषो वक्ष्यतेऽधुना ॥ १७ ॥

देव्यौ स्थावरबिम्बस्य न प्रतिष्ठापयेत्पुनः ।
जङ्गमानान्तु बिम्बानां पुनर्देव्यौ च कल्पयेत् ॥ १८ ॥

ध्रुवे देवीवियुक्तेऽपि देवीयुक्तञ्च कौतुकम् ।
कुर्यात्सर्वप्रयत्नेन विशेषादौत्सवं तथा ॥ १९ ॥

अक्ष्युन्मेषाधिवासौ च कृत्वा तन्मन्त्रमुच्चरन् ।
पार्श्वयोर्यज्ञशालायां कुर्यादौपासनद्वयम् ॥ २० ॥

तयोर्नित्याग्निमाधाय यथोक्तं होममाचरेत् ।
ध्रुवस्य देवीबिम्बाभ्यां शक्तिमावाह्य कुम्भयोः ॥ २१ ॥

स्नपनं शयनं कुम्भं होमञ्च पृथगेव वा ।
सर्वञ्च पूर्ववत्कृत्वा प्रातः स्नात्वा यथाविधि ॥ २२ ॥

ध्रुवदेव्योस्समावाह्य ताभ्यामावाहयेत्तयोः ।
तच्छक्तिपूर्वं संस्काराद्विवाहं न प्रकल्पयेत् ॥ २३ ॥

देवेनाप्यथवा साकं प्रतिष्ठामाचरेत्तयोः ।
निवेश्य कौतुकाच्छक्तिं ध्रुवबेरे यथाविधि ॥ २४ ॥

ध्रुवबेरात्तथा कुम्भे शक्तिमावाह्य पूर्ववत् ।
स्नानश्वभ्रे प्रतिष्ठाप्य देवीं कुम्भञ्च दक्षिणे ॥ २५ ॥

पार्श्वयोः श्वभ्रयोर्देव्यौ प्रतिष्ठाप्य पृथक्पृथक् ।)
[1]स्नापयित्वैकवेद्यान्तु शाययित्वैव मन्त्रतः ॥ २६ ॥

हौत्रादि सकलं कर्म कृत्वा पूर्वोक्तमार्गतः ।
कुम्भाद्ध्रुवे समावाह्य तस्मादावाहयेज्जले ? ॥ २७ ॥

'विवाहविधिमत्रापि नाचरेदिति शासनम् ।
ध्रुवे देवीवियुक्तेऽपि मथितेनैव वह्निना ॥ २८ ॥

आधारं विधिवत्तत्र कृत्वौपासनकुण्डके ।
देव्यौ तु पूर्ववद्ध्यात्वा हृदयाद्वाऽर्कमण्डलात् ॥ २९ ॥

आवाह्य कुम्भयोर्देव्यौ होमकर्मावसानके ।
कुम्भात्तद्बिम्बयोर्भक्त्या समावाह्य समर्चयेत् ॥ ३० ॥

देवीभ्यामौत्सवे सार्धं स्थाप्यमाने तपोधनाः ।
ध्रुवे देवीवियुक्तेऽपि कुम्भं संसाध्य पूर्ववत् ॥ ३१ ॥

[2]कुम्भे बिम्बात्समावाह्य देवं देव्यौ ततः परम् ।
आवाह्य हृदयाद्ध्यायंस्तथैवादित्यमण्डलात् ॥ ३२ ॥

---

1. इतः पूर्वं अधोलिखितसार्धश्लोकः मातृकान्तरेषूपलभ्यते ॥ अनेनैव ग्रन्थेन तासु मातृकास्वध्यायारम्भश्च ॥ ध्रुवस्य कौतुकस्यापि स्नापनस्यौत्सवस्य च । बलिबेरस्य देव्योश्च प्रतिष्ठां सहकारयेत् । पृथगेव प्रतिष्ठा चेत्संस्नाप्य च पृथक्पृथक् इति॥ 2. कुम्भे बिम्बान् आ.

पूर्ववत् स्नपनादीनि कृत्वा सर्वाणि तत्र वै ।
देवदेवं समावाह्य [1]ध्रुवबेरे तु पूर्ववत् ॥ ३३ ॥

तस्माद्देवं समावाह्य कुम्भाद्देव्यौ समावहेत् ।

कौतुकव्यतिरिक्त-प्रतिष्ठायां विशेषः

कौतुकव्यतिरिक्तानां स्थापनायां तपोधनाः ॥ ३४ ॥

परिषद्देवताह्वानं सर्वदेवार्चनं तथा ।
परिषद्देवताहोमं वर्जयेदिति शासनम् ॥ ३५ ॥

अथवा देवदेवस्य देव्योश्चैव पृथक्पृथक् ।
शयनं कुम्भपूजाञ्च कुर्यादित्येव केचन ॥ ३६ ॥

एकबेरप्रतिष्ठायां देव्यौ न स्थापयेत्पुनः ।
श्रीभूमिसहितं कुर्यादादावेव ध्रुवार्चनम् ॥ ३७ ॥

सर्वकामाभिवृद्ध्यर्थी श्रिया केवलमेव वा ।
स्थापयेदेकबेरस्य पश्चाद्वै केवलं श्रियम् ॥ ३८ ॥

देवीभ्यां रहितं कुर्यान्नारसिंहं ध्रुवार्चनम् ।
इच्छन्ति योगमार्गेण सन्तस्सर्वे ध्रुवार्चनम् ॥ ३९ ॥

पटकुड्यादिबिम्ब-प्रतिष्ठा

पटकुड्यसुधाऽऽलेख्यबिम्बानां स्थापनाविधिम् ।
प्रवक्ष्यामि समासेन बिम्बं कृत्वा सलक्षणम् ॥ ४० ॥

औपासनाग्निमाधाय वास्तुहोमविधानतः ।
पर्यग्निपञ्चगव्याभ्यां शोधयित्वा समीपतः ॥ ४१ ॥

पूर्वोक्तेन क्रमेणैव कृत्वा तस्याक्षिमोचनम् ।
कुम्भं पूर्ववदादाय शुद्ध्यर्थं प्रोक्षणं चरेत् ॥ ४२ ॥

प्रदोषे समनुप्राप्ते कुण्डे चौपासने तथा ।
आघारं विधिवत्कृत्वा कुम्भं संसाध्य पूर्ववत् ॥ ४३ ॥

---

1. ध्रुवबेरात् आ.

अभ्युक्ष्य सप्तकलशैर्बद्धा प्रतिसरं तथा ।
हौत्रं प्रशंस्य विधिना देवमावाह्य पूर्ववत् ॥ ४४ ॥

आवाहनक्रमेणैव निरुप्याज्याहुतीर्यजेत् ।
आदिमूर्तिप्रतिष्ठा चेद्वैष्णवं विष्णुसूक्तकम् ॥ ४५ ॥

सूक्तञ्च पौरुषं हुत्वा पुनश्चापि च वैष्णवम् ।
पञ्चवारुणसंयुक्तं जयादींश्च तथैव च ॥ ४६ ॥

यद्देवादींस्ततो हुत्वा सहस्राहुतिसंयुतम् ।
अवतारप्रतिष्ठा चेत्तत्तन्मत्रं शतं यजेत् ॥ ४७ ॥

प्रातर्मन्त्राक्षरन्यासं कृत्वाऽऽवाह्य स्मरन् हरिम् ।
अधस्तात्तस्य बिम्बस्य पीठं कृत्वा त्रिवेदिकम् ॥ ४८ ॥

[1]वितस्त्यायामविस्तारं षडङ्गुलसमुच्छ्रयम् ।
तस्मिन्कूर्चञ्च विन्यस्य द्वादशाङ्गुलमात्रकम् ॥ ४९ ॥

तस्मिन्देवं समावाह्य समभ्यर्च्य निवेदयेत् ।
अर्चनान्ते तथा बिम्बे विसर्जनमथाऽचरेत् ॥ ५० ॥

एष एव विशेषः स्यादन्यत्सर्वञ्च पूर्ववत् ।

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे पश्चात् स्नापनोत्सवेदवीप्रतिष्ठा विधिर्नाम द्वादशोऽध्यायः[2] ।

---

1. वितस्त्यारसमुत्सेधं आ. 2. अत्र १३ अध्यायसमाप्तिः ख. १५ अध्यायसमाप्तिः आ.

# त्रयोदशोऽध्यायः

महास्नपनम् निमित्तानि

अतः परं प्रवक्ष्यामि स्नपनं वै समासतः ।
प्रतिष्ठोत्सवयोरन्ते विषुवायनयोरपि ॥ १ ॥

[1]देवस्य स्नपनं कुर्याद्ग्रहणे सूर्यचन्द्रयोः ।
विभवे सति कुर्वीत विष्णुपञ्चदिनेषु च ॥ २ ॥

मासर्क्षेष्वन्यसङ्क्रान्त्यां जन्मर्क्षे कर्तृभूपयोः ।
[2]ग्रहकोपेऽवग्रहे च दुस्स्वप्ने दुर्निमित्तके ॥ ३ ॥

व्याध्याद्यैः जनपीडायां तत्तच्छान्त्यै प्रकल्पयेत् ।
अब्दान्ते च युगान्ते च व्यतीपातादिषु क्रमात् ॥ ४ ॥

सम्भाराः

अङ्कुरार्पणकादूर्ध्वं द्रव्याण्यपि समाहरेत् ।
नादेयादिमृदोऽष्टौ च हिमवत्प्रमुखाचलान् ॥ ५ ॥

शाल्यादीन्यपि धान्यानि तत्तद्धान्याङ्कुराणि च ।
श्रीवत्सं पूर्णकुम्भञ्च भेरीमादर्शनं तथा ॥ ६ ॥

मत्स्ययुग्माङ्कुशे शङ्खमावर्तञ्चाष्टमङ्गलम् ।
(आवर्तं स्वस्तिके नीलेशानलानिललाहलम् ? । )
बृहद्भानुपुरद्वन्द्वमावर्तमभिधीयते ॥ ७ ॥

[3]युक्त्यान्यानि प्रकुर्वीत प्राग्द्रव्याण्यथ पञ्च वै ।
[4]पञ्चगव्यं घृतमधुदधिक्षीराणि पञ्च वै ॥ ८ ॥

---

1. देवेशं स्नापयेद्यत्नाद्ग्रहणे सोमसूर्ययोः । **आ.** 2. ऋक्षसङ्क्रांचे **आ.** 3. **युक्तान्यन्यानि आ.** 4. एतत्स्थाने । यवं माषं सर्षपञ्च व्रीहिधान्यं तथैव च । पञ्चगव्यस्य संयोगात् घृतं मधु तथा दधि । शकृत् क्षीराणि पञ्चैतान्याढकाहीनमेव वा । यथालाभं गृहीत्वा तु पञ्चगव्यानि योजयेत् । इति **आ** पाठः

गृह्णीयादाढकाहीनं यथालाभमथापि वा ।
शेषं जलेन सम्पूर्य तत्तत्स्थाने समर्चयेत् ॥ ९ ॥

चन्दनोशीरकोष्ठैलालवङ्गाद्यधिवासितम् ।
गन्धोदकमिति प्रोक्तमाढकाहीनमेव च ॥ १० ॥

यवसर्षपसव्रीहिमाषतण्डुलसंयुतम् ।
जलाष्टांशाक्षतैर्युक्तमक्षतोदकमुच्यते ॥ ११ ॥

कदलीचूतपनसनारिकेलफलैर्युतम् ।
नारङ्गमातुलुङ्गाभ्यां त्रिफलैर्मौञ्जकेन च ॥ १२ ॥

भव्यहव्यकुरुन्दैश्च कामरेणापि संयुतम् ।
फलोदकमिति प्रोक्तं जलाष्टांशफलैर्युतम् ॥ १३ ॥

कुशाग्रैर्मिश्रितं तोयं कुशोदकमिति स्मृतम् ।
नवभिः पञ्चभिर्वापि रत्नैः रत्नोदकं स्मृतम् ॥ १४ ॥

'आपो हि' ष्ठेति [1]मन्त्रांस्त्रीनावर्त्याष्टोत्तरं शतम् ।
'अतो देवा' दिभिष्षड्भिर्वैष्णवैस्सकृदेव वा ॥ १५ ॥

जप्त्वाऽभिमन्त्रितं तोयं जप्योदकमिति स्मृतम् ।
ओषध्यः फलपाकान्तास्ताभिस्सर्वाभिरन्वितम् ॥ १६ ॥

तोयाष्टांशप्रमाणाभिः सर्वौषध्युदकं स्मृतम् ।
बिल्वपलाश्चदूर्वाब्जनन्द्यावर्तशमीप्रियाः ॥ १७ ॥

पुण्यपुष्पाणि चोक्तानि यथालाभं समाहरेत् ।
बिल्वपत्रसमं रात्रौ कपित्थदलमुच्यते ॥ १८ ॥

चूर्णं जातीफलादीनां कषायं तीर्थवारि च ।
वनौषधिनिशाचूर्णं सर्वगन्धमतः परम् ॥ १९ ॥

---

1. मन्त्रादीन् आ.

प्लोतञ्च मूलगन्धञ्च धातूनपि समाहरेत् ।
वस्त्रोत्तरीयोपवीतभूषणानि तथाऽऽहरेत् ॥ २० ॥

कलशानाढकापूर्णान् शरावान्प्रस्थपूरणान् ।
द्रोणार्धपूर्णान्करकान् द्रोणपूर्णान्घटानपि ॥ २१ ॥

खण्डस्फुटितकालादिरहितानेव चाऽहरेत् ।
साग्रैरगर्भदर्भैश्च पञ्चभिर्दशभिर्युतान् ॥ २२ ॥

षट्त्रिंशदङ्गुलायामान् परिस्तरणकूर्चकान् ।
कलशार्थान्प्रकुर्वीत द्वादशाङ्गुल ।म्मितान् ॥ २३ ॥

नवभिस्सप्तभिर्वाऽथ पञ्चभिस्त्रिभिरेव वा ।
कुशाः काशास्तथोशीरा दूर्वा वै व्रीहयस्तथा ॥ २४ ॥

विश्वामित्ना यवाश्चापि सप्त दर्भाः प्रकीर्तिताः ।
स्नपनञ्चाधिवासः पूर्वरात्रौ तु देवेशं समभ्यर्च्य निवेदयेत् ॥ २५ ॥

आलयाद्दक्षिणे वेदिं शयनार्थं प्रकल्प्य च ।
शयनानि पञ्च चास्तीर्य तथा धान्योपरि क्रमात् ॥ २६ ॥

तत्र देवं समारोप्य बद्ध्वा प्रतिसरं तथा ।
शयने शाययेद्देवं पूर्ववत्सुसमाहितः ॥ २७ ॥

(सन्धिद्वयमतिक्रम्य स्नपनं सम्भवेद्यदि ।)
सद्यः प्रतिसरं बद्ध्वा शयनं सम्प्रकल्पयेत् ॥ २८ ॥

कौतुके स्नापनाभावे स्नपनं यदि कारयेत् ।
ध्रुवार्चास्नपने वाऽपि सद्यः कौतुकबन्धनम् ॥ २९ ॥

कृत्वा श्वभ्रे प्रतिष्ठाप्य स्नापयेदिति शासनम् ।
रात्रौ यदोदयात्पूर्वं निमित्तं स्नपनस्य तु ॥ ३० ॥

रात्रिपूजावसाने तु तथा नोद्वासयेद्धरिम् ।
स्नपनान्ते तथोद्वास्य प्रातरावाहयेत्तथा ॥ ३१ ॥

नावाहनविसर्गौ द्वौ कौतुकव्यतिरिक्तयोः ।
स्नपनमण्डपम् आलयाभिमुखे कुर्यादुत्तरैशान्ययोस्तथा ॥ ३२ ॥

मण्डपं वा प्रपां वाऽथ कूटं वा स्नपनालयम् ।
षोडशस्तम्भसंयुक्तं चतुर्द्वारसमन्वितम् ॥ ३३ ॥

श्रीवत्सं पद्मकं वाऽपि स्वस्तिकं वा यथाविधि ।
तण्डुलैर्व्रीहिभिर्वाऽथ पङ्क्तिं कुर्यात्तदन्तरे ॥ ३४ ॥

द्वितालहीनविस्तारं युगाग्न्यक्ष्यङ्गुलोच्छ्रयम् ।
चतुर्दिक्षु तथा हस्तविस्तारं द्वारसंयुतम् ॥ ३५ ॥

लिखेत्पत्रलताकारं 'सुमित्रान' इति स्थलम् ।
इन्द्रादीनां दिगीशानां पङ्क्तीशस्यामितस्य च ॥ ३६ ॥

तत्तत्स्थानेषु पीठानि पङ्क्तावेव प्रकल्पयेत् ।
पङ्क्तिबाह्येतरे? वापि कुर्याच्चेदाभिचारिकम् ॥ ३७ ॥

तन्मध्ये स्नपनश्वभ्रमौपासनविधानतः ।
कल्पयित्वा परिस्तीर्य जयादीनपि पूजयेत् ॥ ३८ ॥

पूर्वोक्तेन प्रकारेण तत्पङ्क्त्यां विहिते पदे ।
द्रव्यन्यासः न्यसे[1]न्मृदादिद्रव्याणि देवेशाभिमुखानि वै ॥ ३९ ॥

तेषु कूर्चञ्च विन्यस्य पूजयेदधिदेवताः ।
तत्तद्द्रव्यधरान् ध्यात्वा तत्तद्द्रव्यसमीपतः ॥ ४० ॥

उद्धृत्य शयनाद्देवं श्वभ्रमध्ये निवेश्य च ।
पाद्यादिभिस्समभ्यर्च्य तैलेनाभ्यज्य पूर्ववत् ॥ ४१ ॥

तथैव पुनरभ्यर्च्य स्नापयेच्च मृदादिभिः ।
स्नपनप्रकारः प्रणवेन समभ्युक्ष्य गृहीत्वा शिष्यहस्ततः ॥ ४२ ॥

---

1. रत्नादिद्रव्याणि आ.

21

ललाटान्तं समुद्धृत्य त्रिस्सकृद्वा प्रदक्षिणम् ।
नीत्वा संस्नापयेद्देवं मूर्तिभिः पञ्चभिः क्रमात् ॥ ४३ ॥

द्रव्यं पात्रं पुनः प्रोक्ष्य पूर्वस्थाने निवेशयेत् ।
प्राग्द्रव्यैश्च प्रधानैस्तदुपस्नानसमन्वितैः ॥ ४४ ॥

अनुद्रव्यैश्च पूर्वोक्तैर्मन्त्रैस्संस्नापयेत्तथा ।
संस्थाप्य देवमास्थाने समभ्यर्च्य निवेदयेत् ॥ ४५ ॥

कौतुकं स्नपनान्ते च जीवस्थाने निवेश्य च ।
समभ्यर्च्य निवेद्यैव दद्यात्पुष्पाञ्जलिं पुनः ॥ ४६ ॥

ध्रुवार्चास्नपने विशेषः

ध्रुवार्चास्नपने कुर्यादालयाभिमुखे प्रपाम् ।
पूर्ववत्परितः पङ्क्त्यां स्नानद्रव्याणि विन्यसेत् ॥ ४७ ॥

धान्यराशौ तु तन्मध्ये गन्धतोयाभिपूरितम् ।
कुम्भं सन्न्यस्य वरुणं तत्र सम्पूज्यदैवतम् ॥ ४८ ॥

आदायाभ्यन्तरं गत्वा स्नापयेच्च मृदादिभिः ।
अलङ्कृत्य समभ्यर्च्य हवींष्यपि निवेदयेत् ॥ ४९ ॥

रात्रौ सूर्योदयात्पूर्वं स्नपनं यदि सम्भवेत् ।
नोद्वास्य शक्तिं तद्बिम्बाज्छुभ्रे संस्थाप्य पूर्ववत् ॥ ५० ॥

स्नपनान्ते समभ्यर्च्य निवेद्योद्वासयेत्तथा ।
उदये शक्तिमुद्वास्य ध्रुववेद्यां निवेश्य च ॥ ५१ ॥

ध्रुवात्तत्र समावाह्य स्नापयेदिति शासनम् ।
यदि नक्षत्रयुग्मं स्यादेकमासे विशेषतः ॥ ५२ ॥

परस्मिन्नेव दिवसे स्नापयेत्पुरुषोत्तमम् ।
तिथिद्वयं यदि भवेत् द्वयोरपि समाचरेत् ॥ ५३ ॥

वारद्वयानुषक्तश्चेन्निमित्तर्क्षं तिथिस्तु वा ।
परस्मिन्नेव दिवसे स्नपनादीनि कारयेत् ॥ ५४ ॥

एकस्मिन्नेव दिवसे निमित्तर्क्षतिथिद्वयम् ।
नक्षत्रस्नपनं पूर्वं तिथिकर्म ततश्चरेत् ॥ ५५ ॥

पूर्वकर्मावसाने तु कृत्वा सद्योऽङ्कुरार्पणम् ।
सद्यः प्रतिसरं बद्ध्वा द्वितीयं स्नपनं चरेत् ॥ ५६ ॥

एष एव विशेषः स्यादन्यत्सर्वं खिलोक्तवत् ।

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे महास्नपनविधिर्नाम त्रयोदशोऽध्यायः[1] ।

---

1, अत्र १४: अध्यायसमाप्तिः ख.

# चतुर्दशोऽध्यायः

---

महोत्सवः अवभृथकालः

अतः परं प्रवक्ष्यामि क्रमेणैवोत्सवं हरेः ।
विषुवायनभूपर्क्षप्रतिष्ठाकर्तृभेषु च ॥ १ ॥

(यजमानस्य जन्मर्क्षे नृपतेः ऋक्ष एव वा) ।
ग्रहणे मासनक्षत्रे विष्णुपञ्चदिनेषु वा ॥ २ ॥

उत्सवस्यान्त्यदिवसे तेषु तीर्थं प्रकल्पयेत् ।
एतेष्वेकं परिग्राह्यं यजमानेच्छया दिनम् ॥ ३ ॥

विषुवे चायने चैव ग्रहणे सोमसूर्ययोः ।
तत्तत्काले प्रकुर्वीत तीर्थस्नानन्तु नान्यथा ॥ ४ ॥

अन्यर्क्षेष्वथ मध्याह्ने पूर्वाह्ने वा गुणाधिके ।
एकस्मिन्नेव मासे तु यदि तीर्थदिनद्वयम् ॥ ५ ॥

तयोरन्त्यदिनं तीर्थमिति पूर्वजशासनम् ।
तदेव यदि सूर्यस्य विद्धञ्चेत्सङ्क्रमादिभिः ॥ ६ ॥

वर्जनीयं तथा पूर्वं प्रशस्तमभिधीयते ।
वारद्वयानुषक्तञ्चेद्दिनमेकमथापरम् ॥ ७ ॥

अर्कवारर्क्षसंयोगस्सर्वदा सम्प्रशस्यते ।
श्रवणद्वादशीयोगस्सर्वकर्मफलप्रदः ॥ ८ ॥

योगाश्च सुप्रशस्ताः स्युस्सिद्धामृतवराह्वयाः ।
उत्सवत्रैविध्यम् कालश्रद्धानिमित्तार्था उत्सवास्त्रिविधाः स्मृताः ॥ ९ ॥

मासे तु यस्मिन् कस्मिंश्चित् प्रतिसंवत्सरं हरेः ।
क्रियते समयेनैव स वै कालोत्सवो भवेत् ॥ १० ॥

श्रद्धया क्रियते यस्तु स श्रद्धोत्सव उच्यते ।
उत्पातेषु निमित्तेषु अनावृष्ट्यादिकेषु वै ॥ ११ ॥

क्रियते तत्र शान्त्यर्थं स निमित्तोत्सवः स्मृतः ।

उत्सवदिनमानम् कालः उत्तमन्तु त्रिसप्ताहं मध्यमन्तु चतुर्दश ॥ १२ ॥

नवाहं वाऽथ सप्ताहमधमं परिचक्षते ।
त्रिगुणान्युत्सवाहानि कृत्वाऽऽदौ घोषणञ्चरेत् ॥ १३ ॥

मध्ये तु द्विगुणादौ स्यादुत्सवादिदिनेऽधमे ।
अथवाऽवभृथात्पूर्वं एकविंशतिके दिने ॥ १४ ॥

ध्वजस्यारोहणं कृत्वा सर्वमुत्सवमाचरेत् ।
(उत्सवादौ ध्वजारोहे ध्वजाङ्कुरमथाऽचरेत् ।

तत्र क्रियासु सर्वासु सकृदेवाङ्कुरार्पणम् ।
उत्सवाङ्कुरमुद्दिश्य सायाह्ने तु मृदं हरेत् ।

प्रदोषकाले सम्प्राप्ते ध्वजारोहणमाचरेत् ।
तद्वात्रावुत्सवान्ते तु तीर्थाङ्कुरमथाऽचरेत् ।

सप्तपञ्चदिने वापि विधिना चाङ्कुरार्पणम् ।)

ध्वजदण्डलक्षणम् विप्रादीनां क्रमाद्वेणुजातिचम्पकपूगजाः ॥ १५ ॥

ध्वजदण्डाः समाख्याताः सर्वेषां क्रमुकन्तु वा ।
अथवा शुभवृक्षाणां सारं कैश्चिदपीष्यते ॥ १६ ॥

तद्विमानसमायामं पादोनं वाऽर्धमेव वा ।

ध्वजपटलक्षणम् ध्वजवस्त्रं समादाय खिलोक्तविधिना चरेत् ॥ १७ ॥

तन्मध्ये विलिखेद्वीशमासीनं साञ्जलिं विभुम् ।
पञ्चवर्णसमायुक्तं नवतालप्रमाणतः ॥ १८ ॥

आकाशारोहिणं वापि वीरासनमथापि वा ।
एतेषां लक्षणं प्रोक्तं पूर्वमेव मया खिले ॥ १९ ॥

परिवारोक्तमार्गेण नयनोन्मीलनादिकम् ।
कृत्वा वीशं समावाह्य समभ्यर्च्य निवेदयेत् ॥ २० ॥

भेरीताडनम्

आग्नेय्यां धान्यपीठे तु विन्यस्यैव तु भेरिकाम् ।
तत्र नन्दीशमावाह्य समभ्यर्च्य निवेद्य च ॥ २१ ॥

'उपश्वासय पृथिवी' मिति दुन्दुभिसूक्तकम् ।
जप्त्वा व्याहृतिभिः पश्चाद्घोषणं स्वयमाचरेत् ॥ २२ ॥

बलिना बलिबिम्बेन चक्रवीशामितैस्सह ।
ग्रामसन्धौ बलिं दत्वा तत्तन्मन्त्रैश्च घोषयेत् ॥ २३ ॥

क्रमादालयमाविश्य ध्वजं संस्थाप्य पूर्ववत् ।
ध्वजदण्डं प्रतिष्ठाप्य पूर्वाह्ने च शुभोदये ॥ २४ ॥

घोषणान्ते पुनः कुर्याद्ध्वजारोहणमेव वा ।
पुण्याहान्ते समभ्यर्च्य मुद्गान्नं वा निवेदयेत् ॥ २५ ॥

ध्वजावरोहणं यावत्तावन्नित्यं समाहितः ।
त्रिकालं वा द्विकालं वाऽप्येककालमथापि वा ॥ २६ ॥

पूर्वोक्तेन क्रमेणैव समभ्यर्च्य निवेदयेत् ।
पूर्वेद्युरेव पूर्वाह्णे कृत्वा नयनमोक्षणम् ॥ २७ ॥

रात्रौ होमादिकं कृत्वा प्रातरावाह्य पूर्ववत् ।
ध्वजस्यारोहणं कृत्वा मध्याह्ने तु विशेषतः ॥ २८ ॥

देवानां घोषणं कुर्याद्रात्राविति च केचन ।
ध्वजस्यारोहणादूर्ध्वमुत्सवादिदिनादधः ॥ २९ ॥

रात्रिपूजावसाने तु ग्रामसन्धौ तु पूर्ववत् ।
आहूतानाञ्च देवानां बलिं दद्याद्यथाविधि ॥ ३० ॥

उत्सवद्रव्यसम्भारांस्ततः प्रभृति चाऽऽहरेत् ।
प्रथमेऽहनि पूर्वाह्ने वीथीः सर्वत्र शोधयेत् ॥ ३१ ॥

'अवधूत' मिति प्रोच्य मार्जन्या मार्जनं चरेत् ।
अद्भिरभ्युक्षणं कुर्या 'द्दाशास्वि' ति च मन्त्रतः ॥ ३२ ॥

स्नपनोक्तक्रमेणैव मध्याह्ने स्नापयेद्धरिम् ।
चक्रवीशामितांश्चैव स्नापयेद्गन्धवारिणा ॥ ३३ ॥

विशेषतस्समभ्यर्च्य हविश्चैव निवेदयेत् ।
ततोऽपराह्ने सम्प्राप्ते चक्रवीशामितैस्सह ॥ ३४ ॥

तीर्थाङ्कुरार्थं गृह्णीयान्मृदं पूर्वोक्तमार्गतः ।
ग्रामं प्रदक्षिणीकृत्य प्रविश्याऽऽलयमत्वरः ॥ ३५ ॥

अथ तीर्थदिनात्पूर्वं नवमे वाऽथ सप्तमे ।
पञ्चमेऽहनि वा कुर्याद्विधिना चाङ्कुरार्पणम् ॥ ३६ ॥

प्रदोषे समनुप्राप्ते दक्षिणेऽभिमुखेऽथवा ।
यागशालां प्रकल्प्यैव षोडशस्तम्भसंयुताम् ॥ ३७ ॥

मध्ये वेदिं प्रकल्प्यैव पञ्चाग्नीनुत्तमेऽथवा ।
त्रेताग्नीन्मध्यमे कुर्यात्सभ्यमेवाधमे तथा ॥ ३८ ॥

अग्निराहवनीयः स्यात्प्रधानो मध्यमे भवेत् ।
अन्ययोस्सभ्य एव स्यात् नित्यहोमेऽथवा भवेत् ॥ ३९ ॥

होमस्थाने त्वनिर्दिष्टे निर्दिष्टस्थानसङ्कटे ।
अशक्तस्त्वरितो वाऽथ निर्दिष्टे स्थानकल्पने ॥ ४० ॥

कर्मणामपि सर्वेषां कल्पयेत्पचनालये ।
अनादेशविषयः अग्निकुण्डे त्वनिर्दिष्टे कुण्डमौपासनं चरेत् ॥ ४१ ॥

होमद्रव्ये त्वनिर्दिष्टे गव्यं घृतमुदाहृतम् ।
कालेऽनुक्ते तु मध्याह्नः पात्रेऽनुक्ते स्रुवं भवेत् ॥ ४२ ॥

प्रणामेष्वविशेषोक्ते स्वस्तिबन्धनमाचरेत् ।
नवकुम्भारोपणम् नवकुम्भान्समाहृत्य तन्तुना परिवेष्ट्य च ॥ ४३ ॥

नादेयाद्भिस्समापूर्य वस्त्रयुग्मेन वेष्टयेत् ।
(अष्टमङ्गलसंयुक्तान् पञ्चायुधसमन्वितान् ॥ ४४ ॥

नवरत्नसमायुक्तान् कूर्चाक्षतसमन्वितान् ।
कुम्भांस्तांस्तु पृथक् कृत्वा पिधानैस्तु पिधाय च) ॥ ४५ ॥

पुनरन्तः प्रविश्यैव देवदेवं समाहितः ।
द्विगुणञ्च समभ्यर्च्य द्विगुणञ्च निवेदयेत् ॥ ४६ ॥

बध्द्वा प्रतिसरं पश्चाद्देवं देवीसमन्वितम् ।
यागशालां समासाद्य 'जातवेदस' इत्यथ ॥ ४७ ॥

प्रणीय तेषु नित्याग्निं कुण्डेष्वाघारमाचरेत् ।
वेद्यां धान्यं समास्तीर्य कुम्भानारोप्य तत्र वै ॥ ४८ ॥

ध्रुवादावाहयेत्तेषु दीपाद्दीपमिव क्रमात् ।
मध्ये कुम्भे तथा विष्णुं प्रागादि पुरुषादिकान् ॥ ४९ ॥

आग्नेयादि तथाऽऽवाह्य कपिलादीन् यथाविधि ।
सप्तविंशतिभेदैश्च समभ्यर्च्य प्रणम्य च ॥ ५० ॥

वीशानपायिपङ्क्तीशशान्तान् दिक्ष्वर्चयेत्क्रमात् ।
सायं प्रातर्विना कुम्भैर्देवं वीशामितैस्सह ॥ ५१ ॥

वेद्यामेव प्रतिष्ठाप्य पूजयेदिति केचन ।
नित्यहोमः होता पश्चात्प्रधानाग्नौ हौत्रशंसनमाचरेत् ॥ ५२ ॥

प्रतिष्ठोक्तक्रमेणैव तदालयगतान् सुरान् ।
आवाह्य तत्क्रमेणैव निरुप्याज्याहुतीर्यजेत् ॥ ५३ ॥

उत्सवदैवत्यानि तत्राहस्तिथिवारर्क्षवाहनानां विशेषतः ।
अधिदेवाश्च तन्मन्त्राः क्रमश्चैव प्रवक्ष्यते ॥ ५४ ॥

प्रथमे ब्रह्मदैवत्यं द्वितीये चार्षमेव च ।
तृतीये रुद्रदैवत्यं चतुर्थे वासवं तथा ॥ ५५ ॥

पञ्चमे सोमदैवत्यं षष्ठे वैष्णवमाचरेत् ।
सप्तमे सर्वदैवत्यमष्टमे याम्यमेव च ॥ ५६ ॥

नवमे वारुणं प्रोक्तं दशमे वायुदैवतम् ।
एकादशे तु कौमारं द्वादशे नैऋतं यजेत् ॥ ५७ ॥

त्रयोदश्यान्तु वाराहं चतुर्दश्यान्तु रौहिणम् ।
गारुत्मन्तं पञ्चदश्यां षोडश्यां दौर्गकं यजेत् ॥ ५८ ॥

सप्तदश्यान्तु कौमारं जुहुयाद्देशिकोत्तमः ।
अष्टादशे तु होतव्यं नरसूक्तन्तु वित्तमैः ॥ ५९ ॥

एकोनविंशतिदिने नरसूक्तं यजेद्बुधः ।
विंशतिमे दिने चैव भूसूक्तं जुहुयाद्बुधः ॥ ६० ॥

एकविंशदिने चैव जुहुयात्पारमात्मिकम् ।
एवमुत्सवदैवत्यं क्रमेण जुहुयाद्बुधः ॥ ६१ ॥

प्रथमे त्वग्निदैवत्यं प्राजापत्यं द्वितीयके ।
तृतीये च तु कौबेरं चतुर्थे वैघ्नमेव च ॥ ६२ ॥

श्रीदैवत्यञ्च पञ्चम्यां षष्ठ्यां कौमारमेव च ।
सप्तम्यां सूर्यदैवत्यमष्टम्यां रौद्रमेव च ॥ ६३ ॥

नवम्यां दौर्गदैवत्यं दशम्यां याम्यमेव च ।
एकादश्यां तथैन्द्रञ्च द्वादश्यां वैष्णवं यजेत् ॥ ६४ ॥

त्रयोदश्यां तथा वाऽपि मातृदैवत्यमेव च ।
चतुर्दश्यान्तु होतव्यमीशदैवत्यमेव च ॥ ६५ ॥

पञ्चदश्यां तथा वाऽपि सौम्यञ्च जुहुयात्क्रमात् ।
सूर्यवारादिवारेषु तत्तद्दैवत्यमाचरेत् ॥ ६६ ॥

'अग्नये कृत्तिकाभ्यस्त्वा' हेति नक्षत्रदैवतम् ।
तत्तद्वाहनदैवत्यं तत्तन्नाम्ना च हूयताम् ॥ ६७ ॥

वैष्णवं विष्णुसूक्तञ्च नरसूक्तं यजेद्बुधः ।
श्रीभूसूक्तं ततो हुत्वा महीसूक्तं यजेत्क्रमात् ॥ ६८ ॥

मूर्त्तिहोमञ्च जुहुयात् नित्यमेवं क्रमं विदुः ।
वैष्णवं विष्णुसूक्तञ्च नरसूक्तसमन्वितम् ॥ ६९ ॥

दिनसन्ध्यादिदैवत्यं तिथिवारर्क्षदैवतम् ।
तदालयगतानाञ्च मूर्तिभिश्च जुहोति वै ॥ ७० ॥

[1]समिद्भिर्जुहुयात्सभ्ये साज्येन चरुणा बुधः ।
जुहुयात्पौरुषं सूक्तमैन्द्रमाहवनीयके ॥ ७१ ॥

अन्वाहार्ये विष्णुसूक्तं श्रीसूक्तेन समन्वितम् ।
वैष्णवं गार्हपत्याग्नावावसथ्ये ततः परम् ॥ ७२ ॥

एकाक्षरादिसूक्तञ्च महीसूक्तं तथा यजेत् ।
प्रथमेऽहनि पालाशं द्वितीये बैल्वमेव च ॥ ७३ ॥

तृतीये तु शमी चैव न्यग्रोधञ्च चतुर्थके ।
औदुम्बरं पञ्चमे च षष्ठे चाश्वत्थमेव च ॥ ७४ ॥

सप्तमे खादिरं प्रोक्तमष्टमे प्लाक्षमुच्यते ।
आपामार्गन्तु नवमे दशमे चाम्रमेव च ॥ ७५ ॥

एकादश्यां कुशञ्चैव द्वादश्यां दौर्गमेव च ।
त्रयोदशे चामलकं पाटलञ्च चतुर्दशे ॥ ७६ ॥

पनसं पञ्चदशके कोविदारन्तु षोडशे ।
सप्तदशे तु पुन्नागं समिद्भिरिति हूयते ॥ ७७ ॥

अष्टादशे तु मन्दारं वकुलमेकोनविंशतौ ।
चम्पकं विंशतितमे जुहुयाच्च यथाक्रमम् ॥ ७८ ॥

एकविंशतिके चैव कापित्थं जुहुयात्क्रमात् ।
इत्येतैश्च समिद्भिश्च क्रमेण जुहुयाद्बुधः ॥ ७९ ॥

---

1. इत्येवं जुहुयात्सभ्ये साज्येन चरुणा बुधः ख.

आज्येन साज्यचरुणा समिद्भिश्चोत्तमे हुनेत् ।
आज्येन साज्यचरुणा मध्यमे होममाचरेत् ॥ ८० ॥

आज्येनैवाधमे होमं साज्येन चरुणाऽथवा ।
आज्येन वाऽथ चरुणा सायंप्रातर्यजेद्बुधः ॥ ८१ ॥

प्रथमोत्सवमारभ्य तीर्थान्तं जुहुयात्क्रमात् ।
विना कुम्भैश्च देवैश्च नित्याग्नौ होममाचरेत् ॥ ८२ ॥

चक्रवीशामितैस्सार्धं बलिना च समन्वितम् ।
प्रदक्षिणक्रमेणैव ग्रामसन्धौ बलिं क्षिपेत् ॥ ८३ ॥

ग्रामोत्सवप्रकारः पश्चादन्तः प्रविश्यैव देवदेवं प्रणम्य च ।
अलङ्कृत्य यथान्यायं वस्त्राभरणकुण्डलैः ॥ ८४ ॥

सुगन्धिपुष्पमालाभिर्गन्धैरपि मनोरमैः ।
[1]रथे वा शिबिकायां वा वीशयन्त्रेऽथवा हरन् ॥ ८५ ॥

गजयन्त्रान्दोलिकासु डोलायन्त्रेऽथवा पुनः ।
'अहमेवे' ति मन्त्रेण देवमारोप्य निश्चलम् ॥ ८६ ॥

अष्टोपचारैरभ्यर्च्य लाजापूपादिकानि च ।
संस्कृतान्गुडसम्मिश्रान् निवेद्य मुखवासकम् ॥ ८७ ॥

दत्वा वाद्यैस्समायुक्तं सर्वालङ्कारसंयुतम् ।
मुखवासं निवेद्यैव वीथीश्चापि नयेद्बुधः ॥ ८८ ॥

भ्रमणम्, वाहनक्रमः (उत्सवे देवदेवस्य वाहनक्रम उच्यते ।
प्रथमे चोत्सवे प्रातः शुकवाहनमाचरेत् ॥ ८९ ॥

तद्रात्रौ देवदेवस्य हंसवाहनमाचरेत् ।
द्वितीये दिवसे चैव मृगेन्द्रं शरभं चरेत् ॥ ९० ॥

---

1. 'यानेषु च समारोप्य 'अहमेवे' दमन्त्रतः । अष्टोपचारैरभ्यर्च्य अपूपादि निवेदयेत् । मुखवासं निवेद्यैव' इत्येव. आ. पाठः

कपीन्द्रश्च प्रभाञ्चैव तृतीये चोत्सवं चरेत् ।
चतुर्थे दिवसे चैव कल्पकं पञ्चगं ? चरेत् ॥ ९१ ॥

पञ्चमे चोत्सवे चैव पक्षीशङ्खार्धचन्द्रकम् ।
षष्ठेऽह्नि चोत्सवे प्राप्ते गजं पाशिं ? तथैव च ॥ ९२ ॥

सप्तमे चोत्सवे चैव पुष्पकं कमलं चरेत् ।
अष्टमे चोत्सवे प्राप्ते डोलामश्वं समाचरेत् ॥ ९३ ॥

नवमे दिवसे चैव विमानं यानमाचरेत् ।
दशमे चोत्सवे प्राप्ते शिबिकारोहणं चरेत् ॥ ९४ ॥

तद्रात्रौ च महोत्सेधं गजलक्ष्मीं प्रकल्पयेत् ।
एकादशदिने प्रातः कच्छपं वाहनं चरेत् ॥ ९५ ॥

तद्रात्रौ तु महोत्सेधं पुन्नागं वाहनं चरेत् ।
द्वादशे तु दिने प्रातः कृष्णसारं समाचरेत ॥ ९६ ॥

तद्रात्रौ तु महारूपं मत्स्यवाहनमाचरेत् ।
त्रयोदशदिने प्रातः कूर्मयन्त्रं प्रकल्पयेत् ॥ ९७ ॥

तद्रात्रौ तु विशेषेण श्रीभूमिसहितं तथा ।
तल्पे चैव समारोप्य उत्सवं तु समाचरेत् ॥ ९८ ॥

कौतुकरथः चतुर्दशदिने प्रातः कौतुकं रथमाचरेत् ।
तद्रात्रौ तु महारूपं शार्दूलं वाहनं चरेत् ॥ ९९ ॥

सप्ताष्टदिवसे प्रातः चरेत्कुण्डलिवाहनम् ।
तद्रात्रौ तु शुभाकारं [1]गण्डभेरुण्डमाचरेत् ॥ १०० ॥

षोडशे दिवसे प्रातः प्रभापीठं प्रकल्पयेत् ।
तद्रात्रौ तु महारूपमैन्द्रञ्च परिकल्पयेत् ॥ १०१ ॥

---

1. गण्डभेरं ई.

नवाष्टदिवसे प्रातः गिरिवाहनमाचरेत् ।
तद्रात्रौ तु शुभाकारं पनसं वाहनं चरेत् ॥ १०२ ॥

अष्टादशदिने प्रातः कालियं वाहनं चरेत् ।
तद्रात्रौ तु विशेषेण चक्रवाहनमाचरेत् ॥ १०३ ॥

एकोनविंशदिवसेऽप्यातपं वाहनं चरेत् ।
तद्रात्रौ तु महोत्सेधं पारिजातं प्रकल्पयेत् ॥ १०४ ॥

दिने विंशतिके प्रातः ध्वजवाहनमाचरेत् ।
तद्रात्रौ तु महारूपं शङ्खवाहनमाचरेत् ॥ १०५ ॥

एकविंशदिने प्रातः रथयात्रां समाचरेत् ।
इत्येवं वाहनं प्रोक्तं क्रमेणैवोत्सवं चरेत् ॥ १०६ ॥

आह्निकविकल्पः

एकविंशेऽप्यशक्तौ तु चतुर्दशदिनं चरेत् ।
चतुर्दशेऽप्यशक्तौ तु नवाहं चोत्सवं चरेत् ॥ १०७ ॥

एकविंशदिने चैव चतुर्दशदिने तथा ।
नवसप्ताहपक्षे वा रथयात्रां समाचरेत् ॥ १०८ ॥

रथयात्रावसाने तु देवेशं सम्प्रणम्य च ।
अष्टोपचारैरभ्यर्च्य मुद्गान्नञ्च निवेदयेत् ॥ १०९ ॥

मुखवासं निवेद्यैव पुष्पाञ्जलिमथाऽचरेत् ।
तत्क्षणादेव देवेशं तद्रथादवरोपयेत् ॥ ११० ॥

याने चैव समारोप्य तीर्थस्थानं प्रवेश्य च ।
तीर्थस्याभिमुखे कृत्वा तीर्थोत्सवमथाचरेत् ॥ १११ ॥

रथे त्वारोपि देवे रथयात्रासु परिवर्तिते ।
रथचक्रे तदाऽधारे भग्ने भग्ने तथैव च ॥ ११२ ॥

रथप्रायश्चित्तविशेषाः

एवं विघ्ने समुत्पन्ने द्विदिनं त्रिदिनन्तु वा ।
आसायदिनपर्यन्तं रथे तिष्ठति केशवे ॥ ११३ ॥

नवाहेऽपि च सायाह्ने तीर्थान्तोत्सवमाचरेत् ।
रथे देवं प्रतिष्ठाप्य आलयं प्रविशेद्बुधः ॥ ११४ ॥

स्नापनञ्च तथा नीत्वा चक्रञ्चैव तथैव च ।
शिबिकायां समारोप्य तीर्थस्थानं प्रवेशयेत् ॥ ११५ ॥

तीर्थोत्सवञ्च कृत्वैव आलयं प्रविशेत्सुधीः ।
यागशालां प्रविश्यैव अन्तहोमं समाचरेत् ॥ ११६ ॥

कुम्भं प्रदक्षिणीकृत्य गर्भगेहं प्रवेशयेत् ।
कुम्भाच्छक्तिं [1]समादाय ध्रुवबेरेऽवरोपयेत् ॥ ११७ ॥

तद्रात्रौ तु प्रकर्तव्यान् बलीन् सर्वांश्च कारयेत् ।
बलिबेरं तथा नीत्वा ध्वजस्थाने निवेश्य च ॥ ११८ ॥

[2]तस्मिन्नेवाह्नि रात्रौ तु ध्वजदेवं विसर्जयेत् ।
ध्वजं तमवरोप्यैव मौनेन बलिमाचरेत् ) ॥ ११९ ॥

सर्वान्देवान् विसृज्यैव [3]शिष्टं कर्म समाचरेत् ।
रथस्थानं ततो गत्वा देवदेवं प्रणम्य च ॥ १२० ।

रथचक्रं तदाधारं सुदृढीकृत्य पूर्ववत ।
रथे तु योजयेच्छीघ्रं रथं नीत्वा क्रमेण तु ॥ १२१ ॥

यथास्थानं प्रतिष्ठाप्य देवं तमवरोपयेत् ।
जीवस्थाने प्रतिष्ठाप्य (लघुसम्प्रोक्षणं चरेत् ।
(स्नपनोक्तप्रकारेण) स्नपनञ्चैव कारयेत् ) ॥ १२२ ॥

महाहविः प्रभूतं वा देवेशाय निवेदयेत् ।
रक्षाबन्धविसर्गः आचार्यस्यर्त्विजाञ्चैव रक्षाबन्धं विसर्जयेत् ॥ १२३ ॥

बन्धनं देवदेवस्य विसृज्य प्रणमेद्भुवि ।
उत्सवे देवदेवस्य पक्षद्वयगते सति ॥ १२४ ॥

---

1. च कूर्चेन आवहेद्बेरमूर्धनि ई. 2. नवाह्नयेव तु ई. 3. सर्वकर्म ख.

तीर्थकालविचारः मासद्वयगते वापि वर्षद्वयगते तथा ।
तिथिऋक्षप्रधानादौ द्वित्वदोषो न विद्यते ॥ १२५ ॥

परिवारपरिवृतिः द्विकालमेककालं वा उत्सवः क्रियते यदि ।
यानारूढे देवदेवे रथ्यास्वानायितेऽपि च ॥ १२६ ॥

दासीभिर्वादकैश्चैव नृत्तगेयसमन्वितैः ।
सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम् ॥ १२७ ॥

ब्राह्मणैर्विष्णुभक्तैश्च भाषास्तुतिपरायणैः ।
पुराणस्तुतिपाठैश्च वस्तुशास्त्रपरायणैः ॥ १२८ ॥

एतैस्सर्वैस्समायुक्तमग्रे चोत्सवमाचरेत् ।
ध्वजादिपरिवारः ध्वजैश्छत्रैरातपत्रैस्तोरणैश्च तथैव च ॥ १२९ ॥

यानि शृङ्गारचिह्नानि प्रभुचिह्नानि यानि च ।
गृहीत्वा तानि चिह्नानि ब्राह्मणाश्शुचयस्तथा ॥ १३० ॥

देवस्याग्रे तु गच्छेयुः सर्वालङ्कारसंयुताः ।
तेषामपरभागे तु यानाधिष्ठितकेशवम् ॥ १३१ ॥

सर्वालङ्कारसंयुक्तं सर्वाभरणभूषितम् ।
रक्तैः पीतैस्सितैश्चैव निबद्धैः कनकाम्बरैः ॥ १३२ ॥

हेमदण्डसमायुक्तैश्चामरैर्व्यजनैस्तथा ।
दासीभिर्विष्णुभक्तैर्वा पार्श्वयोर्वीजयेत्क्रमात् ॥ १३३ ॥

यानवहनम् षोडशैरष्टभिश्चैव चतुर्भिर्वा यथोचितम् ।
विप्राद्यैर्वाहनीयस्स्यात् देवदेवो हरिः प्रभुः ॥ १३४ ॥

शुद्धास्स्नाताः समागत्य सवर्णा ब्राह्मणादयः ।
यानं स्कन्धे निवेश्यैव प्रचरेयुश्शनैश्शनैः ॥ १३५ ॥

गजवाहनविशेषः आरोहणे गजेन्द्रस्य देवदेवं विशेषतः ।
वस्त्राभरणपुष्पाद्यैरलङ्कृत्य यथार्हकम् ॥ १३६ ॥

देवेशं पूर्वमारोप्य पृष्ठपार्श्वे गजस्य तु ।
आदायाङ्कुशमाचार्यो गजपृष्ठे निषीदति ॥ १३७ ॥

अर्चकश्छत्रमादाय मुक्तालङ्कारभूषितम् ।
देवस्यापरभागे तु भृगुवत्स निषीदति ॥ १३८ ॥

गरुडादिषु यानेषु शिबिकासु तथैव च ।
आसीनः पूर्वभागे तु दक्षिणे देशिकोत्तमः ॥ १३९ ॥

देवेशं मनसा ध्यायन् वैष्णवं मन्त्रमुच्चरन् ।
आसीतैवान्यथा कुर्यात्तत्सर्व निष्फलं भवेत् ॥ १४० ॥

वेदाध्ययनमन्यच्च मङ्गलस्तुतिपाठनम् ।
देवस्यापरभागे तु विशेषेण समाचरेत् ॥ १४१ ॥

ब्राह्मणा विष्णुभक्ताश्च होत्रध्वर्युपुरस्सराः ।
देवेशमनुगच्छेयुर्वेदाध्ययनातत्पराः ॥ १४२ ॥

एषामपरभागे तु देवस्य तु विशेषतः ।
गजपृष्ठे समारोप्य दुन्दुभिं झल्लरीं तथा ॥ १४३ ॥

घोषयित्वाऽनुगच्छेयुर्वैदकाः दृढवादनाः ।
एवं प्रदक्षिणं कृत्वा प्रथमावरणादिषु ॥ १४४ ॥

बहिरावरणे वाऽथ ग्रामं कुर्यात्प्रदक्षिणम् ।
(सन्धिषु विशेषाराधनम्) सन्धौ सन्धौ तु देवेशं पाद्याद्यैरष्टविग्रहैः ॥ १४५ ॥

निवेदयेत्समभ्यर्च्य मुखवासं समन्त्रकम् ।
(उपहारसमर्पणम्) तदा वस्तून्यपक्कानि ब्राह्मणैराहृतान्यपि ॥ १४६ ॥

दद्याद्भक्ष्याण्यपक्कानि पक्कं विप्राहृतं तथा ।
शुद्धेन वारिणा प्रोक्ष्य अमन्त्रञ्च निवेदयेत् ॥ १४७ ॥

उत्सवे दूरमध्वानं देवेशे प्रापिते सति ।
(दूरगमने विशेषः) [1]द्विक्रोशे वापि त्रिक्रोशे ग्रामान्तरगतेऽथवा ॥ १४८ ॥

---

1, एकद्वित्रिचतुः क्रोशे आ.

अपरेद्युः प्रकर्तव्या होमबल्यर्चनाक्रियाः ।
पूर्वेद्युरेव कृत्वा ताः गच्छेदिति च केचन ॥ १४९ ॥

वादकान् नर्तकादींश्च गन्धर्वान् भावयेत्सदा ।
जयाद्यप्सरसश्चैव भावयेत् देवयोषितः ॥ १५० ॥

स्त्रियौ चामरधारिण्यौ मायां संह्लादिनीं स्मरेत् ।
किष्किन्धसुन्दरौ वाऽथ पुरुषौ यदि तौ स्मरेत् ॥ १५१ ॥

स्मरेद्गरुडवत्सर्वान् रथयन्त्रादिवाहकान् ।
प्रत्यागमने पूजाविशेषः एवं प्रदक्षिणं कृत्वा पुनरन्तः प्रविश्य च ॥ १५२ ॥

आस्थाने देवमास्थाप्य विष्टरे सोत्तरच्छदे ।
पाद्यमाचमनं दत्वा नीराजनमतश्चरेत् ॥ १५३ ॥

नीराजनप्रकारः जलेन सहितं पात्रं शाल्यन्नं पुष्पसंयुतम् ।
आचार्यश्चाग्रतः स्थित्वा देवदेवस्य मूर्धतः ॥ १५४ ॥

पादान्तं भ्रामयेत्पात्रं शनकैः त्रिः प्रदक्षिणम् ।
हरिद्रासहितं तोयं शाल्यन्नं पुष्पसंयुतम् ॥ १५५ ॥

कांस्यपात्रे समापूर्य दासीभिर्भ्रामयेत्तथा ।
आचूडात्पादपर्यन्तं भ्रामयेदिति चाङ्गिराः ॥ १५६ ॥

द्वारबाह्ये विसृज्यैव रक्षां कृत्वा ललाटके ।
आस्थाने देवमास्थाप्य विष्टरे सोत्तरच्छदे ॥ १५७ ॥

पाद्यमाचमनं दत्वा नारिकेलफलाम्बु च ।
अपूपसक्तुलाजादिभक्ष्याणि विविधानि च ॥ १५८ ॥

निवेद्याष्टाक्षरेणैव मुखवासं निवेदयेत् ।
स्तुतिपाठः नीराजनक्रियान्ते तु देवस्य जयशंसिभिः ॥ १५९ ॥

नानाभाषाप्रबन्धैश्च स्तुतिं स्तोत्रैः प्रकल्पयेत् ।
(दर्शयेद्देवदासीभिर्मार्गनृत्तं ततः क्रमात्) ॥ १६० ॥

शुद्धस्नानोक्तमार्गेण स्नापयित्वा ततः परम् ।
समभ्यर्च्य निवेद्यैव जीवस्थाने निवेशयेत् ॥ १६१ ॥

अत्र केचित्प्रशंसन्ति 'क्षमस्वेति नमे'दिति ।
देवस्य दक्षिणे वाऽपि प्रमुखे वा महासने (?) ॥ १६२ ॥

मन्दिरं सुन्दरं कृत्वा दृढबद्धकवाटकम् ।
अन्तर्गृहस्य परितः दर्पणादि निवेश्य च ॥ १६३ ॥

तन्मध्ये देवदेवेशं प्रतिष्ठाप्य समर्चयेत् ।
अत्रानुक्तानि सर्वाणि खिलोक्तविधिना चरेत् ॥ १६४ ॥

एवमेवोत्सवः प्रोक्तः दिनयोः प्रथमान्त्ययोः ।
द्विकालमेककालं वा दिनेष्वन्येषु चोत्सवम् ॥ १६५ ॥

विषूपरागादिषु तीर्थे प्राप्ते

विषूपरागायनेषु तीर्थं रात्रौ भवेद्यदि ।
तथा सायोत्सवञ्चापि कुर्यात्तीर्थदिने पुनः ॥ १६६ ॥

द्वितीयाहप्रभृत्येव द्विकालोत्सवमाचरेत् ।
प्रातस्सन्ध्यां समारभ्य मध्याह्नात्तु समाप्यते ॥ १६७ ॥

उत्सवस्य कालावधिः

प्रातरुत्सव एषः स्यात् सायंकालार्चनात्परम् ।
सायमुत्सव आरब्धः यामादर्वाक्समाप्यते ॥ १६८ ॥

आसायं कर्मणः प्रातराप्रातस्सायमेव वा ।
उत्सवस्सर्वकालेषु देवीसहितमुत्तमः ॥ १६९ ॥

मध्यमः प्रातरेव स्यादधमः पञ्चमेऽहनि ।
एककालोत्सवश्चेत्तु मध्याह्ने बलिहोमकौ ॥ १७० ॥

सायाह्ने चोत्सवं कुर्यादिति सङ्गिरतेऽङ्गिराः ।
तीर्थाहात्पूर्वदिवसे समाप्ते प्रातरुत्सवे ॥ १७१ ॥

मृगयोत्सवः [1]मृगयार्थमलङ्कृत्य देवदेवं विशेषतः ।
[2]अजवानरशार्दूलगजाश्वानुगतं नयेत् ॥ १७२ ॥

[3]नानाप्रहरणोपेतैरन्वितं परिचारकैः ।
कण्ठीरवसमारूढे देव्यावप्यानयेद्बुधः ॥ १७३ ॥

ग्रामं प्रदक्षिणीकृत्य बहिश्चापि मनोरमे ।
उत्सवं कारयेच्छीघ्रं चक्रवीशामितैर्विना ॥ १७४ ॥

नानाविधोपकार्यासु विनोदश्चापि कारयेत् ।
अवतारेषु वा चैतल्लौकिकेष्विति केचन ॥ १७५ ॥

वापीतीरोपकार्यासु चारामरचितासु च ।
पूजाकर्मानुरोधेन कुर्यादन्यदिनेष्वपि ॥ १७६ ॥

शयनाधिवासः अथ तीर्थदिनात्पूर्वं रात्रौ देवं विशेषतः ।
समभ्यर्च्य निवेद्यैव बद्ध्वा प्रतिसरामपि ॥ १७७ ॥

प्रतिष्ठोक्तक्रमेणैव सार्धं चक्रेण शाययेत् ।
हवींषि च विना प्रातरर्चयित्वाऽष्टविग्रहैः ॥ १७८ ॥

होमं हुत्वा बलिं दत्वा प्रातरुत्सवमाचरेत् ।
चूर्णोत्सवः आस्थानमण्डपे देवं संस्थाप्य प्राङ्मुखं क्रमात् ॥ १७९ ॥

देवाग्रे स्थापयेच्चक्रं धान्यपीठे बहिर्मुखम् ।
तस्यैवोत्तरतः पार्श्वे विष्वक्सेनं समाहितः ॥ १८० ॥

चक्राग्रे धान्यपीठे तु हरिद्राश्चापि विन्यसेत् ।
संस्कृत्यैव तथा चूर्णमभिषिच्य च पूर्ववत् ॥ १८१ ॥

चक्रशान्तौ च संस्नाप्य अभिषिच्य च पूर्ववत् ।
ग्रामं प्रदक्षिणीकृत्य तीर्थस्थानं प्रविश्य च ॥ १८२ ॥

---

1. मृगयार्हं आ. 2. कृष्णसाराजशार्दूल आ. 3. राजोचितायुधोपेतैः आ.

तीर्थस्नानप्रकारः

तस्य तीरे प्रतिष्ठाप्य देवं चक्रञ्च पूर्ववत् ।
कलशान् पञ्च संस्थाप्य देवस्याग्रे यथाविधि ॥ १८३ ॥

मृत्कुशैर्गन्धपुष्पाद्भिरक्षतैश्च प्रपूरितान् ।
क्रमान्मध्यादि सौम्यान्तं निधायाभ्यर्च्य देवताः ॥ १८४ ॥

भूमिं चतूँश्च धातारं काश्यपञ्च प्रजापतिम् ।
स्नापनोक्तैश्च मन्त्रैश्च प्रोक्ष्य देवेशमत्वरः ॥ १८५ ॥

शिष्टाभिः कलशाद्भिस्तु चक्रञ्चैवाऽभिषिच्य च ।
ततो देवञ्च चक्रञ्च तीर्थस्यान्तर्निमज्जयेत् ॥ १८६ ॥

पुनस्तीरे प्रतिष्ठाप्य विष्टरे सोत्तरच्छदे ।
कुर्यादवभृथस्नानं शुद्धस्नानोक्तमार्गतः ॥ १८७ ॥

यजमानो गुरुश्चैव ऋत्विजः परिचारकाः ।
स्नात्वाऽत्र सह देवेन श्वेतवस्त्रोत्तरीयकाः ॥ १८८ ॥

ग्रामोत्सवः

देवदेवमलङ्कृत्य यानमारोप्य पूर्ववत् ।
शुक्लमाल्यानुलेपाद्यैः स्वर्णसूत्राङ्गुलीयकैः ॥ १८९ ॥

अलङ्कृतेन गुरुणा ऋत्विग्भिश्च तथाविधैः ।
शाकुनं सूक्तमुच्चार्य स्वस्तिसूक्तसमन्वितम् ॥ १९० ॥

तोयधारासमायुक्तं नेयात् ग्रामं प्रदक्षिणम् ।
तत्काले यजमानोऽपि प्रत्युत्थानं समाचरेत् ॥ १९१ ॥

अलङ्कृत्याऽलयद्वारं पूर्णकुम्भाङ्कुरादिभिः ।
दीपैश्च बहुभिस्तत्र देवदेवे समागते ॥ १९२ ॥

तोयधारासमायुक्तं दीपैश्च बहुभिर्युतम् ।
स्त्रीभिस्सुमङ्गलाभिश्च कारयित्वा प्रदक्षिणम् ॥ १९३ ॥

पञ्च चित्रान्नपिण्डानि नीत्वा देवस्य मूर्धनि ।
प्रदक्षिणं दिगीशानां नामभिः प्रणवादिभिः ॥ १९४ ॥

नमोऽन्तैश्च चतुर्थ्यन्तैर्मध्ये च विसृजेत्क्रमात् ।
ततः पुष्पाञ्जलिं दत्वा प्रविश्याऽभ्यन्तरं पुनः ॥ १९५ ॥

उत्सवान्तस्नपनम्
स्नपनोक्तक्रमेणैव स्नपनं सम्यगाचरेत् ।
हविर्दानम्
महाहविः प्रभूतं वा समभ्यर्च्य निवेदयेत् ॥ १९६ ॥

जीवस्थाने प्रवेशः
जीवस्थाने प्रतिष्ठाप्य प्रणमेद्दण्डवद्भुवि ।
कुम्भावाहनम्
यागशालां समागत्य हुत्वाऽग्निषु सवैष्णवम् ॥ १९७ ॥

तत्कुम्भगतां शक्तिं ध्रुवे सम्यङ्निवेश्य च ।
नित्यकुण्डे प्रणीयाग्निमुपतिष्ठेत भास्करम् ॥ १९८ ॥

नित्यकुण्डेऽप्यशक्तोऽपि पूर्वोक्तक्रममाचरेत् ।
नवमे चोत्सवे चैव चतुर्दशदिने तथा ॥ १९९ ॥

एकविंशोत्सवे चैव रात्रिपूजावसानके ।
देवतोद्वासनप्रकारः
रात्रौ ग्रामबलिं दत्वा चक्रवीशामितैर्विना ॥ २०० ॥

उद्वास्य देवतास्सर्वा ध्वजमागत्य वै पुनः ।
ध्वजदेवं समभ्यर्च्य मुद्गान्नं विनिवेद्य च ॥ २०१ ॥

ध्वजदेवं विसृज्यैव ध्वजं तमवरोपयेत् ।
दशमे दिवसे चैव दिने पञ्चदशे तथा ॥ २०२ ॥

पुष्पयागः
उत्तमकल्पः
द्वाविंशदिवसे चैव पुष्पयागं समाचरेत् ।
औत्सवप्रतिमाभावे कौतुके क्रियते यदि ॥ २०३ ॥

तत्रैव तीर्थदिवसे प्रातस्सन्ध्यावसानके ।
सम्यक्प्रतिसरं बद्ध्वा प्रातरुत्सवमाचरेत् ॥ २०४ ॥

द्वितीयदिवसे तीर्थात् पुष्पयागं समाचरेत् ।
पुष्पयोगोत्सवः
त्रिविधः
शान्तिकः पौष्टिकः काम्यः इति स त्रिविधो भवेत् ॥ २०५ ॥

तल्लक्षणम्
प्रातर्मध्यापराह्णेषु क्रमादेनं प्रकल्पयेत् ।
उत्तमकल्पः
प्रातरर्चावसाने तु अलङ्कृत्य यथार्हकम् ॥ २०६ ॥

आस्थानमण्डपे देवं समानीयोदयात्परम् ।
शुद्धस्नानोक्तमार्गेण स्नापयित्वा जनार्दनम् ॥ २०७ ॥

नववस्त्रोत्तरीयाद्यैरलङ्कृत्य विभूषणैः ।
महाहविः प्रभूतं वा समभ्यर्च्य निवेदयेत् ॥ २०८ ॥

आस्थानमण्डपे वाऽपि स्नपनालय एव वा ।
चतुर्दिशं चतुर्हस्तं गोमयेनोपलिप्य च ॥ २०९ ॥

उपपीठपदं कृत्वा षट्सूत्रैः प्रागुदग्गतैः ।
मध्ये नवपदं पद्मं साष्टपत्रं सकर्णिकम् ॥ २१० ॥

रत्नन्यासोक्तधान्यैर्वा तण्डुलैर्व्रीहिभिस्तु वा ।
बहिःष्ठेषु पदेष्वग्रे वीशमेकत्र पूजयेत् ॥ २११ ॥

दक्षिणे चक्रमभ्यर्च्य पङ्क्तीशं पश्चिमे तथा ।
उदीच्यां शान्तमभ्यर्च्य शेषेष्वर्कपदेषु च ॥ २१२ ॥

आसनाद्यर्चनद्रव्यसञ्चयञ्च सुसन्न्यसेत् ।
दलेष्वष्टसु पद्मस्य लोकपालान्त्समर्चयेत् ॥ २१३ ॥

कर्णिकायां रवीन्द्वग्निमण्डलानि क्रमाद्यजेत् ।
विष्टरं तत्र संस्थाप्य पादान्तर्गतपङ्कजे ॥ २१४ ॥

तत्र देवं प्रतिष्ठाप्य यावद्दिवसमुत्सवः ।
तावत्कृत्वस्समभ्यर्च्य सप्तविंशतिविग्रहैः ॥ २१५ ॥

नृत्तैर्गेयैश्च वाद्यैश्च चतुर्वेदस्तवैरपि ।
तत्तत्पूजावसाने तु पृथक् पुष्पाञ्जलिं ददेत् ॥ २१६ ॥

पङ्कजं तुलसीं बिल्वं करवीरमथोत्पलम् ।
नन्द्यावर्तञ्च कुमुदमपामार्गं तथैव च ॥ २१७ ॥

विष्णुक्रान्तं च दूर्वाग्रं [1]एतान्येव क्रमात्पुनः ।
पुष्पाञ्जलिप्रदानार्थं पुष्पाण्युक्तानि पूजने ॥ २१८ ॥

पुष्पाञ्जलिदान-प्रकारः

वैष्णवं विष्णुसूक्तञ्च सूक्तं पौरुषमेव च ।
('नारायणाय वि'द्मेति 'नमो ब्रह्मण' इत्यपि ॥ २१९ ॥

नारायणानुवाकञ्च सूक्तमेकाक्षरादिकम् ।
'नारायणाय वि'द्मेति 'नमो ब्रह्मण' इत्यपि) ॥ २२० ॥

पारमात्मिकसूक्तानि 'ऋतं सत्य' मिति ब्रुवन् ।
द्वादशाष्टाक्षराभ्याञ्च तैरेव च पुनः पुनः ॥ २२१ ॥

एवं पुष्पाञ्जलिं दद्यादाचार्यो मध्यतः स्थितः ।
चतुर्दिक्षु क्रमेणैव स्थित्वा चत्वार ऋत्विजः ॥ २२२ ॥

तत्तन्मन्त्रावसाने तु मूर्तिभिः पुरुषादिभिः ।
पुष्पाञ्जलिं क्रमाद्दद्युः देवध्यानपरायणाः ॥ २२३ ॥

होमप्रकारः

पञ्चाग्नीन्परितः कृत्वा सभ्ये हौत्रं प्रशंस्य च ।
तदालयगतान्देवानावाह्याऽज्यं निरूप्य च ॥ २२४ ॥

तत्क्रमेणाहुतीर्हुत्वा विष्णुसूक्तञ्च वैष्णवम् ।
सभ्ये हुत्वा विशेषेण ततश्चाहवनीयके ॥ २२५ ॥

जुहुयात्पौरुषं सूक्तं विष्णुसूक्तञ्च दक्षिणे ।
जुहुयाद्गार्हपत्याग्नौ गायत्रीं वैष्णवीं दश ॥ २२६ ॥

आवसथ्ये तु जुहुयात्सूक्तमेकाक्षरादिकम् ।
आज्येन समिधा तत्तद्धविर्भेदैश्च हूयताम् ॥ २२७ ॥

पुष्पयागः मध्यमकल्पः

एतदुत्तममुद्दिष्टं मध्यमन्तु प्रवक्ष्यते ।
तत्तद्दिनार्चनान्ते तु शुद्धान्नं वा निवेद्य च ॥ २२८ ॥

---

1. 'वकुलं चम्पकं तथा । मन्दारं चैव पुन्नागं मल्लिका माधवी ततः । पाटली केतकी चैव दमनं मरुजातिकम् । सुवर्णगन्धपुष्पाणि चान्यान्येवं विधानि च । पुष्पाञ्जलिप्रदानार्थं' इति पाठः अधिकं आ. कोशेषु

पुष्पाञ्जलिप्रदानानि सर्वाण्यन्यार्चने ददेत् ।
सभ्य एकाग्निरेव स्यादन्यत्सर्वञ्च पूर्ववत् ॥ २२९ ॥

पुष्पयागः तृतीयकल्पः

इत्येवं मध्यमं प्रोक्तं प्रवक्ष्याम्यधमं पुनः ।
विना वीशादिभिर्देवैर्होमैस्तत्पृथगर्चनैः ॥ २३० ॥

मण्डले देवमारोप्य पूजयित्वा यथाविधि ।
हवींषि पञ्च चोक्तानि निवेद्य च ततः परम् ॥ २३१ ॥

दद्यात्पुष्पाञ्जलिं मन्त्रैः समस्तदिवसोचितैः ।
उत्सवेऽज्ञातदोषाणां प्रायश्चित्तमिदं स्मृतम् ॥ २३२ ॥

(अतः सर्वप्रयत्नेन पुष्पयागं समाचरेत् ।
देवदेवं शनैर्नीत्वा प्रदक्षिणमथाऽलयम् ।

जीवस्थाने प्रतिष्ठाप्य दत्वा पुष्पाञ्जलिं बहु ।
संस्तूय च स्तवैर्मन्त्रैः 'क्षम' स्वेति प्रणम्य च ।

दद्यादाचार्यपूर्वेभ्यो दक्षिणां देवसन्निधौ ।
रात्रौ ग्रामबलिं दत्वा चक्रवीशामितैर्विना ।

उद्वास्य देवतास्सर्वाः ध्वजमासाद्य वै पुनः ।
ध्वजदेवं समभ्यर्च्य मुद्गान्नं सन्निवेद्य च ॥

ध्वजदेवं विसृज्यैव ध्वजं तमवरोपयेत् ।
एवमेवोत्सवः प्रोक्तो देवदेवस्य शार्ङ्गिणः) ॥

उत्सवफलश्रुतिः

एवं यः कुरुते भक्त्या सर्वान्कामानवाप्नुयात् ।
इह लोके सुखं भुक्त्वा विष्णोस्सायुज्यमाप्नुयात् ॥ २३३ ॥

आलयार्चाविधिस्सोऽयं सङ्क्षेपादुदितो मया ।
अत्रानुक्तं च यत्सर्वं खिलोक्तविधिना चरेत् ॥ २३४ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
उत्सवविधिर्नाम चतुर्दशोऽध्यायः ।

# पञ्चदशोऽध्यायः[1]



गृहार्चाप्रतिष्ठा
विष्णुप्रतिष्ठा

अथार्चनं गृहे विष्णोः प्रवक्ष्यामि तपोधनाः ।
स्थापनञ्च प्रवक्ष्यामि विष्णोस्सम्यग्यथाविधि ॥ १ ॥

षडङ्गुलादहीनन्तु तद्रूपं हाटकादिभिः ।
कारयित्वा यथामार्गं प्रतिष्ठामारभेत्पुनः ॥ २ ॥

पूर्वोक्तगुणसम्पन्ने काले चापि शुभोज्ज्वले ।
औपासनाग्निमाधाय वास्तुहोमावसानके ॥ ३ ॥

अक्ष्युन्मेषोक्तहोमान्ते कृत्वा चैवाक्षिमोचनम् ।
दर्शयित्वा गवादीनि जलादिष्वधिवास्य च ॥ ४ ॥

ध्रुवबेरोदितां शुद्धिं चित्राभासे च कारयेत् ।
पूर्वेद्युरेव तस्मात्तु सायं सन्ध्यामुपास्य च ॥ ५ ॥

औपासनाग्निमाधाय हुत्वा तत्र च वैष्णवम् ।
संसाध्य पूर्ववत्कुम्भं देवमावाह्य तत्र वै ॥ ६ ॥

अधिवासगतं देवमुद्धृत्य प्रणवेन तु ।
स्नानश्वभ्रे प्रतिष्ठाप्य स्वस्तिसूक्तं समुच्चरन् ॥ ७ ॥

तस्यैव दक्षिणे भागे धान्यपीठे सुसन्न्यसेत् ।
संस्नाप्य सप्तकलशैः सोपस्नानैश्च पूर्ववत् ॥ ८ ॥

चित्राभासं प्रतिष्ठाप्य प्रोक्षयेत्कलशाम्भसा ।
ततोऽग्नेरुत्तरस्यान्तु धान्यपीठे निवेश्य च ॥ ९ ॥

पुण्याहं वाचयित्वा तु बध्वा प्रतिसरं तथा ।
तथैव शाययेद्देवं पञ्चवस्त्रसमास्तृते ॥ १० ॥

---

1. अयमध्यायः ख मातृकायां नोपलभ्यते ।

हौत्रं प्रशंस्य तत्काले दक्षिणप्रणिधौ जले ।
ओं भूः पुरुष मित्युक्त्वा ओं भुवः पुरुषं तथा ॥ ११ ॥

ओं सुवः पुरुषं चेति भूर्भुवस्सुवरित्यपि ।
नारायणं तथा विष्णुं पुरुषं सत्यमच्युतम् ॥ १२ ॥

अनिरुद्धं समावाह्य श्रियञ्चेति महीमिति ।
निरुप्याज्याहुतीर्हुत्वा सूक्ते वैष्णवपौरुषे ॥ १३ ॥

अतो देवादिमन्त्रांश्च चतुरावर्त्य वै यजेत् ।
श्रीभूमिसहिते तत्तत् सूक्तमन्त्रांस्तथा यजेत् ॥ १४ ॥

मूर्तिमन्त्रैश्च हुत्वाऽन्ते विष्णुगायत्रिया पुनः ।
अष्टोत्तरशतं पद्मं देवं ध्यायन् जुहोति वै ॥ १५ ॥

( प्रादुर्भावविकल्पानां तत्तन्मन्त्रैश्च मूर्तिभिः ।
पूर्वोक्तमूर्तिभिस्सार्धं होमकर्म समाचरेत् ॥ १६ ॥

होमकर्म समाप्यैव प्रातस्स्नात्वा यथाविधि ।
जप्त्वा जप्यानि सूक्तानि मुहूर्ते तु शुभोज्ज्वले ॥ १७ ॥

गृहे वायव्यभागे तु पीठे रत्नादिसंयुते ।
प्रतिष्ठाप्य समावाह्य नित्यं विधिवदर्चयेत् ॥ १८ ॥

सूर्यकल्पः

यदीच्छेद्भास्करस्यापि गृहे नित्यं समर्चयेत् ।
[1]भास्करञ्च महादेवं कदम्बकुसुमप्रभम् ॥ १९ ॥

नवार्धतालमानेन द्विभुजं पद्मधारिणम् ।
देवीभ्याञ्च समायुक्तं राशिभिः परिवारितम् ॥ २० ॥

( स्वस्वपीठे प्रतिष्ठाप्य स्वस्वदेवीसमायुतम् ) ।
एवं कृत्वा यथान्यायं अक्ष्युन्मेषादनन्तरम् ।
अधिवासादिकं कर्म हरेरिव समाचरेत् ॥ २१ ॥

---

1, मण्डलान्तर्गतं देवं कौस्तुभं कुसुमप्रभं. ई.

'उदुत्यं चित्र' मित्येवं [1]मूलमन्त्रं प्रचक्षते ।
औपासनाग्निमाधाय कुण्डे वा स्थण्डिलेऽथवा ॥ २२ ॥

संसाध्य पूर्ववत्कुम्भं रक्तवस्त्रद्वयान्वितम् ।
आचार्यस्सुप्रसन्नात्मा त्रयीमयमनामयम् ॥ २३ ॥

विश्वबोधात्मकं भानुं ध्यायन्नावाहयेज्जले ।
संस्नाप्य सप्तकलशैः बिम्बं कुम्भसमन्वितम् ॥ २४ ॥

अग्नेरुत्तरपार्श्वे तु धान्यराशिं प्रकल्प्य च ।
सन्न्यस्य [2]बिल्वफलकं वस्त्राण्यास्तीर्य पञ्च च ॥ २५ ॥

तद्बेरं तत्र विन्यस्य बद्ध्वा प्रतिसरं ततः ।
विधिना शयने धीमान् शाययेद्रक्तवाससा (?) ॥ २६ ॥

होत्रं प्रशंस्य चाऽवाह्य निरुप्याज्याहुतीर्यजेत् ।
हुत्वा तु सूर्यगायत्र्या भावयन्मनसा रविम् ॥ २७ ॥

'भास्कराय' च 'सूर्याय मार्ताण्डाय विवस्वते' ।
'त्रिलोकमण्डना'येति तथा [3]चैव 'त्रिमूर्तये' ॥ २८॥

'सर्वात्मने नम' श्चेति जुहुया 'च्चण्डरोचिषे' ।
'त्रिगुणेश्वराय' पश्चाद्वै 'सर्वज्योतिष्मते' तथा ॥ २९ ॥

सहस्रं वा शतं वाऽथ दशकृत्वोऽथवा यजेत् ।
मैत्रमन्त्रद्वयं हुत्वा 'उद्वयं तमस' स्तथा ॥ ३० ॥

'उदुत्यं जातवे' देति 'चित्रं दे' वेति हूयताम् ।
'यच्चिद्धी' ति ततो हुत्वा ('यत्किञ्चे' ति ततः परम् ॥

'कितवा' सेति हुत्वा तु 'इमम्मे वरु' णेत्यपि ।
अर्कापामार्गपालाशसमिद्भिश्चैव हूयताम् ॥

---

1. आरयेत्सकलं रवेः । ई. 2. निम्बफलकं आ. 3. ज्योतिस्त्रिमूर्तये आ.

वैष्णवं पौरुषं सूक्तं लोकपालकदैवतम् ।
मिन्द्राहुती ततो हुत्वा ) होमकर्म समाचरेत् ॥ ३१ ॥

शतमष्टोत्तरं नाम्ना देव्योस्तत्र जुहोति वै ।
प्रातः स्नात्वा विधानेन रत्नादीन्तसन्न्यसेत्क्रमात् ॥ ३२ ॥

पश्चिमाभिमुखं देवं स्थापयेत्प्राङ्मुखं तु वा ।
न स्थाप्यो भास्करः क्वापि दक्षिणोत्तरदिङ्मुखः ॥ ३३ ॥

कुम्भस्थां शक्तिमादाय बिम्बे चाऽऽवाहयेद्गुरुः ।
अनुक्तमत्र यत्सर्वं हरेरिव समाचरेत् ॥ ३४ ॥

'उदुत्यं चित्र' मित्युक्त्वा प्रणम्य ज्योतिषां पतिम् ।
समन्त्राभ्युक्षणं कृत्वा निर्माल्यं संव्यपोह्य च ॥ ३५ ॥

स्वागतञ्चानुमानञ्च 'त्वमग्ने रुद्र' इत्यपि ।
'उद्वयं तमस' श्चेति पाद्यं दद्यात्ततः परम् ॥ ३६ ॥

दद्यादाचमनं हस्ते 'हिरण्यवर्णा' इति ब्रुवन् ।
'पवित्रं त' इति प्रोच्य मूर्ध्नि पुष्पं विनिक्षिपेत् ॥ ३७ ॥

'इमे गन्धा' दिना गन्धं धूपमन्त्रेण धूपयेत् ।
'प्रवश्शुक्रे' ति दीपं तु अर्घ्यं दद्यात्समन्त्रकम् ॥ ३८ ॥

दद्यादन्योपचारांस्तु 'उदुत्यं चित्र' मित्यपि ।
गुरूपदेशसंसिद्धैः कल्पमन्त्रैरथापि वा ॥ ३९ ॥

आसनाद्युपचारैस्तु पूजयेदिति केचन ।
[1]सावित्र्या वाऽर्चयेन्नित्यमिति पूर्वजशासनम् ॥ ४० ॥

एष एवविशेषस्स्यादन्यत्सर्वं हरेरिव ।
सुवर्चलामुषां चेति श्यामलां सुप्रभामिति ॥ ४१ ॥

1. चित्राभासेऽर्चयेन्नित्यम् । अ.

अर्चयेद्दक्षिणे देवीं रेणुकां रक्तवर्णिनीम् ।
प्रत्यूषां श्वेतवस्त्रां तामिति वामे समर्चयेत् ॥ ४२ ॥

गुहार्चनम्

नित्यपूजां गुहस्येच्छन् बिम्बं कृत्वा यथाविधि ।
स्कन्ददैवत्यमन्त्रैश्च नयनोन्मीलनादिकम् ॥ ४३ ॥

कृत्वा तु कौतुकं बद्ध्वा शतमष्टोत्तरं यजेत् ।
तन्मन्त्रेण समावाह्य नित्यं विधिवदर्चयेत् ॥ ४४ ॥

अत्रानुक्तानि सर्वाणि खिलोक्तविधिना चरेत् ।
एवं यः कुरुते भक्त्या तस्य पुत्रास्तु नीरुजः ॥ ४५ ॥

आयुष्मन्तः श्रिया युक्ताः वर्धन्ते नात्र संशयः ।
इह भुक्त्वा महाभोगान् सोऽन्ते स्वर्गमवाप्नुयात् ॥ ४६ ॥

विनायकार्चनम्

वक्रतुण्डस्य वक्ष्यामि नित्यं वै सम्यगर्चनम् ।
'धर्मौघमा' दि मन्त्राभ्यां नयनोन्मीलनादिकम् ॥ ४७ ॥

अष्टोत्तरशतं ताभ्यां हुत्वाऽऽवाह्य यथाविधि ।
ताभ्यामेव तु मन्त्राभ्यां नित्यं विधिवदर्चयेत् ॥ ४८ ॥

एवं यः कुरुते भक्त्या निर्विघ्नं तस्य कर्म वै ।
सर्वं सम्पद्यते शीघ्रं लक्ष्मी च विपुला भवेत् ॥ ४९ ॥

श्रीदेव्यर्चनम्

अतः परं प्रवक्ष्यामि गृहे नित्यार्चनं श्रियः ।
पद्मकिञ्जल्कसदृशां सर्वाभरणभूषिताम् ॥ ५० ॥

पद्मासने समासीनां सपद्मोर्ध्वभुजद्वयाम् ।
सव्येन पूर्वहस्तेन भक्तानामभयप्रदाम् ॥ ५१ ॥

वामेन पूर्वहस्तेन दधतीं विपुलं धनम् ।
एवं कृत्वा श्रियं देवीं 'श्रिये जात' इति ब्रुवन् ॥ ५२ ॥

'श्री सा नियच्छ' तीत्युक्त्वा 'भूयाम' इति च क्रमात् ।
नयनोन्मीलनं कृत्वा जलादिष्वधिवास्य च ॥ ५३ ॥

कुम्भं संसाध्य संस्नाप्य बद्ध्वा प्रतिसरं तथा ।
शाययित्वा समावाह्य हौत्रकर्मावसानके ॥ ५४ ॥

पौण्डरीके तु होतव्यं 'श्रिये जा' तेति मन्त्रतः ।
'श्रीं सा नियच्छ'तीत्युक्त्वा 'भूयाम' इति च क्रमात् ॥ ५५ ॥

शतमष्टोत्तरं हुत्वा श्रीसूक्तेन सकृद्यजेत् ।
श्रियश्शताष्टकैर्मन्त्रैर्दशकृत्वस्ततः परम् ॥ ५६ ॥

मधुसर्पिस्समायुक्तं पृषदाज्यसमन्वितम् ।
पुष्कलामाहुतिं हुत्वा बिल्वपत्रैर्घृताप्लुतैः ॥ ५७ ॥

'श्रिये जा'ते ति मन्त्रेण शतमष्टोत्तरं यजेत् ।
प्रातस्स्नात्वा प्रतिष्ठाप्य समावाह्य समर्चयेत् ॥ ५८ ॥

तत्सूक्तेनैव तन्मन्त्रैः पूजयेत्सर्वविग्रहैः ।
अत्रानुक्तानि सर्वाणि खिलोक्तविधिना चरेत् ॥ ५९ ॥

अचलां श्रियमाप्नोति जन्मजन्मान्तरेऽपि च ।
तद्वंशजाश्च श्रीमन्तो भविष्यन्ति न संशयः ॥ ६० ॥

दुर्गार्चनम्

अथ वक्ष्यामि दुर्गायाः प्रतिष्ठामर्चनं गृहे ।
साक्षात्सा वैष्णवी माया तस्मात्तां नित्यमर्चयेत् ॥ ६१ ॥

नवार्धतालमानेन कृत्वा देवीं चतुर्भुजाम् ।
शङ्खचक्रधराञ्चैव किरीटमकुटोज्ज्वलाम् ॥ ६२ ॥

पीतवस्त्रधरां देवीं कक्ष्याबद्धघनस्तनीम् ।
सस्यश्यामनिभां सौम्यां हारकौस्तुभभूषिताम् ॥ ६३ ॥

अङ्गहोमञ्च हुत्वा तु दुर्गासूक्तं शताष्टकम् ।
[1] पाञ्चभौतिकमन्त्रेण हुत्वा वैष्णवसंयुतम् ॥ ६४ ॥

---

1. पाञ्चभौतिकमन्त्रेण अर्घ्यं कुर्यात्तमन्त्रकम् । दद्यादन्योपचारांस्तु 'उदुत्यं चित्र'मित्यपि । गुरूपदेशसंसिद्धैः कल्पमन्त्रैरथापिवा । आसनाद्युपचारैस्तु पूजयेदिति केचन । सावित्र्यावा ( भूसावित्र्या ) ऽर्चयेन्नित्यमिति पूर्वजदर्शनम्. इति पाठः आ. कोशेषु ।

कृत्वाऽक्षिमोचनं पश्चाज्जलादिष्वधिवास्य च ।
कुम्भे ध्यात्वा समावाह्य संस्नाप्य कलशैरपि ॥ ६५ ॥

बद्ध्वा प्रतिसरं पश्चात् शाययेच्छयनोपरि ।
हौत्रं प्रशंस्य चाऽवाह्य निरुप्याज्याहुतीर्यजेत् ॥ ६६ ॥

दुर्गासूक्तं ततस्सभ्ये शतमष्टोत्तरं यजेत् ।
वैष्णवं ब्राह्मं रौद्रञ्च भौतिकं पञ्चवारुणम् ॥ ६७ ॥

जयादिभिश्च कूश्माण्डैस्साविञ्या च सहस्रकम् ।
सहस्राहुतिपर्यन्तं पूर्ववज्जुहुयाद्बुधः ॥ ६८ ॥

पालाशीभिस्समिद्भिश्च विष्णुसूक्तेन हूयताम् ।
स्विष्टाकारञ्च हुत्वा तु रात्रिशेषं व्यपोह्य च ॥ ६९ ॥

प्रातस्स्नात्वा प्रतिष्ठाप्य समावाह्य समर्चयेत् ।
' जातवेदस ' इत्यादि तत्सूक्तेनैव पूजयेत् ॥ ७० ॥

एष एव विशेषः स्यादन्यत्सर्वं हरेरिव ।
एवं यः कुरुते भक्त्या दुर्गायाः स्थापनार्चने ॥ ७१ ॥

जित्वा शत्रूंश्चिरं भुक्त्वा भूमौ तु विपुलं [1]सुखम् ।
विष्णुसायुज्यमाप्नोति दशपूर्वैर्दशापरैः ॥ ७२ ॥

सरस्वत्यर्चनम् अतः परं प्रवक्ष्यामि वाग्देव्या अर्चनं गृहे ।
जटामण्डलसंयुक्तां स्वर्णवर्णां चतुर्भुजाम् ॥ ७३ ॥

ऊर्ध्वं दक्षिणहस्तन्तु अक्षमालासमन्वितम् ।
मुद्राहस्तमधस्ताद्वै वरदं वाऽपि कल्पयेत् ॥ ७४ ॥

कमण्डलुसमायुक्तं वामहस्तं तथोर्ध्वगम् ।
ज्ञानमुद्रासमायुक्तां सर्वाभरणभूषिताम् ॥ ७५ ॥

---

1, धनम् आ.

पद्मासने समासीनां पद्मकाञ्चनशोभिनीम् ।
'पावकान' इति स्मृत्वा 'महो अर्ण' इति स्मरन् ॥ ७६ ॥

पूर्वोक्तेनैव मन्त्रेण अक्ष्युन्मेषाधिवासनम् ।
बद्ध्वा प्रतिसरञ्चापि स्नपनं शयनादिकम् ॥ ७७ ॥

हौत्रञ्च सम्प्रशंस्यैव तन्मूर्त्यावाहनं चरेत् ।
निरुप्याज्याहुतीर्हुत्वा शतमष्टोत्तरं यजेत् ॥ ७८ ॥

वैष्णवं विष्णुसूक्तञ्च नरसूक्तं यजेत्क्रमात् ।
ब्राह्ममैन्द्रं तथाऽऽग्नेयं स्विष्टाकारं जुहोति च ॥ ७९ ॥

एष एव विशेषः स्यादन्यत्सर्वं हरेरिव ।
एवं यः कुरुते भक्त्या सर्वविद्यामवाप्नुयात् ॥ ८० ॥

[1]इतरं पुस्तकधरं योजयेच्च ततः परम् ।
ब्रह्मासनन्तु कर्तव्यं पद्मपीठस्य चोपरि ॥

पादं प्रसारितं वाऽपि दक्षिणं तु समाचरेत् ।
सर्वाभरणसंयुक्तां श्वेतवस्त्रविभूषिताम् ॥

शुक्लपुष्पाङ्गरागां तां कक्ष्याबद्धघनस्तनीम् ।
सारस्वतेन सूक्तेन कृत्वाऽक्ष्युन्मेषणादिकम् ॥

शयनं तु तथा कृत्वा हौत्रशंसनमाचरेत् ।
श्वेतपद्मसहस्रञ्च घृताक्तं वै समाहितः ॥

तत्सूक्तमन्त्रैर्जुहुयात्तां देवीं मनसा स्मरन् ।
एतैराज्याहुतीर्वाऽपि यथाशक्ति समाचरेत् ॥

पारमात्मिकमन्त्रैश्च विष्णुसूक्तेन वैष्णवैः ।
प्रातस्स्नात्वा प्रतिष्ठाप्य समावाह्य समर्चयेत् ॥

---

1. इत आरभ्य आध्यायान्तं ई. कोश एव पाठः

तत्सूक्तेनार्चयेन्नित्यमन्यत्सर्वं हरेरिव ।
मेधावित्वं कवित्वञ्च वादित्वं वाग्मितां तथा ॥

यशस्वित्वमिहामुत्र सुखमत्यन्तदुर्लभम् ।
आप्नोति तस्माद्देवी सा ध्येया पूज्या मनीषिभिः ॥

दर्शनीया च कीर्त्या च जगद्व्यापारकारिणी ।
भद्रकालीञ्च शास्तारं क्षेत्रपालं विनेतरान् ॥

यदीच्छेदर्चितुं धाम्नि प्रतिष्ठाप्य यथाविधि ।
औपासनाग्नौ तन्मन्त्रं शतमष्टोत्तरं यजेत् ॥

प्रतिष्ठामर्चनादीनि तन्मन्त्रेणैव कारयेत् ।
गृहे त्रैवर्णिकास्सर्वे देवान् नारायणादिकान् ॥

अनेन विधिना स्थाप्य पूजयेयुर्यथाविधि ।
अथवाऽनेन संस्थाप्य कल्पमन्त्रेण पूजयेत् ॥

तान्त्रिकेणानुलोमस्तु प्रतिष्ठाप्य समर्चयेत् ।
नार्चयेत्प्रतिलोमस्तु तान्त्रिकेणापि जात्वपि ) ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
गृहे विष्ण्वादित्यस्कन्दविनायकलक्ष्मीदुर्गासरस्वतीभद्रकाली-
बिम्बप्रतिष्ठार्चनाकल्पो नाम पञ्चदशोऽध्यायः ॥

# षोडशोऽध्यायः

श्री देव्याः पृथगर्चनम्

अतः परं प्रवक्ष्यामि श्रीदेव्याः पृथगर्चनम् ।
(आलयाद्दक्षिणे वाऽपि प्रथमाऽवरणे तथा ॥

द्वितीयाऽवरणे वाऽपि तृतीयाऽवरणे तथा ।
आलयद्वारदिग्द्वारं विमानं परिकल्प्य च ॥

देवस्य बाहुसीमान्तं कर्णसीमान्तमेव वा ।
स्तनान्तं वा श्रियं देवीं पूर्ववत्परिकल्पयेत्) ।
स्थिते देवे स्थितां देवीमासीनामासने हरेः ॥ १ ॥

आसीनां वा स्थितां वाऽपि शयने परिकल्पयेत् ।
श्रियं देवीं प्रकल्प्यैव सर्वाभरणभूषिताम् ॥ २ ॥

पद्मकिञ्जल्कसदृशां पीतवस्त्रधरां शुभाम् ।
पद्मासने समासीनां सपद्मोर्ध्वभुजद्वयाम् ॥ ३ ॥

सव्येन पूर्वहस्तेन भक्तानामभयप्रदाम् ।
वामेन पूर्वहस्तेन दधतीं विपुलं धनम् ॥ ४ ॥

एवं कृत्वा श्रियं देवीं प्रतिष्ठाप्य समर्चयेत् ।
आलयाभिमुखे कृत्वा यागशालां यथाविधि ॥ ५ ॥

औपासनाग्निकुण्डे द्वे कृत्वा शयनवेदिकाम् ।
'श्रिये जा'तेति मन्त्रेण सर्वं कृत्वा यथाक्रमम् ॥ ६ ॥

[('शं सा नियच्छ' तीत्युक्त्वा 'भूशाम' इति च क्रमात् ।
नयनोन्मीलनं कृत्वा जलादिष्वधिवास्य च) ॥

कुम्भं संसाध्य संस्नाप्य बद्ध्वा प्रतिसरं तथा ।
शाययित्वा समावाह्य दक्षिणप्रणिधौ तथा ॥ ७ ॥

'श्रियं धृतिं पवित्रीं' च 'प्रमोदादायिनी' मिति ।
उत्तरप्रणिधौ वाऽपि भूमिञ्चैव सरस्वतीम् ॥ ८ ॥

रतिं प्रीतिं तथैवात्र कीर्तिं [1]क्षान्तिं तथैव च ।
पुष्टिं तुष्टिं समावाह्य अष्टौ ताः परिचारिकाः ॥ ९ ॥

इन्द्रादिलोकपालांश्च द्वितीयाऽवरणेऽपि च ।
बलाकिनीं वनमालां विभीषामपि शाङ्करीम् ॥ १० ॥

गुग्गुलुं चागरुञ्चैव दमकं शङ्खिलं तथा ।
तृतीयाऽवरणे प्रोक्ता एते चाष्टौ विशेषतः ॥ ११ ॥

प्रथमद्वारसव्ये तु निर्माल्यहारिणी तथा ।
वामे चैव तथा प्रोक्ता नैवेद्यहरिणीति च ॥ १२ ॥

द्वितीयद्वारसव्ये तु भूमिञ्चापि समाचरेत् ।
वामे सरस्वतीञ्चैव द्वितीयद्वारपालिके ॥ १३ ॥

तृतीयद्वारसव्ये तु रतिञ्चैव प्रकल्पयेत् ।
वामे भागे तथा प्रोक्ता प्रीतिरत्र समर्चने ॥ १४ ॥

एष एव विशेषस्स्यादन्यत्सर्वं हरेरिव ।
देव्य एतास्समावाह्य उत्तरप्रणिधौ जले] ॥ १५ ॥

'शं सा नियच्छ' तीत्युक्त्वा 'भूयाम' इति च क्रमात् ।
'श्रिये जा' तेति मन्त्रेण शतमष्टोत्तरं यजेत् ॥ १६ ॥

श्रीसूक्तेनैव पद्माग्नौ शतमष्टोत्तरं यजेत् ।
निर्माल्यहारिण्यन्तांश्च परिवारान् प्रकल्पयेत् ॥ १७ ॥

होमावाहनपूजादि तत्तन्नामभिराचरेत् ।
प्रतिष्ठोक्तक्रमेणैव सर्वाण्यन्यानि कारयेत् ॥ १८ ॥

---

1. कान्तिं आ.

एवमेव प्रतिष्ठाप्य त्रिसन्ध्यं नित्यमर्चयेत् ।
उत्सवे देवदेवस्य सह देवीं नयेदनु ॥ १९ ॥

इयमङ्गप्रतिष्ठा स्यात्स्वतन्त्रस्थापनोच्यते ।
([1]एतं कल्पं समासेन विस्तरेण वदाम्यहम् ॥ २० ॥

शय्यावेदिञ्च परितः अग्निकुण्डानि कल्पयेत् ।
पञ्चाग्निं पौण्रीकञ्च स्नानश्वभ्रञ्च पूर्ववत् ॥ २१ ॥

भूमियज्ञञ्च कृत्वा तु कुण्डेष्वाघारमाचरेत ।
ततश्च पौण्डरीकाग्नौ हौत्रशंसनमाचरेत ॥ २२ ॥

आज्यस्थलीं स्रुवञ्चैव सुवर्णेनैव कारयेत् ।
तेन स्रुवेण होतव्यमाहुतीनां सहस्रकम् ॥ २३ ॥

विष्णोस्सहस्रकं हुत्वा अष्टाशीतिं यजेत्क्रमात् ।
श्रियश्शताष्टकैर्मन्त्रैर्दशवारञ्च हूयताम् ॥ २४ ॥

पुष्कलामाहुतिं हुत्वा दिशाहोमं जुहोति च ।
यजेदाहवनीयाग्नौ श्रीसूक्तं भावयञ्छ्रियम् ॥ २५ ॥

'श्रिये जा' तेति मन्त्रेण दक्षिणाग्नौ जुहोति वै ।
'शं सा नियच्छ'तीत्युक्त्वा 'भूयाम' इति च क्रमात् ॥ २६ ॥

कुण्डयोरन्ययोर्हुत्वा व्याहृत्यन्तं पृथक्पृथक् ।
सभ्ये समस्तैर्मन्त्रैश्च व्याहृत्यन्तं क्रमाद्यजेत् ॥ २७ ॥

मुहूर्ते समनुप्राप्ते देवीं संस्थापयेत्तथा ।
एष एव विशेषः स्यादन्यत्सर्वं हरेरिव ॥ २८ ॥

एवं देवीं प्रतिष्ठाप्य त्रिसन्ध्यं नित्यमर्चयेत् ।
हंसध्वजो विशेषः स्याच्छ्रीदेव्याश्चोत्सवेऽपि च ॥ २९ ॥

1. एतदारभ्य सार्धद्वात्रिंशच्छलोकपर्यन्तो ग्रन्थ आ. कोशेषु दृश्यते ।

उत्सवोक्तक्रमेणैव सर्वाण्यन्यानि कारयेत् ।
उत्सवे देवदेवस्य सह देवीं नयेदनु ॥ ३० ॥

एवमेव प्रकारेण विष्णुसद्माश्रिताश्रियः ।
उत्सवं कुरुते भक्त्या प्रतिष्ठामर्चनादिकम् ॥ ३१ ॥

अचलां श्रियमाप्नोति जन्मजन्मान्तरेऽपि च ।
तद्वंशजाश्च श्रीमन्तो भविष्यन्ति न संशयः ॥ ३२ ॥

स्वतन्त्रलक्ष्मी-प्रतिष्ठा

अतः परं प्रवक्ष्यामि स्वतन्त्रस्थापनं श्रियः) ।
ग्रामे वा नगरे वाऽपि पत्तने खर्वटेऽपि वा ॥ ३३ ॥

मध्ये संस्थापयेद्देवीं ब्रह्मसूत्रात्तु दक्षिणे ।
अथवा पश्चिमे भागे तथा तत्सूत्रदक्षिणे ॥ ३४ ॥

विष्ण्वालयविहीने तु ब्रह्मसूत्रोत्तरेऽथवा ।
ग्रामादीनान्तु वायव्ये प्राच्यां वा सूत्रदक्षिणे ॥ ३५ ॥

मनोरमेऽन्यदेशे वा नद्यास्तीरे तथा वने ।
पर्वताग्रेऽब्धितीरे वा प्रतिष्ठामाचरेद्बुधः ॥ ३६ ॥

विमानं स्वस्तिकं ग्रामे श्रीप्रतिष्ठितमेव वा ।
विष्णुच्छन्दविमानं वा चतुःकुटमथापि वा ॥ ३७ ॥

कर्षणादिक्रियास्सर्वास्तत्सूक्तेनैव कारयेत् ।
बालालयार्चनं कुर्वन् विमानं परिकल्पयेत् ॥ ३८ ॥

शूलस्थापनमार्गेण शूलं संस्थापयेत्पुनः ।
श्रीदेव्या बिल्ववृक्षस्तु शूलवृक्षः प्रकीर्तितः ॥ ३९ ॥

अथवाऽश्वत्थवृक्षो वा शिलाशूलमथापि वा ।
शिलास्थापनमार्गेण स्थापयेत्तु शिलामयम् ॥ ४० ॥

ध्रुवार्चां वा प्रकुर्वीत सम्यग्लक्षणसंयुताम् ।
आद्येष्टकानां विन्यासे गर्भप्रक्षेपणेऽथवा ॥ ४१ ॥

मूर्धेष्टकानां विन्यासे शूलस्य स्थापनेऽपि च ।
पौण्डरीकाग्निरेकः स्यात् मन्त्रं श्रीसूक्तमेव च ॥ ४२ ॥

श्रीदैवत्यं 'श्रिये जात' इति जप्येदृचं श्रियः ।
एष एव विशेषः स्यादन्यत्सर्वं हरेरिव ॥ ४३ ॥

तथा च कारयेद्देवीं द्विभुजां वा चतुर्भुजाम् ।
रज्जुबन्धादिकं सर्वं हरेरिव समाचरेत् ॥ ४४ ॥

कुर्याद्बिल्ववनाम्भोजमध्ये पद्मं मनोहरम् ।
तन्मध्ये मन्दिरं कुर्यात्तप्तहाटकसन्निभम् ॥ ४५ ॥

दीपचामरमुक्तास्रक्पूर्णकुम्भद्वयाङ्कुरैः ।
पुष्पैर्गन्धैश्च धूपैश्च वितानैः स्तम्भवेष्टनैः ॥ ४६ ॥

मन्दिरं सुन्दरं कृत्वा चतुरावरणान्वितम् ।
तत्र सिंहासनाम्भोजकर्णिकामध्यविष्टरे ॥ ४७ ॥

कुर्याच्चतुर्भुजां देवीं सपद्मोर्ध्वकरद्वयाम् ।
पूर्वदक्षिणहस्तेन भक्तानामभयप्रदाम् ॥ ४८ ॥

वामेन पूर्वहस्तेन दधतीं विपुलं धनम् ।
इन्दीवरोदरदृशीं शरदिन्दुमुखीं शुभाम् ॥ ४९ ॥

शुक्लगन्धानुलिप्ताङ्गीं शुक्लमाल्याम्बरोज्ज्वलाम् ।
नानारत्नोज्ज्वलानर्घदिव्यभूषणभूषिताम् ॥ ५० ॥

( हेमयज्ञोपवीताञ्च पद्ममालासमन्विताम् )
सुवर्णवर्णां वरदां हेमरूपस्रगुज्ज्वलाम् ।
एवं कृत्वा भगवतीं संसारार्णवतारिणीम् ॥ ५१ ॥

शङ्खपद्मनिधी कुर्यात्पादयोरग्रतः श्रियः ।
प्रागादिषु चतुर्दिक्षु पुरुषादीन् प्रकल्पयेत् ॥ ५२ ॥

अथवा वासुदेवादीन् शङ्खचक्रधरान् परान् ।
किरीटहारकेयूरमकुटादिविराजितान् ॥ ५३ ॥

श्रीवत्सकौस्तुभोरस्कान् वनमालाविभूषितान् ।
चतुर्भुजान् सुखासीनान् श्यामाभान् पद्मलोचनान् ॥ ५४ ॥

वीक्षमाणान् श्रियं देवीं विस्मयोत्फुल्ललोचनाम् ।
गुग्गुलुं चागरुञ्चैव दमकं शिङ्खिलं तथा ॥ ५५ ॥

चतुर्विषाणान् शुक्लाङ्गान् कोणेषु परिकल्पयेत् ।
भूमिं सरस्वतीञ्चैव रतिं प्रीतिं तथैव च ॥ ५६ ॥

कीर्तिं क्षान्तिं पुष्टितुष्टी शक्तीरष्टौ प्रकल्पयेत् ।
इन्द्रादिलोकपालांश्च तत्तत्स्थाने प्रकल्पयेत् ॥ ५७ ॥

(पूर्वाशादिक्रमेणैव प्रथमाऽवरणेऽर्चयेत् )
बलाकिनीञ्च प्राग्द्वारे दक्षिणे वनमालिकाम् ।
विभीषिकां प्रतीच्यान्तु उदग्द्वारे च शाङ्करीम् ॥ ५८ ॥

कल्पयेद्वामनास्त्वेताश्चतस्रो द्वारपालिकाः ।
द्वे द्वे कृत्वाऽथवा चैताः खिलोक्ता द्वारपालिकाः ॥ ५९ ॥

शुक्लाम्बराः पद्महस्ताः सर्वाभरणभूषिताः ।
बलाकिन्यादयस्त्वेताः पद्मकिञ्जल्कसन्निभाः ॥ ६० ॥

कल्पसन्तानमन्दारपारिजातांश्चतुर्दिशम् ।
बिल्ववृक्षांश्च परितः पूर्णकुम्भान् लिखेत्क्रमात् ॥ ६१ ॥

कल्पयित्वाखिलोक्तांश्च परिवारान् यथाक्रमम् ।
कृत्वा तु भूतपीठान्तान् स्थापनारम्भमाचरेत् ॥ ६२ ॥

फाल्गुनोत्तरफल्गुन्यां स्थापना प्रीतये श्रियः ।
बिल्ववृक्षादधस्सम्यगासीनो ब्राह्ममासनम् ॥ ६३ ॥

जपेदष्टोत्तरशतं श्रीसूक्तं भावयेच्छ्रियम् ।
स्थापनादिवसात्पूर्वं पञ्चमेऽह्नयङ्कुरार्पणम् ॥ ६४ ॥

अङ्कुरार्पणकादूर्ध्वं यागशालां प्रकल्पयेत् ।
शय्यावेदिञ्च परितस्त्वग्निकुण्डानि कल्पयेत् ॥ ६५ ॥

पञ्चाग्नीन् पौडरीकाग्निं स्नानश्वभ्रञ्च पूर्ववत् ।
अक्ष्युन्मेषाधिवासौ च ध्रुवशुद्धिं तथैव च ॥ ६६ ॥

कृत्वा तु पूर्ववत्पश्चात् पूर्वरात्रौ विशेषतः ।
भूमियज्ञञ्च कृत्वा तु कुण्डेष्वाघारमाचरेत् ॥ ६७ ॥

कुम्भं सम्पूज्य कलशैः स्नापयेत्सप्तभिः पुनः ।
पूर्ववत्कौतुकं बद्ध्वा शयने शाययेच्छ्रियम ॥ ६८ ॥

ततश्च पौण्डरीकाग्नौ हौत्रशंसनमाचरेत् ।
(हौत्रान्ते तु समावाह्य दक्षिणप्रणिधौ जले ।
श्रियं देवीं समावाह्य (अनिरुद्धान्तमेव च ॥

निर्माल्यहारिणीत्यादि) श्रीभूतन्तं समावहेत् ।
उत्तरप्रणिधौ तद्वदावाह्याज्यं निरूप्य च ॥

एतैश्च मूर्तिमन्त्रैश्च आज्येन जुहुयात्क्रमात् ) ।
आज्यपात्रं स्रुवञ्चैव सुवर्णेनैव कारयेत् ॥ ६९ ॥

तेन स्रुवेण होतव्यमाहुतीनां सहस्रकम् ।
विष्णोस्सहस्रकं हुत्वा अष्टाशीत्याहुतीर्यजेत् ॥ ७० ॥

श्रियश्शताष्टकैर्मन्त्रैर्दशवारञ्च हूयताम् ।
पुष्कलामहुतिं हुत्वा दिशाहोमं जुहोति वै ॥ ७१ ॥

यजेदाहवनीयाग्नौ श्रीसूक्तं भावयञ्छ्रियम् ।
'श्रिये जा' तेति मन्त्रेण दक्षिणाग्नौ जुहोति च ॥ ७२ ॥

'शं सा नियच्छ' तीत्युक्त्वा 'भूयास' इति च क्रमात् ।
कुण्डयोरन्ययोर्हुत्वा व्याहृत्यन्तं पृथक्पृथक् ॥ ७३ ॥

सभ्ये समस्तैर्मन्त्रैश्च व्याहृत्यन्तं क्रमाद्यजेत् ।
मुहूर्ते समनुप्राप्ते लक्ष्मीं संस्थापयेत्तथा ॥ ७४ ॥

एष एव विशेषः स्यादन्यत्सर्वं खिलोक्तवत् ।
पृथक्कर्तुमशक्तश्चेदालयाश्रयमेव वा ॥ ७५ ॥

आलये देवदेवस्य दक्षिणे सम्प्रकल्पयेत् ।
चतुर्भुजां प्रकुर्वीत पूर्वोक्तेन विधानतः ॥ ७६ ॥

अथवा द्विभुजां देवीं कल्पयित्वा खिलोक्तवत् ।
विधिना स्थापयेत्सम्यक् स्वतन्त्रं वाऽऽलयाश्रयम् ॥ ७७ ॥

अर्चनादि श्रियो देव्याः स्थापनं श्रीशताष्टकम् ।
खिले विस्तरतः प्रोक्तं तत्तत् ज्ञात्वा समर्चयेत् ॥ ७८ ॥

ध्रुवकौतुकसंयुक्तं स्थापनं चोत्तमं भवेत् ।
एकबेरार्चनं मध्यमाभासमधमं भवेत् ॥ ७९ ।

श्रियो यः कुरुते भक्त्या प्रतिष्ठामर्चनादिकम् ।
अचलां श्रियमाप्नोति जन्मजन्मान्तरेऽपि च ॥ ८० ॥

तद्वंशजाश्च श्रीमन्तो भविष्यन्ति न संशयः ।
सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥ ८१ ॥

अन्ते विमानमारुह्य सालोक्यं पदमाप्नुयात् ।
श्रीदेव्याः विमानक्रमः
अतः परं श्रियो देव्याः विमानक्रम उच्यते ॥ ८२ ॥

विमानं लक्षणं कृत्वा परिवारान्प्रकल्पयेत् ।
तले च प्रथमे चैव देवानां क्रम उच्यते ॥ ८३ ॥

प्रागादिषु चतुर्दिक्षु पुरुषादीन् प्रकल्पयेत् ।
द्वितीयेऽपि तले प्रोक्तं वासुदेवादिव्यूहकम् ॥ ८४ ॥

तृतीयेऽपि तले प्रोक्तः परिवारक्रमो यथा ।
गुग्गुलुञ्च कुरण्टञ्च दमकं सलिलं तथा ॥ ८५ ॥

चतुर्विषाणान् शुक्लाङ्गान् गजान्प्रागादि कल्पयेत् ।
पञ्चमेऽपि तले प्रोक्तः परिवारक्रमो बुधाः ॥ ८६ ॥

भूमिं सरस्वतीञ्चैव रतिं प्रीतिं तथैव च ।
एताश्चतस्रो देव्यश्च प्रागादि परिकल्पयेत् ॥ ८७ ॥

षष्ठेऽपि च तले प्रोक्ताः कीर्तिः क्षान्तिस्तथैव च ।
पुष्टिस्तुष्टिस्तथैताश्च प्रागादि परिकल्पयेत् ॥ ८८ ॥

सप्तमेऽपितले वाऽपि दिग्देवांश्च प्रकल्पयेत् ।
अष्टमेऽपि तले कुर्यादष्टदिक्पालकानपि ॥ ८९ ॥

प्रागादिषु चतुर्दिक्षु एतान्देवान् प्रकल्पयेत् ।
नवमेऽपि तले वाऽपि देवानां क्रम उच्यते ॥ ९० ॥

वासुकिञ्च तथाऽनन्तं शङ्खञ्च गुलिकं तथा ।
प्रागादिषु चतुर्दिक्षु क्रमादेवं प्रकल्पयेत् ॥ ९१ ॥

दशमेऽपि तले वाऽपि परिवारक्रमो बुधाः ।
पूर्वे सरस्वतीञ्चैव गायत्रीं दक्षिणे तथा ॥ ९२ ॥

पश्चिमेऽपि च सावित्रीं वैष्णवीमपि चोत्तरे ।
एकादशतले वाऽपि पालिकानां क्रमं शृणु ॥ ९३ ॥

पूर्वे तत्र श्रियं चापि दक्षिणे हरिणीं तथा ।
पश्चिमे च इलाञ्चैव उत्तरे सुन्दरीं तथा ॥ ९४ ॥

द्वादशेऽपि तले प्रोक्तदेवताक्रम उच्यते ।
बलाकिनीञ्च पूर्वे तु दक्षिणे वनमालिकाम् ॥ ९५ ॥

विभीषिकां पश्चिमे तु उत्तरे शाङ्करीं तथा ।
विमानद्वारभागे तु चतस्रो द्वारपालिकाः ॥ ९६ ॥

विमानं परितश्चापि एतान्देवान्प्रकल्पयेत् ।
शुक्लाम्बराः पद्महस्ताः सर्वाभरणभूषिताः ॥ ९७ ॥

बलाकिन्यादयस्त्वेताः पद्मकिञ्जल्कसन्निभाः ।
गजेन्द्रं वा मृगेन्द्रं वा कोणे कोणे प्रकल्पयेत् ॥ ९८ ॥

एष एव विशेषः स्यादन्यत्सर्वं हरेरिव ।
प्रतिष्ठादिवसात्पूर्वं पञ्चमेऽह्न्यङ्कुरार्पणम् ॥ ९९ ॥

विमानं परितश्चापि यागशालां प्रकल्प्य च ।
विमानस्य चतुर्दिक्षु चाग्निकुण्डानि कल्पयेत ॥ १०० ॥

वास्तुहोमं ततो हुत्वा पञ्चगव्येन चोक्षयेत् ।
श्रियो देव्याः प्रतिष्ठोक्तं सर्वमत्रैव कारयेत् ॥ १०१ ॥

एष एव विशेषः स्यादन्यत्सर्वं श्रियो यथा ।
एवं यः कुरुते भक्त्या सर्वकामानवाप्नुयात् ॥ १०२ ॥

इह लोके सुखं भुक्त्वा ब्रह्मलोकं स गच्छति ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
भगवदालयाश्रितश्रीप्रतिष्ठाविधिर्नाम षोडशोऽध्यायः ॥

# सप्तदशोऽध्यायः

---

त्रिमूर्तिस्थापनम्

त्रिमूर्तिस्थापनं वक्ष्ये जगतामभिवृद्धये ।
( सर्वलोकस्य पूजार्थं सर्वलोकहिताय च )
मध्ये विष्णुं प्रतिष्ठाप्य ब्रह्माणं दक्षिणे ततः ॥ १ ॥

वामे रुद्रं प्रतिष्ठाप्य पूजनं यत्तदुत्तमम् ।
स्थापनं व्यत्ययेनैव मध्यमं ब्रह्मरुद्रयोः ॥ २ ॥

मध्ये रुद्रं प्रतिष्ठाप्य दक्षिणे विष्णुमुत्तरे ।
ब्रह्माणं व्यत्ययेनाथ स्थापयेदधमं स्मृतम् ॥ ३ ॥

कृत्वा वा पार्श्वयोरन्यौ मध्ये ब्रह्माणमेव वा ।
सौम्येनानेन विधिना स्थापयेद्विष्णुपद्मजौ ॥ ४ ॥

शैवेन तान्त्रिकेणैव स्थापनं वै शिवस्य तु ।
निष्कलं सकलं वाऽपि स्थापयेच्चन्द्रशेखरम् ॥ ५ ॥

त्रयाणां परिवाराणां तत्तदुक्तानि कल्पयेत् ।
अनपायिगणद्वारविमानेशाः पृथक्पृथक् ॥ ६ ॥

प्राकारपरिवाराणां सर्वे साधारणा मताः ।
प्रथमावरणादीनां द्वारपालास्तथैव च ॥ ७ ॥

दशतालोत्तमेनैव देवेदवं प्रकल्पयेत् ।
शङ्करं मध्यमेनैव विरिञ्चिमधमेन च ॥ ८ ॥

आलयाभिमुखे तेषां यागशालां प्रकल्पयेत् ।
षडग्नीन् देवदेवस्य पञ्चाग्नीन् ब्रह्मणस्तथा ॥ ९ ॥

तच्छास्त्रोक्तेन मार्गेण रुद्रस्यापि प्रकल्पयेत् ।
अक्ष्युन्मेषादिकं सर्वं पूर्ववत्कारयेत्पृथक् ॥ १० ॥

हौत्रशंसनवेलायामिन्द्रादिपरिषद्गणान् ।
मध्यालयाग्निकुण्डे तु समावाह्य समर्चयेत् ॥ ११ ॥

देवस्य पूर्ववद्धोमं षडग्निषु जुहोति वै ।
ब्रह्मणस्सभ्यकुण्डे तु कृत्वा हौत्रप्रशंसनम् ॥ १२ ॥

प्राजापत्यं जयादींश्च कूश्माण्डं गणहोमकम् ।
आहुतीनां सहस्रञ्च पूर्ववज्जुहुयाद्बुधः ॥ १३ ॥

ब्राह्ममन्त्रद्वयेनापि शतमष्टोत्तरं यजेत् ।
साविन्त्र्याऽब्जं घृताभ्यक्तं शतवारं ततो यजेत् ॥ १४ ॥

ऐन्द्रमाग्नेयसंयुक्तं यजेदाहवनीयके ।
याम्यं नैरृतसंयुक्तमन्वाहार्ये जुहोति वै ॥ १५ ॥

वारुणं वायुदैवत्यं गार्हपत्ये जुहोति च ।
सौम्यं कौबेरमैशान्यामावसथ्ये यजेत्क्रमात् ॥ १६ ॥

चतुर्वेदादिमन्त्रैश्च शतमष्टोत्तरं यजेत ।
एष एव विशेषः स्यादन्यत्सर्वं समं भवेत् ॥ १७ ॥

स्थापनं च त्रिमूर्तीनां परिषद्गणपूजनम् ।
व्यक्तं **मरीचिः** प्रोवाच उक्तशेषं समाचरेत् ॥ १८ ॥

द्विमूर्तिस्थापनम्

द्विमूर्तिस्थापनं वक्ष्ये दक्षिणे विष्णुमव्ययम् ।
वामे रुद्रं प्रतिष्ठाप्य नित्यं विधिवदर्चयेत् ॥ १९ ॥

अथवा कर्तुमिच्छेच्चेत् ब्रह्मणः स्थापनं पृथक् ।
ग्रामादिषु च तन्मध्ये विविक्तेऽन्यत्र वा वने ॥ २० ॥

भूपरीक्षादिकं सर्वं तन्मन्त्रेणैव कारयेत् ।
कृत्वा विमानबेरादिनयनोन्मीलनादिकम् ॥ २१ ॥

स्थापनोक्तक्रियास्सर्वाः कारयेत्पूर्ववद्बुधः ।
ब्राह्ममन्त्रद्वयेनापि नित्यं विधिवदर्चयेत् ॥ २२ ॥

हवींषि पायसादीनि चत्वार्येवं निवेदयेत् ।
उत्सवे तु ध्वजं हंसलक्षणं तस्य कल्पयेत् ॥ २३ ॥

विना पुरुषसूक्तेन विष्णुसूक्तेन वैष्णवैः ।
ब्राह्ममन्त्रद्वयेनैव तत्तद्धोमस्तदुत्सवे ॥ २४ ॥

एष एव विशेषः स्यादन्यत्सर्वं समं भवेत् ।
परिवारस्थापनम् रविं गुहञ्च विघ्नेशं दुर्गां ज्येष्ठां सरस्वतीम् ॥ २५ ॥

स्थापयित्वाऽर्चनं कर्तुं यदीच्छेद्भक्तितः पृथक् ।
खिले विस्तरतः प्रोक्तं यन्मया तत्समाचरेत् ॥ २६ ॥

आश्रयालयमिच्छेच्चेत्परितो विष्णुमन्दिरे ।
भास्करादीन् प्रकल्प्यैव पूजयेच्चेन्महाफलम् ॥ २७ ॥

प्रथमाऽवरणे प्राच्यां भास्करं भारतीमपि ।
गुहं याम्ये तु विघ्नेशं नैरृते परिकल्पयेत् ॥ २८ ॥

ज्येष्ठां वायव्यभागे तु दुर्गां याम्ये प्रकल्पयेत् ।
प्रत्यङ्मुखौ च कर्तव्यौ भारती च दिवाकरः ॥ २९ ॥

कारयेत्प्राङ्मुखानन्यानिति पूर्वजशासनम् ।
सौम्येनैव विधानेन पूजयेत्सर्वसम्पदे ॥ ३० ॥

सौम्यालयाश्रितानेतान् तान्त्रिकेण न चार्चयेत् ।
औपासनाग्निरेव स्यादेतेषामाश्रयालये ॥ ३१ ॥

कुर्याद्ध्रुवार्चामार्गेण सर्वमन्यत्खिलोक्तवत् ।
आलयं प्रतिमोत्सेधं परिवारोक्तवद्भवेत् ॥ ३२ ॥

आश्रयालयकल्पः आश्रयालयकल्पञ्च प्रवक्ष्यामि तपोधनाः ।
स्वतन्त्रमालयं कर्तुमशक्तोन्यऽत्र वाऽऽलये ॥ ३३ ॥

स्थापयित्वाऽर्चयेत्सोऽपि समग्रं फलमाप्नुयात् ।
मूलालये स्थिते देवे स्थित एवाऽश्रये भवेत् ॥ ३४ ॥

आसीने चाऽसनं वाऽपि स्थानकञ्च प्रकल्पयेत् ।
स्थानकासनशय्यासु शयनेऽन्यतमं मतम् ॥ ३५ ॥

मूलालये ध्रुवार्चायामाश्रयञ्च ध्रुवार्चनम् ।
ध्रुवकौतुकसंयुक्ते तद्वदेवैकमेव वा ॥ ३६ ॥

अवताराश्रयञ्चेत्तु गौणमार्गे यथाविधि ।
आसीनावेव सर्वत्र वराहनरसिंहकौ ॥ ३७ ॥

अवताराश्रयं कुर्वन् प्रथमावरणादिषु ।
मत्स्यकूर्मौ प्रकुर्वीत पूर्वद्वारस्य दक्षिणे ॥ ३८ ॥

वराहत्रयमाग्नेयाद्याम्यान्तं परिकल्पयेत् ।
नारसिंहं प्रकुर्वीत गिरिजं याम्यपश्चिमे ॥ ३९ ॥

स्थूणजं नैरृते देशे नीलवारुणमध्यमे ।
सौदर्शनं नृसिंहन्तु वारुणे च ततः परम् ॥ ४० ॥

कुर्याल्लक्ष्मीनृसिंहञ्च वरुणोदानमध्यमे ।
पातालनरसिंहञ्च वामनं वायुदिश्यपि ॥ ४१ ॥

धनदोदानयोर्मध्ये कारयेत्तु त्रिविक्रमम् ।
जामदग्न्यं तु कौबेरे कुबेरेशानमध्यमे ॥ ४२ ॥

कुर्याद्दाशरथिं राममैशान्ये तु हलायुधम् ।
ईशानेन्द्रान्तरे कृष्णं द्वारवामे तु कल्किनम् ॥ ४३ ॥

वराहं नारसिंहञ्च रामं कृष्णं तथैव च ।
दिक्षु सर्वासु संस्थाप्य पूजयेत्सर्वसिद्धये ॥ ४४ ॥

योगे मूलालये कुर्याद्योगमेवाश्रयालयम् ।
भोगे भोगञ्च योगं वा न जातु विरहादिकम् ॥ ४५ ॥

मूलबेरन्तु शूलञ्चेच्छूलमेवाश्रयालये ।
शैले शैलञ्च शूलं वा लोहे लौहं शिलामपि ॥ ४६ ॥

एकबेरन्तु सर्वत्र शैलमेव प्रकल्पयेत् ।
सुदर्शनप्रतिष्ठा चेद्याम्ये वा नैर्ऋते तथा ॥ ४७ ॥

कल्पयेदीश्वरं प्राच्यां प्रागादि परिकल्पनम् ? ।
पादहीनमथार्धं वा मूलादाश्रयमन्दिरम् ॥ ४८ ॥

तत्र मूलालयोत्कृष्टमलङ्कारं न कल्पयेत् ।
सङ्ख्याधिकतलं नैव कल्पयेदाश्रयालयम् ॥ ४९ ॥

सालाश्रयं त्रिवर्गाढ्यं तदन्तर्मण्डलेऽपि वा ।
अग्रमण्डपसंयुक्तं प्रथमाऽवरणे स्मृतम् ॥ ५० ॥

विमानद्वारदेवाश्च गर्भालयगता अपि ।
परिवारा इति प्रोक्ता मुखवासान्तमर्चनम् ॥ ५१ ॥

द्वितीयावरणे चेत्तु शान्तान्तपरिषद्युतम् ।
तृतीयावरणे चेत्तु होमकर्माणि कारयेत् ॥ ५२ ॥

मुखमण्डपसंयुक्तं चक्रशङ्खयुतं तथा ।
चतुर्थावरणे चेत्तु नवविंशतिविग्रहैः ॥ ५३ ॥

अनपायिगणान्त्सर्वान्कल्पयेत्स्नपनालयम् ।
द्वात्रिंशद्विग्रहैरूर्ध्वे पृथगेवोत्सवादिकम् ॥ ५४ ॥

ब्रह्मपद्मावटान्ताश्च भूपरीक्षादिकाः क्रियाः ।
नैवाश्रयालये कुर्यादिति पूर्वजशासनम् ॥ ५५ ॥

आरभ्याद्येष्टकान्यासं विमानं परिकल्पयेत् ।
नैवाद्यान्त्येष्टकान्यासौ तच्चेदावृतमण्डपे ॥ ५६ ॥

मूलं पौराणिकं चेत्तु यथाकाममथाश्रयम् ।
गौणं समं वा मुख्यं वा कल्पयेच्चेन्न दोषकृत् ॥ ५७ ॥

अन्यदेवालये विष्णोः कुर्याच्चेदालयाश्रयम् ।
सर्वं मूलालयोत्कृष्टं कल्पयेदिति शासनम् ॥ ५८ ॥

विष्ण्वालयेऽन्यदेवानां कुर्याच्चेदाश्रयलयम् ।
न समं नैव चोत्कृष्टं हीनमेव प्रकल्पयेत् ॥ ५९ ॥

स्थितेऽपि देवे ज्येष्ठा च विघ्नेशश्च सरस्वती ।
आसीना एव कर्तव्यास्तदाऽन्ये संस्थिता मताः ॥ ६० ॥

इति सङ्क्षेपतः प्रोक्तमाश्रयालयकल्पनम् ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे त्रिमूर्तिद्विमूर्तिस्थापनविध्याश्रयालयकल्पनं नाम सप्तदशोऽध्यायः

# अष्टादशोऽध्यायः

---

पुण्यनक्षत्रपूजनम्

([1] अथातस्संप्रवक्ष्यामि पुण्यनक्षत्रपूजनम् ।
श्रवणं द्वादशी पर्व विष्णुपञ्चदिनानि वै ॥

प्रशस्तं श्रवणं तेषु द्वादशी चोत्तमा मता ।
विषुवायनमासर्क्षग्रहणेष्वन्यसङ्क्रमे ॥

कर्तृभूपर्क्षयोश्चैव ग्रामनक्षत्र एव वा ।
कृत्वाऽङ्कुरार्पणं तद्वद्बद्ध्वा प्रतिसरं तथा ॥

शाययेत्पूर्वरात्रौ तु प्रातस्स्नात्वा यथाविधि ।
प्रातस्सन्ध्यार्चनान्ते तु मन्त्रांस्तीर्थदिनोदितान् ॥

नित्याग्निकुण्डे हुत्वा तु चक्रवीशाग्निभिस्सह ।
उत्सवोक्तक्रमेणैव ग्रामसन्धौ बलिं ददेत् ॥

उत्सवं विधिना कृत्वा तीर्थं पूर्ववदाचरेत् ।
स्नपनोक्तप्रकारेण स्नापयित्वा ततः परम् ॥

समभ्यर्च्य निवेद्यैव जीवस्थाने निवेशयेत् ।
शान्तिकोत्सवमुद्दिष्टमेतं पूर्वाह्ण आचरेत् ॥

विनैव बलिहोमाभ्यां मध्याह्ने पौष्टिकोत्सवम् ।
तीर्थं विनाऽपराह्णे तु कुर्यात्काम्योत्सवं बुधः ॥

अर्चायां शान्तिकं कर्म काम्यमौत्सव एव वा ।
औत्सवं स्नापयित्वाऽह्नि रात्रावास्थानमण्डपे ॥

सर्वोपचारैरभ्यर्च्य पायसादिहवींषि च ।
सर्वप्रयत्नैर्नैवेद्यं कुर्यादेवमतन्द्रितः ॥

---

1. अस्मिन्नध्याये आरम्भात्प्रभृति सप्तदशश्लोकपर्यन्तो ग्रन्थः मातृकान्तरेषु कुत्रापि नोप लभ्यते ।

एवं कर्तुमशक्तश्चेद्दिनेष्वेषु यथाविधि ।
संस्नाप्य गन्धतोयेन शुद्धस्नानोक्तमार्गतः ॥

द्वात्रिंशद्भिर्ग्रहैर्देवमर्चयेत्त्वरया मुदा ।
तत्रापि बलिवेलायां यानमारोप्य पूर्ववत् ॥

देवमेवं नयेत्सम्यगालये तु प्रदक्षिणम् ।
जीवस्थाने प्रतिष्ठाप्य शेषं तत्र समाचरेत् ॥

विष्णुपञ्चदिनस्नाने कालो मध्याह्न उच्यते ।
विषूपरागायनेषु तत्कालात्पूर्वमाचरेत् ॥

हविष्पाकोक्तविधिना पाकेष्वाग्रयणं चरेत् ।
आहृतानि च धान्यानि विविधानि फलानि च ।

सर्वानथोपदंशांश्च नवानि वसनानि च ।
सर्वाण्याहृत्य यत्नेन सर्वमङ्गलसंयुतम् ॥

जपेच्छकुनसूक्तन्तु कुर्याद्ग्रामप्रदक्षिणम् ।
अलङ्कृत्याग्रतश्चक्रं नयेदिति च केचन ॥ )

हविः पाकविधिः अतः परं प्रवक्ष्यामि हविष्पाकविधिं परम् ।
हविरुद्दिश्य धान्यानि चोपदशांस्तथाऽऽहरेत् ॥ १ ॥

शालिव्रीहिप्रियङ्गूनि नीवारं षाष्टिकं तथा ।
यवञ्च वेणुकञ्चैव प्रशस्तानि विदुर्बुधाः ॥ २ ॥

व्रीहीणामपि सर्वेषां कृष्णधान्यं विसर्जयेत् ।
सर्वेषां व्रीहिधान्यानां शालिर्दशगुणो भवेत् ॥ ३ ॥

शतगुणः प्रियङ्गुः स्यान्नीवारन्तु सहस्रकम् ।
अयुतं गर्भषष्टिः ? स्यात् अनन्तं यववेणुके ॥ ४ ॥

चतुर्वर्णाहृतं धान्यं प्रशस्तमभिधीयते ।
अन्त्यजैः प्रतिलोमैश्च नीतं धान्यं विवर्जयेत् ॥ ५ ॥

अथवा पण्यलब्धञ्च धान्यं शुद्धं समाहरेत् ।
त्रिवर्षातीतधान्यानि न प्रशंसन्ति दैविके ॥ ६ ॥

तण्डुलानाञ्च सर्वेषां मासातीतानि वर्जयेत् ।
'आपो हि' ष्ठेति मन्त्रेण प्रोक्ष्य धान्यानि चाऽहरेत् ॥ ७ ॥

आलये वा गृहे वाऽपि शुद्धे देशे समाहितः ।
विताने वा कटे वाऽपि समास्तीर्य विधानतः ॥ ८ ॥

आतपेन तथा शोष्य विश्वामित्रान् परावपेत् ।
ततो धान्यं सुसङ्गृह्य पलालेषु च निक्षिपेत् ॥ ९ ॥

पलालेन समाबध्य गजस्कन्धे निधाय च ।
सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम् ॥ १० ॥

वेदघोषसमायुक्तं पूर्णकुम्भाङ्कुरैर्युतम् ।
अलङ्कृत्याऽलयं सर्वं पूर्णकुम्भाङ्कुरैरपि ॥ ११ ॥

दीपैश्च बहुभिश्शस्तैः कदलीक्रमुकैरपि ।
देवालयं शनैर्नीत्वा देवाग्रे तानि विन्यसेत् ॥ १२ ॥

तेषु वायुं समभ्यर्च्य तथैकादशविग्रहैः ।
श्रीसूक्तेन श्रियं देवीं संस्तूय प्रणिपत्य च ॥ १३ ॥

'श्रिये जा' तेति मन्त्रेण गृह्णीयाद्धान्यमत्वरः ।
अवघातं पुनः कुर्याद्धविष्पाकोक्तमार्गतः ॥ १४ ॥

तण्डुलांश्चापि शुद्धांस्तु ततः पात्रे समाहरेत् ।
हवींषि चोपदंशांश्च पाचयित्वा यथाविधि ॥ १५ ॥

तण्डुलान्क्षालितानद्भिः शर्करागुडमिश्रितान् ।
मरीचिजीरकैश्चैव नारिकेलफलैरपि ॥ १६ ॥

सघृतं देवदेवाय मन्त्रवत्तान्निवेदयेत् ।
तैरेव तण्डुलैर्हुत्वा परिवारबलिं ददेत् ॥ १७ ॥

पुनराचमनं दत्वा मुखवासं निवेदयेत् ।
पुनरभ्यर्च्य देवेशमुपदंशादिभिर्युतम् ॥ १८ ॥

निवेदयेद्धविः पश्चान्मूर्तिहोमं तथैव च ।
परिवारबलिं दत्वा पानीयाचमनं ददेत् ॥ १९ ॥

मुखवासं निवेद्यैव 'क्षम' स्वेति प्रणम्य च ।
पश्चात्पुष्पाञ्जलिं दद्याद्देवदेवस्य पादयोः ॥ २० ॥

कृत्तिकादीपः

कार्तिक्यां पौर्णमास्यान्तु दीपदानं समाचरेत् ।
आलयं समलङ्कृत्य मृष्टसिक्तोपलेपनैः ॥ २१ ॥

अलङ्कारैरलङ्कुर्यादन्यैरपि च शोभनैः ।
देवदेवमलङ्कृत्य वस्त्रमाल्यानुलेपनैः ॥ २२ ॥

महाहविः प्रभूतं वा यथाशक्ति निवेदयेत् ।
पूगं वा नारिकेलं वा तालं वा जातिमेव वा ॥ २३ ॥

( तद्बिमानसमायामं पादोनं वाऽर्धमेव वा )
दीपदण्डं गृहीत्वा तु देवाग्रे स्थापयेत्पुनः ।
दीपदण्डस्य परितश्चोल्कादीपत्रयाणि च ॥ २४ ॥

रत्निमात्रायतान्येवमयुग्मानि च कारयेत् ।
कारयेद्दीपदानार्थं कूटाकारं चतुर्मुखम् ॥ २५ ॥

मण्डपेषु च सर्वेषु सर्वेष्वावरणेषु च ।
दीपाधारान् प्रकुर्वीत यथाविभवविस्तरम् ॥ २६ ॥

प्रदोषे कारयेद्देवमालयन्तु प्रदक्षिणम् ।
'उद्दीप्य' स्वेति मन्त्रेण दीपमारोपयेत्पुनः ॥ २७ ॥

धान्यपीठे प्रतिष्ठाप्य देवेशाभिमुखं पुनः ।
श्रियं तत्र समभ्यर्च्य 'श्रिये जात' इति ब्रुवन् ॥ २८ ॥

सन्न्यसेद्दीपदण्डाग्रे दीपं देवेशसन्निधौ ।
प्राकारादिषु सर्वत्र दीपानारोपयेद्बहून् ॥ २९ ॥

नित्यं तत्कार्तिके मासि दीपदानं विशिष्यते ।
संस्थाप्य देवमास्थाने पूजयित्वाऽष्टविग्रहैः ॥ ३० ॥

अपूपलाजपृथुकान् यथाशक्ति निवेदयेत् ।
मरीचिजीरकगुलैर्नारिकेलैस्सुसंस्कृतान् ॥ ३१ ॥

खिले विस्तरतः प्रोक्ता कृत्तिकादीपसंस्कृतिः ।
कैशिकद्वादशी (एकादश्यां सिते पक्षे तत्रोपोष्य यथाविधि ।
द्वादश्यामुदयात्पूर्वं देवमास्थानमण्डपे ॥

[1]संस्थाप्य कैशिकं गानं गानविद्भिश्च कारयेत् ।
द्वादश्यां स्नापयेत्पश्चात्समभ्यर्च्य यथाविधि ॥

हविर्निवेदयेद्द्रौल्यं पानीयादि निवेदयेत् ।
जीवस्थाने प्रतिष्ठाप्य प्रणमेद्दण्डवद्भुवि ॥

अनन्तं तत्फलं विद्धि सायुज्यं लोकमाप्नुयात् ।)
अध्ययनोत्सवः मार्गशीर्षाख्यमासे तु पूर्वपक्षे विशेषतः ॥ ३२ ॥

एकादश्यामथाऽरभ्य वेदपारायणं चरेत् ।
प्रातस्सन्ध्यावसाने तु देवमास्थानमण्डपे ॥ ३३ ॥

संस्थाप्य चतुरो वेदान् क्रमेणाध्यापयेत्सदा ।
पूजयेद्देवदेवं तं सप्तविंशतिविग्रहैः ॥ ३४ ॥

सर्वालङ्कारसंयुक्तं कारयित्वा प्रदक्षिणम् ।
स्वस्तिसूक्तं समुच्चार्य जीवस्थाने निवेशयेत् ॥ ३५ ॥

पक्षं त्रयोदशाहं वा द्वादशाहं समाचरेत् ।
पुराणानितिहासांश्च देवस्य विजयोत्कटाः ॥ ३६ ॥

---

1. नृत्तं गेयञ्च वाद्यञ्च गानविद्भिश्च कारयेत् आ

कथा वा श्रावयेन्नित्यं देवदेवस्य सन्निधौ ।
तत्रैव मासि द्वादश्यां प्रातस्स्नात्वा यथाविधि ॥ ३७ ॥

मृण्मयानि च भाण्डानि पुराणानि परित्यजेत् ।
यथार्हं शोधयेदन्या 'नामा वा' जेति मन्त्रतः ॥ ३८ ॥

मृष्टसिक्तोपलेपाद्यैश्शोधयित्वा तथाऽऽलयम् ।
औत्सवादीनि बेराणि सर्वाण्येव यथाविधि ॥ ३९ ॥

संस्नाप्य गन्धतोयेन शुद्धस्नानोक्तमार्गतः ।
स्नापयेत्स्नापनं बेरं कलशैश्च यथविधि ॥ ४० ॥

चतुर्दिशं चतुर्हस्तं गोमयेनोपलिप्य च ।
व्रीहिभिः कारयेत्पद्मं साष्टपत्रं सकर्णिकम् ॥ ४१ ॥

तत्पद्मसंस्थितान्देवान् पूर्ववत्सम्यगर्चयेत् ।
तस्मिन् देवं प्रतिष्ठाप्य विष्टरे सोत्तरच्छदे ॥ ४२ ॥

आसनादिभिरभ्यर्च्य पायसान्नं निवेदयेत् ।
पाद्यमाचमनं दत्वा मुखवासं निवेदयेत् ॥ ४३ ॥

पुष्पयागोक्तमन्त्रैस्तु दद्यात्पुष्पाञ्जलीन् बहून् ।
धामप्रदक्षिणान्ते तु जीवस्थाने निवेशयेत् ॥ ४४ ॥

संवत्सरार्चने न्यूनं नित्ये नैमित्तिकेऽपि यत् ।
तत्सर्वं परिपूर्णं स्यात् द्वादश्यां पूजयाऽनया ॥ ४५ ॥

आप्नुयाद्यजमानोऽपि तद्विष्णोः परमं पदम् ।
संवत्सरार्चनादोषप्रायश्चित्तार्थमेव तत् ॥ ४६ ॥

श्रवणद्वादशीविशेषः श्रवणद्वादशीयोगे मासि भाद्रपदे तथा ।
पवित्रारोपणं विष्णोः कारयेदिति केचन ॥ ४७ ॥

तस्मात्सर्वप्रयत्नेन पवित्रारोपणं चरेत् ।
गव्येन पयसा तैष्ये नित्यं संस्नापयेद्धरिम् ॥ ४८ ॥

राघवस्यार्चनम् द्वादशी पूर्वपक्षे तु माघमासे पुनर्वसू ।
जया तस्यामुपोष्यैव रामं वा विष्णुमेव वा ॥ ४९ ॥

ग्रामं प्रदक्षिणं नीत्वा स्नापयित्वा निवेदयेत् ।
तिलपद्मविधिः तस्मिन्मासे सिते पक्षे पञ्चमी विजयाह्वया ॥ ५० ॥

तिलपद्मविधिं कृत्वा दानं कुर्यात्तु तत्र वै ।
पूर्वरात्रौ तु देवेशमर्चयित्वा यथाक्रमम् ॥ ५१ ॥

हवींष्यपि निवेद्यैव बद्ध्वा प्रतिसरं पुनः ।
पूर्ववच्छाययेद्देवं रात्रिशेषं नयेद्बुधः ॥ ५२ ॥

प्रभाते देवमुत्थाप्य कलशैः स्नापयेत्पुनः ।
संस्थाप्य मण्डपे देवं प्रणम्यैवानुमान्य च ॥ ५३ ॥

विकीर्य प्रमुखे धान्यं द्विहस्तायतविस्तृते ।
नववस्त्रे समाकीर्य कृष्णाजिनसमन्विते ॥ ५४ ॥

तिलभारं तदर्धं वा तदूर्ध्वे मण्डलाकृति ।
विकीर्यात्र लिखेत्पद्मं साष्टपत्रं सकर्णिकम् ॥ ५५ ॥

सुवर्णपद्मं कृत्वा तु तिलपद्मोपरि न्यसेत् ।
आढकैश्शालिधान्यैश्च पूर्णपात्राणि षोडश ॥ ५६ ॥

ऐन्द्रादि च तथैशान्तं सशालि परितो न्यसेत् ।
आढकं तैलमाहृत्य तदर्धं वा घृतं तथा ॥ ५७ ॥

तत्समं दधि सङ्गृह्य पात्रेषु च पृथक्पृथक् ।
दक्षिणे सन्न्यसेत्तैलमुत्तरे तु घृतं न्यसेत् ॥ ५८ ॥

पश्चिमे दधि सन्न्यस्य देवदेवं प्रणम्य च ।
आत्मसूक्तं जपित्वा तु पूजयित्वाऽष्टविग्रहैः ॥ ५९ ॥

प्रणम्य देवमावाह्य पद्ममध्ये तु पूर्ववत् ।
प्रागादि पुरुषादींश्च तथैकादशविग्रहैः ॥ ६० ॥

ऐन्द्राद्यैशान्तमावाह्य दिग्देवानर्चयेत्ततः ।
'अतो देवा' दिसंयुक्तं विष्णुसूक्तं जपेत्पुनः ॥ ६१ ॥

बिम्बे देवं समारोप्य चान्यानुद्वासयेत्क्रमात् ।
यजमानोऽथ तत्काले दद्यादाचार्यदक्षिणाम् ॥ ६२ ॥

विष्णुभक्तियुतं दान्तं दयाद्यात्मगुणैर्युतम् ।
नित्यस्वाध्यायसंयुक्तं सर्वावयवसंयुतम् ॥ ६३ ॥

विप्रमाहूय तत्काले ध्यात्वा तं देवमव्ययम् ।
तिलपद्मं ददेत्तस्मै देवदेवस्य सन्निधौ ॥ ६४ ॥

महाहविः प्रभूतं वा यथाशक्ति निवेदयेत् ।
परीत्य मन्दिरं पश्चात् जीवस्थाने निवेशयेत् ॥ ६५ ॥

**यज्ञाधिकारे** सम्प्रोक्तं तद्विधानं सुविस्तृतम् ।
धूपदानविशेषः धूपदानं तु तन्मासि देवदेवस्य शस्यते ॥ ६६ ॥

फाल्गुनमासार्चनम् फाल्गुनोत्तरफल्गुन्योः श्रिया सार्धं जनार्दनम् ।
स्नापयित्वोत्सवं कृत्वा समभ्यर्च्य निवेदयेत् ॥ ६७ ॥

अथवा शुद्धतोयैश्च स्नापयित्वा निवेदयेत् ।
तद्दिने श्रियमभ्यर्च्य श्रीकामः श्रियमाप्नुयात् ॥ ६८ ॥

देवस्य फाल्गुने मासे गन्धदानं विशिष्यते ।
चैत्रे दमनोत्सवः पौर्णमास्यां तथा चैत्र्यां कुर्याद्दमनकोत्सवम् ॥ ६९ ॥

पूर्वस्मिन्नेव दिवसे अलङ्कृत्यालयं शुभम् ।
माला दमनकस्यैव विविधाः कारयेच्छुभाः ॥ ७० ॥

रात्रिपूजावसाने तु देवमास्थानमण्डपे ।
समभ्यर्च्य निवेद्यैव बद्ध्वा प्रतिसरामपि ॥ ७१ ॥

त्रिलोकमण्डलं हृद्यं देवाग्रे परिकल्पयेत् ।
माला दमनकस्यैव मेरुमूर्धनि विन्यसेत् ॥ ७२ ॥

अष्टौ कुलाचलाग्रेषु गन्धोदकघटान् न्यसेत् ।
तद्बहिष्षोडशपदे दिक्षु द्वारं विसृज्य च ॥ ७३ ॥

पञ्चगव्यादिद्रव्याणि न्यसेच्छेषपदेषु च ।
तस्याग्रे पौण्डरीकाग्निकुण्डं कृत्वा यथाविधि ॥ ७४ ॥

आघारं विधिवत्कृत्वा देवेशं शाययेत्पुनः ।
द्रव्याधिदेवानभ्यर्च्य वसन्तं काममर्चयेत् ॥ ७५ ॥

वैष्णवं विष्णुसूक्तञ्च पौरुषं सूक्तमेव च ।
श्रीभूमिसूक्तमन्त्रांश्च यद्देवादींस्तथैव च ॥ ७६ ॥

जयादीन् परिषद्देवमूर्तिमन्त्रानथापि वा ।
एवं हुत्वा निशां नीत्वा प्रातस्स्नात्वा यथाविधि ॥ ७७ ॥

संस्नाप्य कलशैर्देवं गन्धोदकघटैरपि ।
वस्त्राद्यैरप्यलङ्कृत्य मुहूर्ते तु शुभोदये ॥ ७८ ॥

अधिवासितमालास्तास्समादाय समाहितः ।
देवस्य विष्णुसूक्तेन दद्याद्भक्तिसमन्वितः ॥ ७९ ॥

सर्वेषामपि बेराणां तथा परिषदामपि ।
माला दमनकस्यैव दद्यात्तन्मन्त्रमूर्तिभिः ॥ ८० ॥

ग्रामं प्रदक्षिणं कुर्यात् सर्वालङ्कारसंयुतम् ।
नीत्वाऽऽलयं ततो देवं संस्थाप्यास्थानमण्डपे ॥ ८१ ॥

संस्नाप्य गन्धतोयेन समभ्यर्च्य निवेदयेत् ।
अन्तहोमावसानेऽग्निर्नित्यकुण्डे प्रणीयताम् ॥ ८२ ॥

वसन्तोत्सवः

पुष्पदानं प्रशस्तं स्यादस्मिन्मासे तु शार्ङ्गिणः ।
तद्दिनञ्च समारभ्य ज्येष्ठे मूलावसानकम् ॥ ८३ ॥

तत्तत्कालोद्भवैर्द्रव्यैर्वसन्तोत्सवमाचरेत् ।
देवं मध्याह्नपूजान्ते संस्थाप्याऽस्थानमण्डपे ॥ ८४ ॥

संस्नाप्य गन्धतोयेन वस्त्रं परिमितं लघु ।
समाच्छाद्य समभ्यर्च्य पुष्पैस्तत्कालसम्भवैः ॥ ८५ ॥

निवेद्य पायसादीनि कृत्वा धामप्रदक्षिणम् ।
पक्वानि कदलीचूतपनसानां फलानि च ॥ ८६ ॥

अपूपादीनि भक्ष्याणि नारिकेलफलाम्बु च ।
निवेद्याऽचमनं दत्वा मुखवासं निवेदयेत् ॥ ८७ ॥

अर्चापीठे तु देवेशं मन्त्रवत्स्थापयेद्बुधः ।
ज्येष्ठे मूलादि पर्वान्तं नित्यमेवं समाचरेत् ॥ ८८ ॥

वैशाखोत्सवः

वैशाखे पौर्णमास्यान्तु स्नपनादीनि पूर्ववत् ।
कृत्वा तु पूर्ववद्देवं संस्थाप्याऽस्थानमण्डपे ॥ ८९ ॥

आसनादिभिरभ्यर्च्य सप्तविंशतिविग्रहैः ।
पायसादिनिवेद्यञ्च प्रभूतञ्च निवेदयेत् ॥ ९० ॥

मरीचिजीरकगुडैर्नारिकेलरसेन च ।
संस्कृतं भूरि सर्पिश्च दद्याच्चूतफलं बहु ॥ ९१ ॥

पानीयाचमनान्ते तु मुखवासं निवेदयेत् ।
आलयं परितः कृत्वा देवदेवस्य चोत्सवम् ॥ ९२ ॥

जीवस्थने प्रतिष्ठाप्य नित्यपूजां समाचरेत् ।
अस्मिन् पानीयदानन्तु प्रशस्तमभिधीयते ॥ ९३ ॥

ज्येष्ठोत्सवः

ज्येष्ठमासे तु मूलायां वस्त्रदानं हरेः स्मृतम् ।
तन्मासे पौर्णमास्यान्तु गन्धोदैरभिषिच्य च ॥ ९४ ॥

नववस्त्रैरलङ्कृत्य समभ्यर्च्य निवेदयेत् ।

आषाढोत्सवः

आषाढे पौर्णमास्यान्तु कुर्यादेकाहिकोत्सवम् ॥ ९५ ॥

स्नापयित्वा समभ्यर्च्य हवींष्यपि निवेदयेत् ।
अर्घ्यदानं प्रशस्तं स्याद्देवस्याषाढमासि वै ॥ ९६ ॥

श्रावणोत्सवः श्रावणे श्रवणर्क्षे तु देवदेवस्य यत्नतः ।
उत्सवस्नपनादीनि पूर्ववत्कारयेद्बुधः ॥ ९७ ॥

श्रावणे मासि तस्मिंश्च कृष्णपक्षे विशेषतः ।
अष्टमी रोहिणीयुक्ता जयन्ती रहिताऽथवा ॥ ९८ ॥

तत्र चन्द्रोदये विष्णुं कृष्णविग्रहमर्चयेत् ।
विष्णुं चतुर्भुजं वाऽथ तथा संस्नाप्य वारिभिः ॥ ९९ ॥

निवेद्य प्रचुरं क्षीरं हविस्सम्यङ्निवेद्य च ।
बद्ध्वा प्रतिसरं तद्वच्छाययेत्पुरुषोत्तमम् ॥ १०० ॥

अहोरात्रमुपोष्यैव प्रातस्स्नात्वा यथाविधि ।
उत्सवोक्तप्रकारेण देवस्योत्सवमाचरेत् ॥ १०१ ॥

संस्नाप्य कलशैर्विष्णुमास्थाने स्थापयेद्बुधः ।
समभ्यर्च्य हविर्दद्यात्पायसं गौल्यमेव वा ॥ १०२ ॥

अर्पयेन्मुखवासान्ते जीवस्थाने निवेशयेत् ।
(पारणन्तु ततः कुर्यात् स वै सायुज्यमाप्नुयात्) ॥ १०३ ॥

सर्वान्कामानवाप्नोति सर्वदानफलं लभेत् ।
एवं यः कुरुते भक्त्या विष्णुपूजाञ्च तद्दिने ॥ १०४ ॥

सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ।
अतस्सर्वप्रयत्नेन जयन्त्यामुत्सवं चरेत् ॥ १०५ ॥

धूपदानं प्रशस्तं स्याच्छ्रावणे मासि शार्ङ्गिणः ।
यो नित्यं परया भक्त्या धूपदानं समाचरेत् ॥ १०६ ॥

सोऽपि संवत्सरं धूपफलमेति न संशयः ।
भाद्रपदोत्सवः श्रवणद्वादशीयोगे मासि भाद्रपदे तथा ॥ १०७ ॥

संवत्सरार्चनादोषशान्त्यर्थं केशवस्य च ।
राजराष्ट्राभिवृद्ध्यर्थं सर्वमङ्गलकारणम् ॥ १०८ ॥

सर्वदोषोपशमनं प्रोक्तं यद्ब्रह्मणा पुरा ।
पवित्रारोपणं कुर्यात्सर्वदोषोपशान्तये ॥ १०९ ॥

उत्सवोक्तप्रकारेण कुर्यात्तच्छ्रवणे बुधः ।
अस्मिन्मासे हविर्दानं प्रशस्तं केशवस्य तु ॥ ११० ॥

मासेऽस्मिन्नारभेतैव श्रावणं व्रतमुत्तमम् ।
मार्गशीर्षं समारभ्य कुर्यादेकादशीव्रतम् ॥ १११ ॥

एकभुक्तस्तु पूर्वेऽह्नि प्रातस्स्नात्वा यथाविधि ।
युग्मप्रदक्षिणं कुर्याद्देवदेवं प्रणम्य च ॥ ११२ ॥

केशवादीनि नामानि जपेदेकाग्रमानसः ।
मार्गशीर्षं समारभ्य क्रमान्मासेषु वै पुनः ॥ ११३ ॥

अथवा पौरुषं सूक्तमुपोष्य व्रतमाचरेत् ।
प्रातस्संस्नाप्य देवेशं समभ्यर्च्य निवेद्य च ॥ ११४ ॥

दानं कृत्वा द्विजेन्द्रेभ्यः पारणं पुनराचरेत् ।
ततस्सर्वेषु मासेषु क्षुतप्रस्खलनादिषु ॥ ११५ ॥

जपेत्तन्मासनाम्नैव देवेशं मनसा स्मरन् ।
विष्ण्वादिपञ्चमूर्त्यन्तैः स्नपनञ्चार्चनादिकम् ॥ ११६ ॥

कुर्यात्तन्मासनाम्नैव ब्राह्मणेभ्यस्तथैव च ।
एवं वर्षे तु सम्पूर्णे मासि भाद्रपदे तथा ॥ ११७ ॥

श्रवणे स्नापयेद्देवं शताष्टकलशैरपि ।
महाहविः प्रभूतं वा संयुक्तं पायसादिभिः ॥ ११८ ॥

निवेद्य मुखवासान्ते दद्यात्पुष्पाञ्जलीन् बहून् ।
कृत्वाऽन्नदानं विप्रेभ्यः पारणं पूर्ववच्चरेत् ॥ ११९ ॥

एकादशीव्रतं कुर्वन् सम्पूर्णे वत्सरे तथा ।
द्वादश्यां मार्गशीर्षे तु स्नपनादीनि कारयेत् ॥ १२० ॥

एवं यः कुरुते भक्त्या महापापैर्विमुच्यते ।
अन्ते विमानमारुह्य विष्णोः पदमवाप्नुयात् ॥ १२१ ॥

मार्गशीर्षश्च मासोऽयं मासानां श्रेष्ठ ईरितः ।
द्वादशी श्रवणं तस्मिन्नमावास्या तथैव च ॥ १२२ ॥

उपवासव्रतं कुर्यात्तस्मिन्नान्यत्समाचरेत् ।
आश्वयुजार्चनम् श्रवणञ्चाश्वयुङ्मासि सर्वपापहरं वरम् ॥ १२३ ॥

मत्स्यकूर्मवराहाणामाविर्भावदिनं स्मृतम् ।
उत्सवस्नपनादीनि कुर्यात्तत्रापि शार्ङ्गिणः ॥ १२४ ॥

मुखवासं हरेर्दद्यात् मासेऽस्मिन्नित्यमेव च ।
सर्वेष्वपि च मासेषु मासर्क्षेष्वधिकार्चनम् ॥ १२५ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे पुण्यर्क्षपूजन आग्रयण हविष्पाकविधान सर्वमासार्चनविधिर्नाम अष्टादशोऽध्यायः[1] ।

1. एकोनविंशोऽध्यायः ख.

# एकोनविंशोऽध्यायः

विशेषार्चनम्

अतः परं प्रवक्ष्यामि विशेषाराधनं हरेः ।
शान्तिकं पौष्टिकं काम्यमिति भिन्नं त्रिधाऽर्चनम् ॥ १ ॥

व्याधिदुर्भिक्षदुस्स्वप्नदुर्निमित्तप्रशान्तये ।
शत्रुपीडोपशान्त्यर्थं तथाऽवग्रहशान्तये ॥ २ ॥

अन्यदोषोपशान्त्यर्थं शान्तिकं समुदाहृतम् ।
धनधान्यादिवृद्ध्यर्थं कृतं पौष्टिकमुच्यते ॥ ३ ॥

यत्किञ्चिदभिकांक्ष्यार्थं[1] कृतं काम्यमुदाहृतम् ।
पूर्वाह्णे शान्तिकं कुर्यान्मध्याह्ने पौष्टिकं तथा ॥ ४ ॥

काम्यं स्यादपराह्णे तु न कुर्यान्निशि किञ्चन ।
पूर्वोक्तेन प्रकारेण कारयित्वाऽङ्कुरार्पणम् ॥ ५ ॥

अङ्कुरार्पणकादूर्ध्वं द्रव्याण्यपि समाहरेत् ।
मण्डपं वा प्रपां वाऽपि कूटं वाऽपि यथोचितम् ॥ ६ ॥

कारयेत्तत्र देशे तु स्नपनालयचोदिते ।
पूर्वरात्रे तु देवेशं समभ्यर्च्य यथाविधि ॥ ७ ॥

बद्ध्वा प्रतिसरं तद्वच्छाययित्वा ततः परम् ।
श्वभ्रस्य परितः पङ्क्तिं कल्पयेत्स्नपनोक्तवत् ॥ ८ ॥

[2]द्रव्याणि च मृदाद्यानि तत्र सन्न्यस्य पूर्ववत् ।
(देवाग्रे दक्षिणे वाऽपि पौण्डरीकं प्रकल्पयेत् ॥ ९ ॥

देवं श्वभ्रे प्रतिष्ठाप्य स्नापयित्वाऽथ पूर्ववत् )
मथितं लौकिकं वाऽग्निं कुण्डे चाऽधाय पूर्ववत् ॥ १० ॥

---

1. अभिलक्ष्यार्थं. आ. 2. द्रव्याण्यपि च धान्यानि. आ.

आघारान्ते सुहोतव्यं मूलमन्त्रद्वयेन वै ।
आज्याश्वत्थसमिद्दूर्वाचरुभिश्च पृथक्पृथक् ॥ ११ ॥

प्रत्येकमयुतं प्रोक्तमुत्तमं मुनिसत्तमाः ।
अष्टोत्तरसहस्रन्तु मध्यमं परिकीर्तितम् ॥ १२ ॥

अष्टोत्तरशतं न्यूनमेवं त्रिविधमीरितम् ।
जाज्वल्यमानमकुटं [1]दीप्यमानविभूषणम् ॥ १३ ॥

श्यामाम्बरधरं [2]देवं तप्तहाटकसन्निभम् ।
रक्तास्यपाणिपादाक्षं प्रणवात्मकमव्ययम् ॥ १४ ॥

शङ्खचक्रधरं देवं परात्परतरं विभुम् ।
इत्येवं मनसा ध्यात्वा होमकर्म समाचरेत् ॥ १५ ॥

वैष्णवं विष्णुसूक्तञ्च पौरुषं सूक्तमेव च ।
ब्राह्मं रौद्रं जयादींश्च जुहुयात्सर्पिषा सकृत् ॥ १६ ॥

अष्टोत्तरशतं हुत्वा श्रीसूक्तेनापि पौष्टिके ।
द्वात्रिंशत्प्रस्थसम्पूर्णं नवं कुम्भं प्रगृह्य च ॥ १७ ॥

तन्तुना परिवेष्ट्याद्भिः पूरयित्वा यवान्तरम् ।
[3]सौवर्णं विष्णुरूपञ्च श्रीभूम्योश्च पृथक्पृथक् ॥ १८ ॥

सन्न्यसेद्विष्णुगायत्र्या प्रत्येकञ्चाष्टनिष्कतः ।
तानि व्यङ्गुलमात्राणि मङ्गलान्यायुधानि च ॥ १९ ॥

निक्षिपेत्पूर्ववद्धीमान् रत्नानि च विशेषतः ।
क्षौमाभ्यामथ पट्टाभ्यां सूक्ष्मवस्त्रद्वयेन वा ॥ २० ॥

---

1. दिव्याभरणभूषितम् आ. 2. सौम्यं आ. 3. एतदारभ्य सार्धैकोनविंशश्लोकपर्यन्तो भागः इत्थं पठ्यते. ख. कोशे ‘ सूक्ष्मवस्त्रद्वयेनैव वेष्टयित्वा तु पूर्ववत् । गन्धपुष्पाक्षतैर्युक्तं रक्तचूत (कूर्च) समन्वितम् । अश्वत्थप्लक्षयोश्चैव अपामार्गस्य पल्लवैः । कुम्भोदके प्रतिष्ठाप्य पूर्ववत्सुसमाहितः । वारुणं मण्डलं ध्यात्वा वकारं बीजसंयुतम् ’ इति ।

कुम्भस्य कण्ठमावेष्ट्य पुष्पमालापरिष्कृतम् ।
अश्वत्थपल्लवं कूर्चं न्यसेद्दूर्वाङ्कुराण्यपि ॥ २१ ॥

प्रणवेन समावेष्ट्य मूलमन्त्रं द्वयं जपेत् ।
अष्टोत्तरसहस्रन्तु देवेशं मनसा स्मरन् ॥ २२ ॥

'नमो वाचे' समुच्चार्य 'शन्नो वात' इतीर्य च ।
दशकृत्वोऽभिमन्त्र्यैव नित्यमेवं समाचरेत् ॥ २३ ॥

आस्थानमण्डपे देव स्थापयेत्पद्ममण्डले ।
समभ्यर्च्य हवींष्यत्र पायसानि निवेदयेत् ॥ २४ ॥

पानीयाचमनं दत्वा पश्चात्ताम्बूलमेव च ।
वैष्णवं विष्णुसूक्तञ्च पौरुषं सूक्तमेव च ॥ २५ ॥

नारायणानुवाकञ्च सूक्तमेकाक्षरादिकम् ।
सञ्जपन्विष्णुगायत्रीं 'नमो ब्रह्मण' इत्यपि ॥ २६ ॥

द्वादशाष्टाक्षराभ्याञ्च दत्वा पुष्पाञ्जलिं बहु ।
दण्डाङ्गेन नमस्कृत्य 'क्षमस्वे' त्यनुमान्य च ॥ २७ ॥

अर्चापीठे प्रतिष्ठाप्य नित्यपूजां समाचरेत् ।
एवं मासं त्रिसप्ताहं पक्षं वाऽथ त्रयोदश ॥ २८ ॥

एकादशदिनं वाऽपि नवाहं वा तथैव च ।
सप्ताहं वाऽथ पञ्चाहं त्रिदिनं वा यथाविधि ॥ २९ ॥

स्नपनञ्चार्चनं होमं तथा कुम्भाभिमर्शनम् ।
उत्तमं कुम्भहोमाभ्यां तथा कुम्भेन मध्यमम् ॥ ३० ॥

नित्यमेवं प्रकुर्वीत समाप्तदिवसोत्सवम् ।
यजमानं तथाऽऽचार्यो देवदेवस्य सन्निधौ ॥ ३१ ॥

स्नापयेत्कुम्भतोयेन प्रोक्षयेद्वा सहस्रशः ।
मासि मासि स्वजन्मर्क्षे कुर्यादेवं यथाविधि ॥ ३२ ॥

आयुरारोग्यमैश्वर्यमचलां श्रियमाप्नुयात् ।
एवं यः कारयेद्भक्त्या देवदेवस्य शार्ङ्गिणः ॥ ३३ ॥

व्याधयस्तस्य नश्यन्ति ग्रहपीडाद्युपद्रवाः ।
दुर्निमित्तानि दुःस्वप्नचोरशत्रुभयादयः ॥ ३४ ॥

उपद्रवास्तथा चान्ये प्रणश्यन्ति न संशयः ।
धर्मार्थकाममोक्षाश्च सिद्ध्यन्त्येवं कृते सति ॥ ३५ ॥

पौष्टिके चैव काम्ये च नैव कुम्भाभिमर्शनम् ।
एवं कर्तुमशक्तश्चेदयुग्मदिनसङ्ख्यया ॥ ३६ ॥

शुद्धतोयाभिषेकञ्च पूजनञ्च निवेदनम् ।
नित्याग्निकुण्डे होमञ्च कुर्यादिति च केचन ॥ ३७ ॥

नित्याग्निहोमे विच्छिन्ने पौण्डरीके तु शान्तिके ।
काम्ये च पौष्टिके चैव लौकिकाग्नौ समाचरेत् ॥ ३८ ॥

भक्तबिम्बस्थापनम् (अतः परं प्रवक्ष्यामि भक्तानां स्थापनाविधिम् ।
जटिनं शिखिनं वाऽपि ब्राह्मणं परिकल्पयेत् ॥

प्राञ्जलिं भावनायुक्तं नासान्ताहितलोचनम् ।
क्षत्रियं मकुटोपेतं वैश्यमुद्बद्धकुन्तलम् ॥

कुर्यादन्त्यानुलोमादीन् रोमचूडासमन्वितान् ।
अथवा मुण्डितान्वापि भगवद्ध्यानतत्परान् ॥

यदाकारेण देवेशं पश्यंतस्ते तदाकृतीन् ।
अष्टतालोक्तमानेन द्विजातीन् परिकल्पयेत् ॥

मध्यमेनैव शूद्रादीन् कारयेत्तु यथाविधि ।
भक्तानां ध्रुवबेरस्य कौतुकस्य तथैव च ॥

प्रमाणं पूर्वमेवोक्तं ध्रुवबेरवशात्तथा ।
कृत्वैव भक्त्या बिम्बन्तु प्रतिष्ठामाचरेत्पुनः ॥

औपासनाग्निकुण्डञ्च शय्यावेदिं तदग्रतः ।
अङ्कुरार्पणकादूर्ध्वं अक्ष्युन्मेषादिकाः क्रियाः ॥

तत्तन्नाम्ना प्रकुर्वीत पूर्वरात्रौ विशेषतः ।
कुम्भं संसाध्य विधिना समावाह्य तु तज्जले ॥

संस्नाप्य सप्तकलशैर्वेदिमारोप्य पूर्ववत् ।
बद्ध्वा प्रतिसरं पश्चाच्छाययेदप्रमादतः ॥

हौत्रं प्रशंस्य विधिना प्रणिधावुत्तरे तथा ।
तस्य नाम्ना समावाह्य निरुप्याज्याऽहुतीर्यजेत् ॥

विष्वक्सेनस्य मन्त्राभ्यां शतमष्टोत्तरं यजेत् ।
तस्य नाम समुच्चार्य विष्णुभक्तविशेषणम् ॥

चतुर्थ्यन्तं तथाऽऽज्येन शतमष्टोत्तरं यजेत् ।
प्रातः स्नात्वा विधानेन यागशालां प्रविश्य च ॥

भक्तबिम्बं समादाय कुम्भेन सह सन्नयेत् ।
तत्र संस्थाप्य तन्नाम्ना कुम्भादावाहनं चरेत् ॥

तन्नामाद्यक्षरं तस्य बीजाक्षरमुदाहृतम् ।
समभ्यर्च्य निवेद्यैव नित्यं विधिवदर्चयेत् ॥

केवलं कौतुकं वाऽपि स्थापयित्वा समर्चयेत् ।
केवलं कौतुकं चेत्तत् औत्सवानुगुणं चरेत् ॥

ब्राह्मणादिप्रतिष्ठायां तेषामग्निर्विधीयते ।
अन्यभक्तप्रतिष्ठायां लौकिकाग्निर्विधीयते ॥

शूद्रादीनां विना होममिति केचिद्वदन्ति वै ।
उत्सवे देवदेवेन सार्धं बिम्बं नयेद्बुधः ॥

विष्ण्वर्चनावशिष्टैस्तु द्रव्यैर्नित्यं समर्चयेत् ।
बलिहोमावशिष्टं तत् पात्रशेषं हविर्ददेत् ॥

येषां सायुज्यसिद्धिस्तु तेषां देववदर्चनम् ।
येषां सारूप्यसिद्धिस्तु तेषामपि तथाऽर्चनम् ॥

येषां सामीप्यसालोक्ये तेषां शान्तवदर्चनम् ।
अन्येषां केवलं नाम्ना पूजनं परिभाषितम् ॥

देवोपभुक्तमाल्यानि वस्त्राणि च ददेत्तथा ।
एवं भक्तप्रतिष्ठां यः कारयेद्भक्तिसंयुतः ॥

सामीप्यं पदमाप्नोति [1] देवदेवस्य शार्ङ्गिणः ।
तद्वंशजानां भवति भक्तिः शार्ङ्गिणि निश्चला) ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे विशेषाराधन (भक्तप्रतिष्ठा) विधिर्नाम एकोनविंशोऽध्यायः [2] ।

---

1. देवदेवस्य आ. 2. द्वाविंशोऽध्यायः ख.

# विंशोऽध्यायः

भूपरीक्षादि-प्रायश्चित्तम्

अतः परं प्रवक्ष्यामि भूपरीक्षादिनिष्कृतिम् ।
प्रायो दोषसमुत्पत्तिः[1]चित्तिस्तस्य निरासनम् ॥ १ ॥

तस्य दोषस्य सन्धानं प्रायश्चित्तमितीरितम् ।
तदेव दिनमारभ्य नवमे वाऽथ सप्तमे ॥ २ ॥

पञ्चमेऽहनि वा कुर्यात्पूर्वमेवाङ्कुरार्पणम् ।

अङ्कुरार्पणहीने

अङ्कुरार्पणहीने तु भूपरीक्षादिकर्मणाम् ॥ ३ ॥

ब्रह्मादीनान्तु षण्णां वै मन्त्रैर्हुत्वा तु वैष्णवैः ।
पालिकाधिपतीनाञ्च जयादीनाञ्च मूर्तिभिः ॥ ४ ॥

कृत्वाऽङ्कुरार्पणं पश्चात्तत्तत्कर्म समाचरेत् ।
पालिकानामभावे तु शरावान्वा समाहरेत् ॥ ५ ॥

दर्भैर्दग्धोपयुक्तान्वा गृह्णोयादिति केचन ।
विशेषार्चनहीने तु द्विगुणञ्च समर्चयेत् ॥ ६ ॥

अष्टोपचारैरभ्यर्च्य हविस्सम्यङ्निवेदयेत् ।
विशेषार्चनमित्युक्तं सर्वत्र द्विजसत्तमाः ॥ ७ ॥

विशेषेणार्चनं कुर्यात्कौतुके चाङ्कुरार्पणे ।
अन्यालयाङ्गबिम्बानामुत्सवाद्यङ्कुरार्पणे ॥ ८ ॥

विशेषतोऽर्चनं यत्तत्बेर एव समाचरेत् ।
प्रमाणहीनायां पङ्क्तौ यजेत्पङ्क्तीशमूर्तिभिः ॥ ९ ॥

सप्तहस्तप्रमाणञ्चेत् स्थण्डिलं कल्पयेत्पदम् ।
पञ्चहस्तप्रमाणञ्चेदुपपीठपदं नयेत् ॥ १० ॥

---

1. चित्तम् क.

पङ्क्तिस्त्रिहस्तमाना चेत्कुर्यान्नवपदं तथा ।
सप्तसप्तपदे मध्ये चैकं ब्राह्ममुदाहृतम् ॥ ११ ॥

परितोऽष्टौ जयादीनां तद्बहिष्षोडशे पदे ।
कल्पयित्वा तु तद्बाह्ये चतुर्विंशतिके पदे ॥ १२ ॥

दिक्षु द्वाराणि चत्वारि शेषादीनां पदाष्टकम् ।
द्वाराणां पार्श्वयोश्शेषाः पालिकास्थापनाय वै ॥ १३ ॥

शेषञ्च वक्रतुण्डञ्च प्राग्द्वारोभयपार्श्वयोः ।
वामदक्षिणयोः पूज्यौ चक्रवीशौ तु दक्षिणे ॥ १४ ॥

पङ्क्तीशशङ्खौ वारुण्यां सोमशान्तावुदग्दिशि ।
एवमेव प्रकुर्वीत सप्तसप्तपदे तथा ॥ १५ ॥

पञ्चपञ्चपदे मध्ये ब्रह्मणश्चैकमुच्यते ।
परितोऽष्टौ जयादीनां तद्बहिष्षोडशांशके ॥ १६ ॥

दिक्षु द्वाराणि चत्वारि शेषादींस्तेषु पूजयेत् ।
शेषविघ्नेशपङ्क्तीशसोमांस्तद्द्वारपार्श्वगान् ॥ १७ ॥

ईशानसोमयोर्मध्ये विष्वक्सेनं समर्चयेत् ।
शिष्टानि पालिकादीनां स्थापनाय प्रकल्पयेत् ॥ १८ ॥

मध्ये नवपदे चैकं ब्रह्मणः परिकीर्तितम् ।
शेषादीनां जयादीनां पालिकानां तथैव च ॥ १९ ॥

तद्बहिश्च पदेष्वष्टस्वष्टावेवात्र पालिकाः ।
अङ्कुरार्पणमारभ्य तृतीये पञ्चमेऽथवा ॥ २० ॥

सप्तमे नवमे वाऽह्नि तत्तत्कर्म समाचरेत् ।
अतश्चोर्ध्वमयुग्मेषु दिनेष्वेव यथाविधि ॥ २१ ॥

महाशान्तिञ्च हुत्वा तु कृत्वा सद्योऽङ्कुरार्पणम् ।
ब्राह्मणान्भोजयित्वा तु तत्तत्कर्म समाचरेत् ॥ २२ ॥

कर्मणां साधिवासानां सद्यश्चेदङ्कुरार्पणम् ।
कारयेत्पूर्वरात्रौ तु पूर्वमेवाधिवासनम् ॥ २३ ॥

कृत्वाऽक्षिमोचनं पश्चात् जलादिष्वधिवास्य च ।
वास्तुहोमादिकं कर्म पूर्ववत्सर्वमाचरेत् ॥ २४ ॥

दिनद्वयेऽप्यलब्धे तु सद्यः कर्तुं त्वरान्वितः ।
कृत्वाऽङ्कुरार्पणं सद्यो नयनोन्मीलनादिकम् ॥ २५ ॥

कृत्वा सद्यस्तदह्नेव स्थापयेदिति केचन ।
भूपरीक्षायाम् भूपरीक्षामकृत्वा तु कृतं तत्कर्षणं यदि ॥ २६ ॥

भूसूक्तं भूमिदैवत्यं हुत्वा भूमिं परीक्ष्य च ।
पुनश्च कर्षणं कुर्यादिति पूर्वजशासनम् ॥ २७ ॥

अकाले भूपरीक्षायां तथैव जुहुयाद्बुधः ।
परीक्षेत शुभे काले भूमिं पूर्वोक्तमार्गतः ॥ २८ ॥

भूपरीक्षणकाले तु दुर्निमित्तसमुद्भवे ।
वैष्णवं विष्णुसूक्तञ्च पौरुषं सूक्तमेव च ॥ २९ ॥

हुत्वा तु विष्णुगायत्र्या सावित्र्याऽष्टशतं यजेत् ।
शाकुनं स्वस्तिसूक्तञ्च दशकृत्वो जपेत्तथा ॥ ३० ॥

कन्यायां भोजने हीने दौर्गं हुत्वा तु भोजयेत् ।
कन्याया दीपविच्छेदे पतने पङ्कजस्य च ॥ ३१ ॥

हुत्वा श्रीसूक्तदैवत्ये पश्चात्कर्म समाचरेत् ।
गृह्णीयात्पङ्कजाभावे कुमुदं धवलं [1]नवम् ॥ ३२ ॥

आरभेत क्रियास्सर्वास्समभ्यर्च्य विनायकम् ।
विनायकार्चने हीने तन्मन्त्रेण शतं यजेत् ॥ ३३ ॥

1. शुभं क.

कर्षणे

कर्षणे च कृते काले क्रियाहीने तथैव च ।
विपर्यासे च सर्वत्र भूसूक्तं भूमिदैवतम् ॥ ३४ ॥

हुत्वा तत्तत्प्रकुर्वीत तत्तन्मन्त्रं समुच्चरन् ।
उक्तवृक्षस्य चालभे हलादीतां यथाक्रमम् ॥ ३५ ॥

तद्वृक्षाधिपमभ्यर्च्य शक्तितो दक्षिणां ददेत् ।
वैष्णवं भूमिदैवत्यं यजेत्तत्र विधानतः ॥ ३६ ॥

उक्तप्रमाणहीनेषु हलादिषु तथैव च ।
प्राजापत्यञ्च याम्यञ्च रौद्रं भौतिकसंयुतम ॥ ३७ ॥

आदावन्ते च जुहुयाद्व्याहृत्यन्तं सवैष्णवम् ।
भेदे छेदे तथा तेषां रज्जुच्छेदे तथैव च ॥ ३८ ॥

[1]वृषभाङ्गविहीने च पञ्चाग्नौ वैष्णवं यजेत् ।
ब्राह्मञ्च वीशदैवत्यं प्राजापत्यञ्च भौतिकम् ॥ ३९ ॥

आर्षानपि च मन्त्रांश्च तद्दैवत्यसमन्वितम् ।
कापिलेन घृतेनैव महाव्याहृतिभिर्यजेत् ॥ ४० ॥

देवेशमर्चयित्वा तु रूप्यं दद्याद्यथोदयम् ।
व्रणयुक्ते तु तत्काले सूक्ते वैष्णवपौरुषे ॥ ४१ ॥

मिन्दाहुती च विच्छिन्नं हुत्वाऽचार्याय दीयताम् ।
निष्काधिकसुवर्णन्तु दक्षिणां देवसन्निधौ ॥ ४२ ॥

सुप्ते मूढे तथा भ्रान्ते दुर्गमे पतिते वृषे ।
रुदिते विष्णुगायत्र्या पञ्चाग्नौ तु सहस्रकम् ॥ ४३ ॥

हुत्वा तु दक्षिणां दद्यात् केशदन्तनखादिषु ।
कपालभस्मपाषाणतुषशल्येषु सत्सु च ॥ ४४ ॥

1. वृषभावङ्गहीनौ चेत् क.

विसृज्य तानि सर्वाणि प्रोक्षणैः प्रोक्षयेत्तथा ।
पञ्चगव्यैस्समभ्युक्ष्य वास्तुहोमं यजेत्पुनः ॥ ४५ ॥

कर्षणे तु विहाने तु हीने बीजनिवापने ।
सद्यः कर्तुमशक्तो वा कालक्षेपभयात्तथा ॥ ४६ ॥

पञ्चाग्नौ रात्रिसूक्तञ्च विष्णुसूक्तञ्च वैष्णवम् ।
गोदानसूक्तं विच्छिन्नं हुत्वा बीजं प्रदाय च ॥ ४७ ॥

कर्षयित्वा भुवं पश्चात् पलालानि तृणानि च ।
विकीर्य भुवि सर्वत्र गोगणेभ्यो निवेदयेत् ॥ ४८ ॥

उप्तेषु तेषु नष्टेषु [1]वन्ध्यत्वादप्ररोहिषु ।
पूर्वोक्तनिष्कृतिं हुत्वा तृणान्यास्तीर्य तत्र वै ॥ ४९ ॥

गोगणेभ्यो निवेद्यैव पश्चात्कर्म समाचरेत् ।
एकदेशक्रियाहीने कर्षणे बीजवापने ॥ ५० ॥

तत्कर्मणाञ्च सर्वेषां प्रायश्चित्तमिदं स्मृतम् ।
गृहीतामन्यदेवार्थं न गृह्णीयात्कदाचन ॥ ५१ ॥

अज्ञानाद्यदि गृह्णाति विनश्यति न संशयः ।
प्रतिलोमसमीपेषु न कुर्याद्विष्णुमन्दिरम् ॥ ५२ ॥

चण्डालपक्कणात्क्रोशादर्वाङ्नैव प्रकल्पयेत् ।
तथैव पुल्कसावासात्तथा तक्षककारुकात् (?) ॥ ५३ ॥

अनुलोमनिवासेऽपि न कुर्यादिति केचन ।
अनुलोमनिवासेषु कुर्याच्चेत्तान्त्रिकेण तु ॥ ५४ ॥

हीने शान्तार्चने हुत्वा तद्दैवत्यं सहस्रकम् ।
वीशचक्रार्चने हीने तद्दैवत्यं तथा यजेत् ॥ ५५ ॥

---

1. तं ध्यात्वाऽथ ; क.

तिलसर्षपमिश्रेण चरुणा जुहुयात्तथा ।
तरुणालयहीने — तरुणालयहीने तु निष्फलं सर्वमुच्यते ॥ ५६ ॥

पौण्डरीके घृताभ्यक्तैः जुहुयाच्छ्वेतपङ्कजैः ।
क्रमेण रात्रिसूक्तञ्च पारमात्मिकमेव च ॥ ५७ ॥

ईङ्कारादीन्स्मरन् देवं वृषभं भक्तितो ददेत् ।
बालालयेऽर्चनं कुर्वन् पश्चात्कर्म समाचरेत् ॥ ५८ ॥

तरुणालय-बेरविचारः — अलाभे लोहबिम्बानां लब्धं बिम्बं समाहरेत् ।
अलाभे नानुरूपं वा याचितं वा समाहरेत् ॥ ५९ ॥

याचेत श्रोत्रियागाराल्लौकिकं वाऽन्यमन्दिरात् ।
आलयाङ्गं न याचेत कौतुकादित्रयं बुधः ॥ ६० ॥

याचितं श्रोत्रियागारादनुरूपं ध्रुवस्य चेत् ।
तमेवं कौतुकं तत्र प्रतिष्ठाप्य समर्चयेत् ॥ ६१ ॥

अन्यालयाद्यर्चितं चेत्तत्क्रियान्ते पुनः क्रमात् ।
पूर्वाऽलयं समानीय शान्तिं हुत्वा समर्चयेत् ॥ ६२ ॥

स्थापितं नानुरूपञ्चेद्वैष्णवं मन्त्रमुच्चरन् ।
सहस्रकृत्वो हुत्वा तु कौतुकं स्थापयेच्छुभम् ॥ ६३ ॥

वास्तुसवन-पुण्याहहीने — वास्तुहोमविहीने तु पाञ्चभौतिकवैष्णवे ।
महाव्याहृतिसंयुक्तं हुत्वा तत्पुनराचरेत् ॥ ६४ ॥

पुण्याहवाचने हीने विप्रान् शक्त्यैव भोजयेत् ।
ब्रह्मपद्मावटे — ब्रह्मपद्मावटे तस्मिन्कपालास्थ्यादिदर्शने ॥ ६५ ॥

वैष्णवं भूमिदैवत्यं ब्राह्ममष्टोत्तरं शतम् ।
हुत्वाऽन्यत्रैव तत्कुर्याद्ब्रह्मपद्मावटं पुनः ॥ ६६ ॥

वैष्णवं भूमिदैवत्यं प्राजापत्यं यजेत्पुनः ।
भिन्ने तत्र घटे स्रावे जनानां भयसम्भवे ॥ ६७ ॥

कलहे रुधिरस्रावे वैष्वक्सेनं यजेत्क्रमात् ।
गारुडं वैष्णवं ब्राह्ममैन्द्रञ्चैव समाहितः ॥ ६८ ॥

रात्रिसूक्तञ्च हुत्वा तु प्राजापत्यसमन्वितम् ।
वामावर्ते वारुणञ्च वायव्यं भूमिदैवतम् ॥ ६९ ॥

सङ्कुलञ्चेत्तदा वारि ब्राह्मं हुत्वा सवारुणम् ।
स्पन्दने चलने चैव पांसुच्छन्ने तथैव च ॥ ७० ॥

वारुणं वैष्वक्सेनञ्च जुहुयात्तस्य शान्तये ।
पद्मेऽधरोत्तरे तस्मिन् पार्श्वस्थे पतितेऽपि च ॥ ७१ ॥

स्पन्दने पत्रकौटिल्ये परिम्लाने च भेदने ।
ब्राह्मं तद्देवहोमञ्च वारुणं भार्गवं यजेत् ॥ ७२ ॥

विदिग्गते तथा पद्मे ब्राह्ममारुषमेव च ।
शङ्कुस्थापने शङ्कुस्थापनहीने च परिषद्धोममाचरेत् ॥ ७३ ॥

शुद्धप्राच्याऽथवा कुर्याद्दिक्परिच्छेदमत्वरः ।
आरभ्य मुख्यमार्गन्तु तद्गौणं कारयेद्यदि ॥ ७४ ॥

अनुमान्य च तं देवं शान्तिं हुत्वा यथाक्रमम् ।
दत्वा च दक्षिणां देवं शक्त्याभ्यर्च्य निवेद्य च ॥ ७५ ॥

आरब्धन्तु यथापूर्वं तथैव पुनराचरेत् ।
आद्येष्टकायाम् आद्येष्टकामकृत्वा तु विमानं क्रियते यदि ॥ ७६ ॥

ग्रामस्य यजमानस्य राष्ट्रस्य महती विपत् ।
तस्मात्तदपहाराय महाशान्तिं तथा यजेत् ॥ ७७ ॥

आद्येष्टकाञ्च सन्न्यस्य विमानं कारयेत्पुनः ।
आद्येष्टकाक्रियायान्तु न्यूनायां मन्त्रपर्यये ॥ ७८ ॥

इष्टकाग्रे शिलाग्रे च विपर्यासे तथैव च ।
रत्नन्यासविहीने च सर्वदैवत्यपूर्वकम् ॥ ७९ ॥

वैष्णवं विष्णुसूक्तञ्च पौरुषं सूक्तमेव च ।
मिन्द्राहुती महीसूक्तं विच्छिन्नं जुहुयात्क्रमात् ॥ ८० ॥

पूर्वोक्तेन विधानेन कारयेदिति शासनम्[1] ।
विमाने प्रस्तरे तस्मिन्नलङ्कारे च सर्वशः ॥ ८१ ॥

हीने चाङ्गे विमाने च प्रतिखण्डविपर्यये ।
शान्तिकादिविमाने तु तले त्वन्योन्यसङ्करे ॥ ८२ ॥

द्वारस्याभ्यन्तरस्यापि भित्तेः हीनेऽधिके तथा ।
न्यक्षादीनां चतुर्णाञ्च शतकृत्वो यजेत्क्रमात् ॥ ८३ ॥

मध्ये तु पौण्डरीकाग्नौ पद्महोमं जुहोति च ।
जुहुयाद्रात्रिसूक्तञ्च पौरुषं सूक्तमेव च ॥ ८४ ॥

सहस्राहुतिपर्यन्तं यथोक्तं कारयेद्बुधः ।
अन्योन्यं गण्यसाङ्कर्यं नाचरेच्छान्तिकादिषु ॥ ८५ ॥

अद्भुते शान्तिकं गण्यं योजयेत्सार्वदेशिकम् ।
प्राकाराद्येष्टकाहीने परिवाराधिदैवतम् ॥ ८६ ॥

वैष्णवेन समायुक्तं दशकृत्वो जुहोति च ।
गोपुराद्येष्टकाहीने द्वारपालाधिदैवतम् ॥ ८७ ॥

धात्रादीनान्तु षण्मन्त्रान् दशवारं सवैष्णवम् ।
आद्येष्टकानां विन्यासे हीने चेन्मण्डपादिषु ॥ ८८ ॥

तन्मण्डपाधिदैवत्यं वैष्णवेन शतं यजेत् ।
महानसस्य हीने चेद्धविरक्षकदैवतम् ॥ ८९ ॥

श्रीदैवत्यञ्च तत्सूक्तमाग्नेयं वैष्णवं यजेत् ।
भूतपीठे आद्येष्टका आद्येष्टकाक्रमं वक्ष्ये भूतपीठप्रकल्पने ॥ ९० ॥

इष्टकां वा शिलां वाऽथ गृहीत्वा पूर्वसङ्ख्यया ।
अधिवासादिकर्माणि कृत्वा पूर्वोक्तमार्गतः ॥ ९१ ॥

---

1. अत्र २४ अध्याय समाप्तिः ख.

मन्त्रौ तद्भूतदैवत्यौ वैष्णवेन समन्वितौ ।
अष्टोत्तरशतं हुत्वा भूतेभ्यश्च ततः परम् ॥ ९२ ॥

यक्षेभ्यश्च पिशाचेभ्यो नागेभ्यश्च जुहोति च ।
चतुर्वेदादिमन्त्रैस्तु स्थापयेच्चतुरिष्टकाः ॥ ९३ ॥

तत्राप्याद्येष्टकाहीने कृते सति तपोधनाः ।
जुहुयाद्भूतमन्त्राभ्यां वैष्णवेन युतं शतम् ॥ ९४ ॥

अधिवासोचितैर्मन्त्रैः पीठं संस्नाप्य वारिणा ।
संस्नाप्य सप्तकलशैर्होमं हुत्वा च पूर्ववत् ॥ ९५ ॥

चतुर्वेदादिमन्त्रास्तांश्चतुर्दिक्षु तथा जपेत् ।
साधारणनिष्कृतिः कर्मणामपि सर्वेषां प्रच्युतावुक्तनिष्कृतिः ॥ ९६ ॥

हुत्वा तदुक्तहोमान्ते तत्तन्मन्त्रान् जपेत्क्रमात् ।
परिवारालयानाञ्च हरेरुक्तप्रमाणतः ॥ ९७ ॥

आद्येष्टकादिकं सर्वं कुर्यात्तन्मन्त्रपूर्वकम् ।
गर्भन्यासहीने गर्भन्यासक्रियाहीने कालातीते विपर्यये ॥ ९८ ॥

वैष्णवं भूमिदैवत्यं श्रीदैवत्यं तथैव च ।
विष्णुसूक्तञ्च जुहुयात्पौरुषं सूक्तमेव च ॥ ९९ ॥

मिन्दाहुती च विच्छिन्नं महीसूक्तं क्रमाद्यजेत् ।
पूर्ववत्सन्न्यसेद्गर्भं तत्तत्परिषदां स्मृतम् ॥ १०० ॥

मूर्धेष्टकान्यासे मूर्धेष्टकायां हीनायां कालेऽतीते विपर्यये ।
आद्येष्टकायां सम्प्रोक्तं प्रायश्चित्तं जुहोति च ॥ १०१ ॥

अङ्गहोमं ततो हुत्वा पूर्वोक्तविधिना चरेत् ।
स्थूपिशूलादिहीने स्थूपिशूलादिहीने तु ध्रुवसूक्तं समुच्चरन् ॥ १०२ ॥

सन्न्यसेदिष्टकामेकां तत्र रत्नानि सन्न्यसेत् ।
दिक्ष्विष्टकाश्चतस्रस्तु स्थापयित्वा तु पूर्ववत् ॥ १०३ ॥

मध्ये स्थूपिं प्रतिष्ठाप्य सुधया कारयेद्दृढम् ।
परिवारालयानाञ्च गोपुराणां तथैव च ॥ १०४ ॥

वर्णलेपादिहीने
मूर्धेष्टकायां हीनायां वर्णलेपविपर्यये ।
सहस्राहुतिमब्जाग्नौ वैष्णवं जुहुयात्तथा ॥ १०५ ॥

सुधाकर्म पुनः कुर्याद्वर्णलेपं तथैव च ।
अग्न्युल्काशनिधूमाद्यैर्दोषयुक्ते च मन्दिरे ॥ १०६ ॥

शान्तये तस्य जुहुयादीङ्कारादींस्तथैव च ।
मिन्दाहुती च विच्छिन्नं पारमात्मिकमेव च ॥ १०७ ॥

ब्राह्मणान् भोजयित्वा तु दद्यादाचार्यदक्षिणाम् ।

बेरस्याग्निस्पर्शे
बेरेऽग्निस्पर्शनेऽब्जाग्नौ महाशान्तिं दिनत्रयम् ॥ १०८ ॥

हुत्वा शताष्टकलशैः स्नापयित्वा ततः परम् ।
प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत् ॥ १०९ ॥

प्राकारेष्वग्निदग्धेषु
प्राकारेष्वग्निदग्धेषु तत्रस्थपरिषद्गणान् ।
संस्नाप्यैव समभ्यर्च्य तेषां मन्त्रं सवैष्णवम् ॥ ११० ॥

चतुर्वेदादिमन्त्रांश्च हुत्वा विप्रांश्च भोजयेत् ।
देवं विशेषतोऽभ्यर्च्य हविस्सम्यङ्निवेदयेत् ॥ १११ ॥

दारुसङ्ग्रहकाले तु विपरीतं भवेद्यदि ।
यजमानो गुरुः स्नात्वा तत्राब्जाग्निं प्रकल्प्य च ॥ ११२ ॥

जुहुयाद्रात्रिसूक्तन्तु श्रीसूक्तं [1]वैष्णवं तथा ।
वैष्णव विष्णुसूक्तञ्च गृह्णीयात्पूर्ववत्पुनः ॥ ११३ ॥

शूलस्थापनहीने
शूलसंस्थापने हीने समाप्ते सति मन्दिरे ।
भवेत्पिशाचावासः स वास्तुहोमं यजेत्पुनः ॥ ११४ ॥

---

1. दैवतं आ.

पौण्डरीके तु तन्मध्ये महाशान्तिं जुहोति च ।
हिरण्यपशुभूम्यादीन् दत्वा कर्म समारभेत् ॥ ११५ ॥

एकमासे भवेदेवं द्विमासे द्विगुणं भवेत् ।
एवं संवर्धयेत्प्राज्ञो यावत्संवत्सरावधि ॥ ११६ ॥

संवत्सरेऽप्यतीते तु महाशान्तिं जुहोति च ।
हिरण्यपशुभूम्यादीन् दत्वा विप्रांश्च भोजयेत् ॥ ११७ ॥

एवमाद्येष्टकादीनां हुत्वा तत्तन्मनुं स्मरन् ।
तत्तन्मन्त्रजपं कृत्वा शूलं संस्थापयेत्पुनः ॥ ११८ ॥

मासमेकं महाशान्तिं द्वादशाब्दात्परं यजेत् ।
कर्षणादीनि कर्माणि कुर्यात्सर्वाणि पूर्ववत् ॥ ११९ ॥

ध्रुवबेरक्रियाहीने शूले संस्थापिते यदि ।
जुहुयात्पौण्डरीकाग्नौ विष्णुसूक्तमनुस्मरन् ॥ १२० ॥

विच्छिन्नञ्चैव हुत्वा तु मिन्दाहुत्या च हूयताम् ।
हुत्वा तु सप्तसमिधो देवेशमनुमान्य च ॥ १२१ ॥

भूमिञ्च गुरवे दत्वा तत्तत्कर्म समाचरेत् ।
एवं मासे तु सम्प्रोक्तं द्वितीये द्विगुणं भवेत् ॥ १२२ ॥

वर्धयेदेवमेवैतत् यावत्संवत्सरावधि ।
संवत्सरेऽप्यतीते तु पौण्डरीकञ्च कारयेत् ॥ १२३ ॥

कुर्यादाहवनीयादीन् चतुर्दिक्षु यथाक्रमम् ।
आघारान्ते तु होतव्ये सहस्राहुतिवैष्णवे ॥ १२४ ॥

विष्णुसूक्तञ्च जुहुयात्तद्धोमे शताष्टकम् ।
दिग्दैवत्यञ्च हुत्वा तु दक्षिणाञ्च ददेत्तथा ॥ १२५ ॥

विप्राणां भोजनं कृत्वा दक्षिणाञ्च स्वशक्तितः ।
द्वितीये द्विगुणञ्चैव वर्धयेद्द्वादशावधि ॥ १२६ ॥

द्वादशाब्दे व्यतीते तु कर्षणादीनि कारयेत् ।
पौण्डरीके तु कूष्माण्डं पञ्चवारुणसंयुतम् ॥ १२७ ॥

पारमात्मिकमीङ्कारानङ्गहोमं ततः परम् ।
पौरुषं विष्णुसूक्तञ्च हुत्वा विप्रांश्च भोजयेत् ॥ १२८ ॥

पञ्चनिष्कसुवर्णञ्च दद्यादाचार्यदक्षिणाम् ।
वास्तुहोमं ततो हुत्वा पुण्याहमपि वाचयेत् ॥ १२९ ॥

कवाटबोधिकास्थूणासूत्तरे दोषसंयुते ।
वृद्धौ प्रमाणहीने च जीर्णे दग्धे च तं त्यजेत् ॥ १३० ॥

अन्यत्प्रमाणसंयुक्तं गृहीत्वा योजयेत्पुनः ।
'आपो हि ष्ठा' दिभिः प्रोक्ष्य जुहुयाद्वैष्णवं शतम् ॥ १३१ ॥

भुवङ्गे च पतङ्गे च कवाटे स्तम्भयोर्द्वयोः ।
धात्रादीन् षट् समावाह्य विधिनैव समर्चयेत् ॥ १३२ ॥

अन्यालयोपयुक्ताश्च अन्यार्थं स्वीकृताश्च याः ।
हुताशनपरीताश्च त्याज्या दारुशिलेष्टकाः ॥ १३३ ॥

विमानं नवधा मार्गे यन्मार्गेण प्रकल्पितम् ।
कारयेद्ध्रुवबेरन्तु तन्मार्गेणाधिकेन वा ॥ १३४ ॥

ततो हीनं न कर्तव्यं कौतुकादित्रयं तथा ।
आलयस्य विपर्यासे तथा बेरविपर्यये ॥ १३५ ॥

शूलदारुविपर्यासे कल्पनादिविपर्यये ।
ब्राह्मञ्च विष्णुसूक्तञ्च गारुडं सौम्यमेव च ॥ १३६ ॥

प्राजापत्यञ्च रौद्रञ्च सहस्रं जुहुयात्क्रमात् ।
पूर्वोक्तेनैव मार्गेण कारयेत्तद्विधानतः ॥ १३७ ॥

विमानादीनां श्रेष्ठ्यम्

आलयं गोपुरञ्चैव प्रतिमा पीठमेव च ।
शरीरमेव देवस्य स्मृतमेतच्चतुष्टयम् ॥ १३८ ॥

जीर्णोद्धारविचारः

आलये मण्डपे वाऽपि परिवारालये तथा ।
प्राकारे गोपुरे पीठे पचनालय एव वा ॥ १३९ ॥

इष्टकानां तु प्रक्षेपे तथा वर्णानुलेपने ।
एकद्विमासे कुर्याच्चेत् नवकर्मादिकं तथा ॥ १४० ॥

तद्दोषन्तु व्यपोह्यैव सर्वेषान्तु सलक्षणम् ।
यथासौन्दर्यमार्गेण नवकर्म समाचरेत् ॥ १४१ ॥

समासेऽह्नि च पूर्वाह्णेऽप्यालयस्योत्तरे तथा ।
वास्तुहोमं ततो हुत्वा पर्यग्निकरणं तथा ॥ १४२ ॥

पञ्चगव्यैस्समभ्युक्ष्य पुण्याहमपि वाचयेत् ।
स्नपनोक्तक्रमेणैव विधिना स्नापयेद्बुधः ॥ १४३ ॥

आलयाद्दक्षिणे चैव औपासनविधानतः ।
कुण्डं सलक्षणं कृत्वा प्रज्वाल्याग्निं समन्त्रकम् ॥ १४४ ॥

तद्दैवत्यञ्च हुत्वा तु परिषन्मन्त्रसंयुतम् ।
अङ्गहोमं ततो हुत्वा पारमात्मिकसंयुतम् ॥ १४५ ॥

ईङ्कारादींस्ततो हुत्वा अष्टाशीत्याहुतिं यजेत् ।
वैष्णवं तत्र जुहुयान्महाव्याहृतिसंयुतम् ॥ १४६ ॥

सहस्राहुतिञ्च जुहुयात्सर्वेषामेव कारयेत् ।
तांस्तान् देवान् प्रतिष्ठाप्य प्रतिष्ठोक्तक्रमेण वै ॥ १४७ ॥

अन्तहोमं ततो हुत्वा देवेशं सम्प्रणम्य च ।
महाहविः प्रभूतं वा देवेशाय निवेदयेत् ॥ १४८ ॥

शिलादार्वोर्मुखं पार्श्वं पृष्ठमूर्ध्वमधस्तथा ।
ज्ञात्वा कुर्याद्विपर्यासाद्देवरूपं कृतं यदि ॥ १४९ ॥

स्थापितं चेत्तदज्ञानादाभिचारिकमुच्यते ।
राजराष्ट्रविनाशः स्यात् प्रजापीडा भयं मृतिः ॥ १५० ॥

तद्दोषशमनार्थाय क्षिप्रं शान्तिञ्च कारयेत् ।
आलयस्योत्तरे कुर्यात्पौण्डरीकं सलक्षणम् ॥ १५१ ॥

जुहुयात्पौरुषं सूक्त 'मतो देवा' दि वैष्णवम् ।
ईङ्काराद्यङ्गहोमञ्च पञ्चवारुणसंयुतम् ॥ १५२ ॥

जयाभ्यातानसंयुक्तं परिषन्मन्त्रसंयुतम् ।
पूर्ववद्विधिना कृत्वा स्थापयेत्तद्विचक्षणः ॥ १५३ ॥

अङ्गवैकल्ये

बाहुप्रकोष्ठहस्तोरुजङ्घापादतलेषु च ।
पार्श्वाधःकटिदण्डेषु न हीनं नाधिकं तथा ॥ १५४ ॥

अङ्गोपाङ्गेषु सर्वत्र हीने चैवाङ्गुले तु तत् ।
हेम्ना वा रजितेनाथ ताम्रेणैवाथ पूर्ववत् ॥ १५५ ॥

स्थापयेद्व्यत्ययेनैव शूलं यदि विनश्यति ।
आलयस्योतरे पार्श्वे पूर्वोक्तं होममाचरेत् ॥ १५६ ॥

हुत्वा पुरुषसूक्तञ्च दद्यादाचार्यदक्षिणाम् ।
गृहीत्वा विधिवच्छूलं पूर्ववत्स्थापयेत्क्रमात् ॥ १५७ ॥

दूषिता मृत्तिका चेत्तु श्वकाकपशुवानरैः ।
मूषिकाभिः कुक्कुटैर्वा त्यक्त्वान्यां विधिना हरेत् ॥ १५८ ॥

जुहुयाद्भूमिदैवत्यं पारमात्मिकसंयुतम् ।
ईङ्कारादींश्च कूष्माण्डान् संस्कुर्याच्च पुनर्मृदम् ॥ १५९ ॥

मृदःस्नेहस्य चूर्णस्य कषायस्यौषधस्य च ।
न्यूने संस्कारहीने च प्रयोगस्य विपर्यये ॥ १६० ॥

रज्जुबन्धेऽष्टबन्धे च शर्करालेपने तथा ।
न्यूने संस्कारहीने च प्रयोगस्य विपर्यये ॥ १६१ ॥

वैष्णवं चारुषञ्चैव पाञ्चभौतिकमेव च ।
ब्राह्ममैन्द्रं त्रयस्त्रिंशद्देवताभ्यश्च हूयते ॥ १६२ ॥

पूर्वोक्तेन विधानेन तत्तत्कर्म समाचरेत् ।
वर्णव्यतिक्रमे हुत्वा प्राजापत्यं सपौरुषम् ॥ १६३ ॥

मृण्मयं नार्धचित्रम् अर्धचित्रं न कुर्वीत मृण्मयं लोहजं तथा ।
स्थापितञ्च विसृज्यान्यत् बेरं सङ्गृह्य यत्नतः ॥ १६४ ॥

पञ्चाग्नौ ब्रह्मसूक्तञ्च वैष्ण 'वा श्राविं ' तादिकम् ।
हुत्वा मिन्द्राहुती विप्रान् भोजयित्वा ततः परम् ॥ १६५ ॥

पूर्वोक्तेन विधानेन स्थापयेदिति शासनम्[1] ।
शिलामणिबिम्बे शिलाजं मणिजं बिम्बमर्धचित्रं न दोषकृत् ॥ १६६ ॥

शैलजं ध्रुवबेरन्तु वर्णयुक्तन्तु कारयेत् ।
(ध्रुवबेरार्चनं चेत्तु वर्णयुक्तं न कारयेत ॥ १६७ ॥

ब्रह्मस्थानार्चनार्हं यत स्थापनं तद्ध्रुवार्चनम् ।
दैविके मानुषे चैव स्थापयेच्च विशेषतः ॥ १६८ ॥

एकबेरार्चनञ्चैतत् वर्णयुक्तं न [2]दोषकृत ।
न्यूनाधिक्यविषयः किमिदं परिमाणेन कारणं यच्च वै विदुः ॥ १६९ ॥

यवं यवत्रयं चापि अर्धाङ्गुलमथापि वा ।
एकेन वाऽथ पादाभ्यां न्यूनाधिक्ये न दोषकृत) ॥ १७० ॥

बिम्बस्य पुनः-करणम् वस्त्रमाभरणं पद्मं किरीटं शङ्खचक्रकौ ।
उपवीतं प्रलम्बञ्च श्रीवत्सं कुण्डलद्वयम् ॥ १७१ ॥

एवमाद्यैस्समायुक्तं बिम्बं कुर्याद्विशेषतः ।
एतैर्हीनं यदि भवेत्पुनरेतैस्समायुतम् ॥ १७२ ॥

कारयित्वैव जुहुयाद्वैष्णवं ब्राह्मसंयुतम् ।
ऐन्द्रञ्च विष्णुसूक्तञ्च सौरं सौम्यञ्च पौरुषम् ॥ १७३ ॥

1. अत्र २५ अध्याय समाप्तिः ख. 2. दोषभाक् आ.

ब्राह्मणान् भोजयित्वा तु विधिना स्थापयेद्बुधः ।
बेरं कृत्रिमवर्णेन योजयेच्चेत्प्रमादतः ॥ १७४ ॥

क्षालयित्वा प्रमार्ज्यैव विशोष्य च यथाविधि ।
पौण्डरीकाग्निकुण्डे तु सूक्तं वैश्वानरं यजेत् ॥ १७५ ॥

ब्राह्मञ्च विष्णुसूक्तञ्च वैष्णवञ्च जयादिभिः ।
तस्यानुरूपं वर्णञ्च योजयेत्तद्विधानतः ॥ १७६ ॥

अक्षिमोचनहीने च कालातीते प्रमादतः ।
षण्मण्डलाधिदैवत्यं 'यद्देवादि' ततः परम् ॥ १७७ ॥

'ईङ्कारादीं' स्ततो हुत्वा पारमात्मिकमेव च ।
अष्टाशीतिं ततो हुत्वा कारयेदक्षिमोचनम् ॥ १७८ ॥

क्रूरग्रहाणामुदये त्वज्ञानात्क्रियते यदि ।
क्षालयित्वा ततो हुत्वा प्रायश्चित्तञ्च पूर्ववत् ॥ १७९ ॥

पूर्ववद्विधिना सम्यगक्षिमोचनमाचरेत् ।
कर्षणादीनां सामान्यप्रायश्चित्तम् कर्षणादि प्रतिष्ठान्तं न्यूने हीने विपर्यये ॥ १८० ॥

जुहुयात्पौण्डरीकाग्नौ सूक्ते वैष्णवपौरुषे ।
'यद्देवादीं' स्ततो हुत्वा पारमात्मिकमेव च ॥ १८१ ॥

'ईङ्कारादीं' श्च जुहुयादष्टाशीतिमतः परम् ।
प्राजापत्यञ्च सौम्यञ्च ऐन्द्रमाग्नेयमेव च ॥ १८२ ॥

सौरं सौम्यञ्च जुहुयादङ्गहोमञ्च वैष्णवम् ।
महाव्याहृतिभिर्हुत्वा ब्राह्मणान्भोजयेत्पुनः ॥ १८३ ॥

वाचयित्वा तु पुण्याहं स्वस्तिघोषञ्च कारयेत् ।
देवकार्येषु पुण्याहविशेषः दैविकेषु तु सर्वेषु भूपरीक्षादिकर्मसु ॥ १८४ ॥

पुण्याहे विहिते सम्यक्, यत्पुण्य'मिति च ब्रुवन् ।
'पुण्याहं स्वस्तिमृद्धि' ञ्च वाचयित्वा त्रिधात्रिधा ॥ १८५ ॥

'स्वस्ति न—ऋद्ध्यास्स्मे' ति वाचयित्वान्तरान्तरा ।
'आपो हिरण्य पवमानैः' प्रोक्षयित्वा ततः परम् ॥ १८६ ॥

दक्षिणादानादाने च सूत्रोक्तविधिना चरेत् ।
गवादिदक्षिणां दत्वा पश्चात्कर्म समाचरेत् ॥ १८७ ॥

हीनक्रियासु सर्वासु प्रायश्चित्तमिदं स्मृतम् ।
अनुक्तद्रव्य-कल्पिते बेरे
इष्टकाभिस्सुधाभिर्वा कण्टकाद्यैर्नपुंसकैः ॥ १८८ ॥

अन्यैश्च काष्ठैर्वृक्षैर्वाऽप्यन्यैर्दूषितदारुभिः ।
कालायसैश्च पाषाणैः चूर्णैर्वाऽपि समायुतैः ॥ १८९ ॥

संयुक्ते तु कृते बेरे कृते पक्के तु मृण्मये ।
पैशाचैश्चासुरैर्द्रव्यैरतिरिक्तमृदाऽथवा ॥ १९० ॥

द्रव्यैरसंस्कृतैर्वापि ध्रुवबेरे प्रकल्पिते ।
अशूले रज्जुमृद्वस्त्रशर्करादावमानके ॥ १९१ ॥

कृशे स्थूलेऽतिजीर्णे च वृद्धौ वाऽनुक्तवर्णके ।
सुधयैव कृते बेरे तथैवेष्टकया कृते ॥ १९२ ॥

कल्पितेऽनुक्तद्रव्येण कृत्रिमाभरणान्विते ।
इत्यादिदोषसंयुक्ते बेरे सर्वं विनश्यति ॥ १९३ ॥

स्थापयेच्चेत्तदज्ञानात् यजमानो विनश्यति ।
तच्छान्तिः
तच्छान्तिः पौण्डरीकाग्नावालयस्योत्तरे कृते ॥ १९४ ॥

पारमात्मिकमीङ्कारांद्यष्टाशीत्यङ्गहोमकम् ।
ब्रह्मसूक्तसमायुक्तं श्रीसूक्तेन समन्वितम् ॥ १९५ ॥

दुर्गासूक्तञ्च जुहुयाद्विष्णुसूक्तमतः परम् ।
जुहुयात्पौरुषं सूक्तं विश्वजित्सूक्तमेव च ॥ १९६ ॥

प्राजापत्यञ्च रौद्रञ्च ब्राह्ममाग्नेयमेव च ।
सौरं सौम्यसमायुक्तं वैष्णवं जुहुयात्पुनः ॥ १९७ ॥

ब्राह्मणान् भोजयित्वा तु दद्यादाचार्यदक्षिणाम् ।
बालालये प्रतिष्ठाप्य सदोषमपहाय च ॥ १९८ ॥

सलक्षणं ततः कृत्वा स्थापयेत्पूर्ववत्क्रमात् ।
पुनर्जीर्णविमानादिकथनम्
तद्विमानगलस्थाने पादवर्गस्य मध्यमे ॥ १९९ ॥

कारयेद्विहितां मूर्तिं सुधयेष्टकयाऽथवा ।
मृच्छूलशर्करारज्जुवस्त्रे हीनेऽप्रमाणके ॥ २०० ॥

कृते कृत्रिमवर्णेन दोषैः कार्श्यादिभिर्युते ।
न दोषदा इति प्रोक्ता यदि ते शिलया कृताः ॥ २०१ ॥

सर्वलक्षणसंपन्नान् वर्णहीनान् प्रकल्पयेत् ।
शिलासङ्ग्रहवर्जं बिम्बे कृते
अकृत्वा कल्पिते बेरे शिलासङ्ग्रहणक्रियाम् ॥ २०२ ॥

पौण्डरीके महाशान्तिं एकाहं जुहुयात्पुनः ।
शिलाग्रहणहोमञ्च हुत्वा मन्त्रं स्पृशन् जपेत् ॥ २०३ ॥

अज्ञानात्स्थापितश्चैतत् एवं कृत्वा यथाविधि ।
प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत्[1] ॥ २०४ ॥

शीघ्रं संस्थापयेद्बेरं निर्दोषं लक्षणान्वितम् ।
न स्थापयति चेन्मोहादाधिव्याध्याद्युपद्रवैः ॥ २०५ ॥

क्षुत्पिपासादिभिश्चैव स देशः पीड्यते भृशम् ।
तस्माद्धुत्वा महाशान्तिं भोजयित्वा द्विजोत्तमान् ॥ २०६ ॥

प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत्[1] ।
अनुक्तकाले बिम्बे स्थापिते
आर्द्राद्यनुक्तनक्षत्रे वारे राशौ च निन्दिते ॥ २०७ ॥

उल्काग्न्यशनिपाते च दिग्दाहे पांसुलोहिते ।
वर्षधारातिपाते च चन्द्रसूर्योपरागयोः ॥ २०८ ॥

चैत्यवृक्षनिपाते च भूमिकम्पदिने तथा ।
दोषयुक्ते च नक्षत्रे शर्वर्यां वा तथैव च ॥ २०९ ॥

---

1. अत्र २६ अध्याय समाप्तिः ख.

स्थापितं चेत्तदज्ञानात् पूर्ववद्धोममाचरेत् ।
सहस्राहुतिमिष्ट्वैव सहस्रञ्चैव वैष्णवम् ॥ २१० ॥

परिषद्देवतानाञ्च तत्तन्मन्त्रैश्च हूयते ।
यथोक्तं स्थापयित्वैव शक्तितो दक्षिणां ददेत् ॥ २११ ॥

अकृत्वा भूपरीक्षादिक्रियास्सर्वाः प्रमादतः ।
अनुक्तमासनक्षत्रतिथिवासरराशिषु ॥ २१२ ॥

रात्रावविधिकं मोहादज्ञानात्स्थापिते यदि ।
मासं पक्षन्तु सप्ताहं पञ्चाहं त्रियहन्तु वा ॥ २१३ ॥

त्रिकालं पौण्डरीकाग्नौ महाशान्तिं जुहोति वै ।
तत्तन्मन्त्रजपं कृत्वा भूपरीक्षादिकर्मणाम् ॥ २१४ ॥

पूर्वोक्तेन प्रकारेण प्रतिष्ठां पुनराचरेत् ।

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
भूपरीक्षादिप्रायश्चित्तविधिर्नाम विंशोऽध्यायः ।

# एकविंशोऽध्यायः

चलितस्थापनम्

अथ वक्ष्ये [1]विशेषेण चलितस्थापनक्रमम् ।
पीठात्प्रचलितं बिम्बं सापायस्थलमाश्रितम् ॥ १ ॥

अन्यस्थले नदीतीरे ग्रामा[2]द्बहिरवास्तुकम् ।
महापथस्थं यद्बेरमर्चाहीनं विशेषतः ॥ २ ॥

जीर्णालयगतं बिम्बं चिरकालमनर्चितम् ।
अस्थानस्थापितं बेरं चलितञ्च प्रमादतः ॥ ३ ॥

अन्यालयगतं बिम्बमन्त्यजातिभिरावृतम् ।
प्रतिलोमनिवासस्थं शून्यमूलालयस्थितम् ॥ ४ ॥

चालयित्वा विधानेन याने वा शकटेऽपि वा ।
आरोप्य सुस्थलं नीत्वा कारयेदालयं महत् ॥ ५ ॥

प्रासादं गोपुरं वाऽपि विमानं परिकल्पयेत् ।
अशक्तश्चेद्यथालाभं गर्भालयमथापि वा ॥ ६ ॥

तस्मिन् तद्बेरमास्थाप्य प्रतिष्ठां पुनराचरेत् ।
यः करोति महाविष्णोरन्यत्र स्थापनं महत् ॥ ७ ॥

व्याधयस्तस्य नश्यन्ति ग्रहपीडाद्युपद्रवाः ।
दुर्निमित्तानि दुःस्वप्नचोरशत्रुभयादयः ॥ ८ ॥

उपद्रवास्तथाऽन्ये च प्रणश्यन्ति न संशयः ।
धर्मार्थकाममोक्षाश्च सिद्ध्यन्त्येव न संशयः ॥ ९ ॥

कौतुकादिनिष्कृतिः

अतः परं प्रवक्ष्यामि कौतुकादिषु निष्कृतिम् ।
कृत्वा सङ्कीर्णलोहेन लोहेनाविहितेन वा ॥ १० ॥

---

1. महाविष्णोरन्यत्र स्थापनक्रमं । आ. 2 बाह्येऽपि वास्तुषु क.

कौतुकं स्थापयेच्चेत्तु क्षिप्रं तदपहाय च
पद्माग्नौ परिषन्मन्त्रान् सूक्ते पौरुषवैष्णवे ॥ ११ ॥

श्रीब्रह्मरुद्रसूक्तानि व्याहृत्यन्तं हुनेत् पृथक् ।
दक्षिणान्तु ततो दद्याद्ब्राह्मणानपि भोजयेत् ॥ १२ ॥

सलक्षणं ततः कृत्वा कौतुकं स्थापयेद्बुधः ।
ध्रुवकौतुकयोः सारूप्यम्
यदाकारं ध्रुवं कुर्यात्तदाकारन्तु कौतुकम् ॥ १३ ॥

आसीनं वा स्थितं वाऽपि शयानं नैव कौतुकम् ।
स्थानके स्थानकं प्रोक्तमासने स्थानकासने ॥ १४ ॥

आसीनं स्थानकं वाऽपि शयाने परिकल्पयेत् ।
स्थापितं विपरीतं चेत् त्रयस्त्रिंशद्गुणान् यजेत् ॥ १५ ॥

वैघ्नं सौरं गारुडञ्च शान्तिं वै पाञ्चभौतिकम् ।
दुर्गासूक्तं विष्णुसूक्तं सूक्तं तत्पौरुषं यजेत् ॥ १६ ॥

ब्राह्मणान् भोजयित्वा तु पुण्याहमपि वाचयेत् ।
यथोक्तं कौतुकं कृत्वा प्रतिष्ठामाचरेत्पुनः ॥ १७ ॥

अवतारविषये पौराणिकप्रदेशेषु च विशेषः
अवतारं ध्रुवं चेत्तु रूपभेदेषु तस्य च ।
यथेष्टं कारयेद्रूपमिति प्रोवाच पूर्वजः ॥ १८ ॥

पौराणिकेषु स्थानेषु यथापूर्वं तथा चरेत् ।
अन्यथा तु न कर्तव्यं यदि कुर्याद्विनश्यति ॥ १९ ॥

तच्छान्त्यै पौण्डरीकाग्नौ सूक्ते वैष्णवपौरुषे ।
हुत्वा तु दक्षिणां दत्वा यथापूर्वं तथा चरेत् ॥ २० ॥

पूर्वमाग्नेयबिम्बञ्च सौम्येन स्थापितं यदि ।
तद्बेरजीर्णोद्धारेऽपि कुर्यात्पूर्ववदेव हि ॥ २१ ॥

सुवर्णादन्यलोहेन मिश्रलोहेन कौतुकम् ।
स्थापितञ्चेन्महादोषो भविष्यति न संशयः ॥ २२ ॥

आलयाद्दक्षिणेऽब्जाग्नौ ब्राह्मं सौरञ्च सौम्यकम् ।
आग्नेयं गारुडं हुत्वा सूक्ते वैष्णवपौरुषे ॥ २३ ॥

ईङ्कारा ' दींस्ततो हुत्वा तद्बिम्बमपहाय च ।
उक्तलोहेन कृत्वा तु विधिना स्थापयेत्पुनः ॥ २४ ॥

प्रतिष्ठाप्यार्च्यमानन्तु लोहजं कौतुकं शुभम् ।
त्यक्त्वाऽन्यत्स्थापयेच्छेत्तदाभिचारिकमुच्यते ॥ २५ ॥

दिग्दैवत्यं पुरुषसूक्तं विष्णुसूक्तमतः परम् ।
श्रीसूक्तञ्चैव जुहुयाद्दुर्गासूक्तं सवैष्णवम् ॥ २६ ॥

अङ्गहोमं ततो हुत्वा विश्वजित्सूक्तमेव च ।
पूर्वं यद्बिम्बमादाय स्थापयेत्तु विचक्षणः ॥ २७ ॥

तत्रैवान्यन्नवं बेरं स्थापयित्वा च लौकिकम् ।
यथालाभोपचारैस्तु पूजयेदिति शासनम् ॥ २८ ॥

विवर्णे स्फुटिते रूक्षे सुषिरे जर्झरान्विते ।
वर्जिते लक्षणैश्चापि स्थापिते सति कौतुके ॥ २९ ॥

अन्यद्बिम्बं समादाय सूक्ते वैष्णवपौरुषे ।
वैष्णवञ्चैव कूष्माण्डं ब्राह्ममैन्द्रञ्च वायवम् ॥ ३० ॥

गारुडञ्च सकृद्धुत्वा वैष्णवं साष्टकं शतम् ।
महाव्याहृतिभिर्हुत्वा पूर्ववत्स्थापयेत्पुनः ॥ ३१ ॥

प्रतिष्ठाप्य कृतं बेरं त्यक्त्वान्यत्स्थापयेद्यदि ।
आलयस्योत्तरेऽब्जाग्नौ विष्णुसूक्तं जुहोति च ॥ ३२ ॥

दौर्गञ्च पौरुषं सूक्तं ब्रह्मसूक्तं यजेत्पुनः ।
रुद्रसूक्तं ततो हुत्वा पुनराहवनीयके ॥ ३३ ॥

वैष्णवं व्याहृतीश्चापि महाव्याहृतिसंयुतम् ।
हुत्वा साष्टशतं बेरं पूर्वं संस्थापयेत्पुनः ॥ ३४ ॥

ततोऽन्यत्र नवं बेरं स्थापयित्वा समर्चयेत् ।
अन्यालयार्थं वा दद्याद्याचितं चेन्महत्फलम् ॥ ३५ ॥

अर्चारहितबेरदोषः बेरमर्चाविहीनश्चेत्सर्वनाशकरं भवेत् ।
निर्दुष्टबेरस्य त्याग-निषेधः निर्दोषं लक्षणैर्युक्तं न त्याज्यमिति शासनम् ॥ ३६ ॥

शङ्खचक्रगदापद्मधरं केवलमुक्तिदम् ।
शङ्खचक्रधरं श्रेष्ठं भुक्तिमुक्तिफलप्रदम् ॥ ३७ ॥

शङ्खचक्रगदापद्मधरं पूर्ववदर्चितम् ।
पुनश्च बेरनिर्माणे तत्तथैव प्रकल्पयेत् ॥ ३८ ॥

कुर्यात्तस्यापि सौम्येन प्रतिष्ठामर्चनादिकम् ।
मधूच्छिष्टक्रियाहीने मधूच्छिष्टक्रियाहीने लोहबेरे कृते सति ॥ ३९ ॥

ब्राह्मञ्च सौरं सौम्यञ्च सारस्वतसमन्वितम् ।
प्राजापत्यं तथाऽऽग्नेयं वैष्णवं व्याहृतीरपि ॥ ४० ॥

हुत्वा विप्रांश्च सम्पूज्य दक्षिणां गुरवे ददेत् ।
शिलाविपर्यासे पुंरूपं पुंशिलाभिश्च स्त्रीरूपं शिलया स्त्रिया ॥ ४१ ॥

स्त्रिया नपुंसकेनाथ पुंरूपन्तु कृतं यदि ।
आभिचारिकमित्युक्तं तेन सर्वं विनश्यति ॥ ४२ ॥

स्थापितञ्चेत् परित्यज्य बेरमन्यत्समाहरेत् ।
नपुंसकेन पुंसा वा देवीबेरं कृतं त्यजेत् ॥ ४३ ॥

यथोक्तशिलया बेरमाहृत्यान्यद्विधानतः ।
षडग्नीन् साधयित्वा तु परिषिच्य च पावकम् ॥ ४४ ॥

पारमात्मिकमोङ्काराद्यष्टाशीतिं जयादिभिः ।
रात्रिसूक्तञ्च जुहुयाद्विश्वजित्सूक्तमेव च ॥ ४५ ॥

ब्रह्मेन्द्रविष्णुसूक्तांश्च नरसूक्तं सरौद्रकम् ।
दुर्गासूक्तञ्च सर्वेषु शतमष्टोत्तरं यजेत् ॥ ४६ ॥

पञ्चहोमञ्च जुहुयात्पाञ्चभौतिकसंयुतम् ।
पुण्याहं वाचयेद्विप्रान् भोजयित्वा ततः परम् ॥ ४७ ॥

हिरण्यपशुभूम्यादीन् दत्वा तत्र मुदान्वितः ।
वस्त्रोत्तरीयाभरणैराचार्यं पूजयेत्पुनः ॥ ४८ ॥

एवं हुत्वा महाशान्तिं तथा स्थापनमाचरेत् ।
[1]शिलाभेदे च दोषेषु सर्वेष्वेषु विधिः स्मृतः ॥ ४९ ॥

देवं देव्यौ च कुर्याच्चे[2]द्विबेरञ्चैकवस्तुना ।
अन्यथा यदि तत्रापि प्रायश्चित्तञ्च पूर्ववत् ॥ ५० ॥

प्रतिष्ठिते ध्रुवे अन्यत्र स्थापिते

शैलं वा मृण्मयं वाऽथ दारवं ताम्रमेव वा ।
अन्यत्र स्थापितं पूर्वं ध्रुवबेरं ततः परम् ॥ ५१ ॥

आदायान्यत्र न स्थाप्यं स्थापितं चेत्प्रमादतः ।
महशान्तिं ततो हुत्वा बिम्बमादाय वै ततः ॥ ५२ ॥

पूर्वस्मिन्नालये सम्यक् स्थापयित्वा समर्चयेत् ।

अविधिना स्थापिते बिम्बे

अविधिक्रमलक्षण्यमयुक्तञ्चाप्रयोजकम् । ५३ ॥

विरूपं वा विवर्णं वाऽप्यन्यदोषेण संयुतम् ।
त्यक्त्वान्यद्विधिना कृत्वा लक्षणेन समन्वितम् ॥ ५४ ॥

तदालये प्रतिष्ठाप्य महाशान्तिश्च हूयते ।
आलयाद्दक्षिणेऽब्जाग्नौ अङ्गहोमस्सुहूयताम् ॥ ५५ ॥

तत्तद्दैवत्यसंयुक्तं परिषन्मन्त्रसंयुतम् ।
व्याहृतिर्विष्णुसूक्तञ्च सूक्तं ब्राह्मञ्च पौरुषम् ॥ ५६ ॥

वैष्णवं पञ्चहोमश्च होतव्यं पारमात्मिकम् ।
हुत्वैव दक्षिणां दत्वा स्थापनं पुनराचरेत् ॥ ५७ ॥

---

1. शिलाजेषु च दोषेषु क. 2. द्वाभ्यामेकेन वस्तुना क.

यत्र कर्तृस्मृतिस्तत्र विधिरेष प्रवर्तते ।
दिव्यादिस्थले विशेषः दैविके चार्षिके क्षेत्रे यथापूर्वं तथा चरेत् ॥ ५८ ॥

अविधिकमलक्षण्यमप्रमाणं न दोषकृत् ।
तस्मात्सर्वप्रयत्नेन यथापूर्वं तथा चरेत् ॥ ५९ ॥

अन्यथा चेन्महादोष इति पूर्वजशासनम् ।
कौतुकबेरस्यान्यत्र-स्थापने एकस्मिन्नलये बिम्बं कौतुकं स्थापितं तु यत् ॥ ६० ॥

अन्यत्र स्थापितं चेत्तु पश्चाद्ग्रामालयोत्तरे ।
सवैष्णवं तद्दैवत्यं परिषन्मन्त्रसंयुतम् ॥ ६१ ॥

ब्रह्मसूक्तं रुद्रसूक्तं पारमात्मिकमेव च ।
'ईङ्कारादीं' स्तथाष्टाशीत्यङ्गहोमं ततः परम् ॥ ६२ ॥

रात्रिसूक्तञ्च जुहुयाद्विश्वजित्सूक्तमेव च ।
आदाय पूर्ववत्स्थाने स्थापयेत्सर्वयत्नतः ॥ ६३ ॥

परचक्रभयादिषु कर्तव्यक्रमः परचक्रभयोद्रेकादथवा चोरपीडया ।
ग्रामालयविनाशे तु जनसञ्चारवर्जिते ॥ ६४ ॥

बालालयप्रकारेण होमं हुत्वा यथाविधि ।
ध्रुवबेरगतां शक्तिं जङ्गमेषु निवेश्य च ॥ ६५ ॥

निर्भयान्यालयं नीत्वा पूजयेच्चेन्महाफलम् ।
ब्राह्मणैरेव सर्वाणि तानि बेराणि वाहयेत् ॥ ६६ ॥

नित्याग्निकुण्डमासाद्य परिषिच्य च पावकम् ।
आज्येन साज्यचरुणा शान्तिहोमं जुहोति च ॥ ६७ ॥

समिध्यात्मनि वाऽऽरोप्य नित्याग्निञ्च यथाविधि ।
प्रवेश्य निर्भयं देशं तत्र सौम्याऽलये पुनः ॥ ६८ ॥

आग्नेयमन्दिरे वाऽपि यतीनामाश्रमेषु च ।
सौम्यमार्गान्यदेवानामालयेषु मठेषु वा ॥ ६९ ॥

गृहेषु वा गृहस्थानामुपकार्यासु वा पुनः ।
एतेष्वेकं प्रवेश्यैव पूर्वालाभे तथोत्तरे ॥ ७० ॥

सौम्यालयान्यदेशेषु वास्तुहोमावसानके ।
ततस्सर्वाणि बिम्बानि शुद्धोदैरभिषेचयेत् ॥ ७१ ॥

विना प्रधानस्थानञ्च परिवारालयं तथा ।
रमणीयप्रदेशेषु विस्तीर्णेषु निवेशयेत् ॥ ७२ ॥

यथापूर्वमुखं वाऽथ विस्तीर्णाभिमुखन्तु वा ।
प्रतिष्ठाप्य यथालाभं नित्यं विधिवदर्चयेत ॥ ७३ ॥

तस्यैव परितस्सर्वपरिवारान् समर्चयेत् ।
तां होमकाले समिधं लौकिकाग्नौ निधाय च ॥ ७४ ॥

हुत्वा होमावसानेऽन्यसमिध्यारोपयेत्पुनः ।
अथवा पूर्ववत्कुण्डं कृत्वाऽथाऽत्रापि पूर्ववत् ॥ ७५ ॥

रक्षन्नग्निमविच्छिन्नं नित्यहोमं समाचरेत् ।
नित्ययात्रोत्सवेनापि विना वर्षोत्सवेन च ॥ ७६ ॥

नित्यैर्नैमित्तिकैरन्यैर्यथालाभं समर्चयेत् ।
मूलालयार्चनं यावद्युक्तं तावत्तु तत्र वै ॥ ७७ ॥

नित्यमेवं यथालाभमर्चयेदिति शासनम् ।
भये तत्र विमुक्ते तमग्निमारोप्य पूर्ववत् ॥ ७८ ॥

पूर्वालये तु बिम्बानि समानीय च पूर्ववत् ।
वास्तुहोमं ततो हुत्वा पर्यग्निकरणं तथा ॥ ७९ ॥

पञ्चगव्योक्षणं कृत्वा महाशान्तिं जुहोति च ।
तां लौकिकाग्नौ समिधं निधायाघारमाचरेत् ॥ ८० ॥

देवं विशेषतोऽभ्यर्च्य रात्रिपूजावसानके ।
औत्सवार्चागतां शक्तिं कौतुके तु निवेशयेत् ॥ ८१ ॥

पूर्ववत्साधिते कुम्भे समावाह्य तु कौतुकात् ।
प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत् ॥ ८२ ॥

सभ्यञ्च पौण्डरीकञ्च द्वावग्नी इति केचन ।
कुर्यान्नित्याग्निविच्छेदे पञ्चाग्नीनेव पूर्ववत् ॥ ८३ ॥

हौत्रकर्मावसाने तु चाऽवाह्य परिषद्गणान् ।
ताने१ परितोऽभ्यर्च्य तत्तन्मन्त्रं जुहोति च ॥ ८४ ॥

एष एव विशेषः स्यादन्यत्सर्वञ्च पूर्ववत् ।
मूलालयार्चने अविच्छिन्ने विशेषः
मूलालये ध्रुवे नित्यमविच्छिन्नार्चने सति ॥ ८५ ॥

तद्बिम्बगतां शक्तिं ध्रुवे सम्यङ्निवेश्य च ।
तस्मादावाहयेद्बिम्बे सर्वमन्यत्समं भवेत् ॥ ८६ ॥

एवं कर्तुमशक्तश्चेद्ध्रुवपूजां समाचरेत् ।
भयरक्षार्थनिष्कृतिः
अतः परं प्रवक्ष्यामि भयरक्षार्थनिष्कृतिम् ॥ ८७ ॥

चोरशत्रुभये वाऽथ परचक्रभयेऽथवा ।
रक्षार्थं कौतुकादीनां स्नापनोत्सवबेरयोः ॥ ८८ ॥

अन्यलौकिकबिम्बानां प्रादुर्भावगणस्य च ।
जङ्गमाः प्रतिमाश्चैव भूमिगुप्तिक्रियोचिताः (?) ॥ ८९ ॥

गुप्ते चैव शुचौ देशेऽप्यवटं खानयेद्बुधः ।
सिकतास्तत्र निक्षिप्य महीदेवीं समर्चयेत् ॥ ९० ॥

'आपो हि' ष्ठेति मन्त्रेण सम्प्रोक्ष्य च यथाविधि ।
आचार्योऽप्यर्चको वाऽपि यजमानयुतस्तथा ॥ ९१ ॥

देवागारं प्रविश्यैव भक्तैस्सार्धं प्रणम्य च ।
'यावत्कालं भयं माभूत्तावत्कालं महाप्रभो ॥ ९२ ॥

अत्रे देशे श्रिया भूम्या वस त्वं वै जनार्दन' ।
इति मन्त्रेण देवेशमनुमान्य यथाविधि ॥ ९३ ॥

कौतुकादिषु बिम्बेषु तथा पारिषदेषु च ।
आहितां शक्तिमादाय ध्रुवे चारोपयेद्बुधः ॥ ९४ ॥

'परं रंहे' ति मन्त्रेण देवमादत्य यत्नतः ।
'प्रतद्विष्णु स्तव' तेति देवं सन्नम्य चादरात् ॥ ९५ ॥

'यद्वैष्णव' मिति प्रोच्य प्राक्छिरश्शाययेत्तथा ।
अवटं सिकताभिश्च मृत्तिकाभिश्च पूरयेत् ॥ ९६ ॥

सुदृढं कारयेत्पश्चादालयान्तः प्रविश्य च ।
देवदेवं प्रणम्यैव जीवस्थाने च सन्न्यसेत् ॥ ९७ ॥

कूर्चं तत्र समभ्यर्च्य नित्यं नैमित्तिकं चरेत् ।
ध्रुवबेरात्तथा शक्तिं कूर्चे चाऽवाह्य पूजयेत् ॥ ९८ ॥

तत्रापि भयसन्देहे विघ्निते चापि पूजने ।
अर्चकस्त्वरितो गत्वा देवं ध्यात्वा समाहितः ॥ ९९ ॥

'आयातु भगवानि' ति च 'याते अग्न' इति ब्रुवन् ।
बेरस्थां शक्तिमग्निञ्च स्वात्मन्यारोप्य शीघ्रतः ॥ १०० ॥

जपन् शकुनसूक्तन्तु गुप्तं देशं समाश्रयेत् ।
यथासुखं तथा गच्छेत्प्रमादरहितं स्थलम् ॥ १०१ ॥

यदि स्यात्स्वर्णजं बिम्बं गृहीत्वा सह गच्छति ।
तत्राऽवाह्यार्चयेन्नित्यमुत्सवादीनि कारयेत् ॥ १०२ ॥

बल्युत्सवाभ्यां रहितं नित्यं नैमित्तिकं तथा ।
अभ्युक्षणञ्च स्नपनं यथशक्ति च कारयेत् ॥ १०३ ॥

सुवर्णबिम्बरहिते कूर्चे सर्वञ्च कारयेत् ।
वर्तमानेऽर्चनेऽप्येवमर्चके व्याधिपीडिते ॥ १०४ ॥

शक्त्यावाहनतः पूर्वमर्चके मृतिसंशये ।
तत्काले त्वरितस्सोऽपि स्वपुत्रेषु च भ्रातृषु ॥ १०५ ॥

देवशक्तिं तदग्निञ्च सम्यगारोपयेद्बुधः ।
पुत्रे भ्रातरि नष्टेऽपि कूर्चे चाऽवाह्य चादरात् ॥ १०६ ॥

आराधयेद्देवमेव भयनिर्हरणे पुनः ।
काले स्वस्थे तथा देशे बिम्बान्युत्थाप्य चादरात् ॥ १०७ ॥

संशोध्य चाऽलयं सर्वं पुण्याहमपि वाचयेत् ।
अस्पृश्यस्पर्शने चैव वास्तुहोमञ्च कारयेत् ॥ १०८ ॥

चण्डालाद्यन्त्यजातैश्च बिम्बे स्पृष्टेऽथवा पुनः ।
कृत्वा जलाधिवासादीन् प्रतिष्ठां पुनराचरेत् ॥ १०९ ॥

कालापेक्षां न कुर्वीत कृत्वा वाऽप्यङ्कुरार्पणम् ।
प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां सम्यगाचरेत् ॥ ११० ॥

अर्चको हृद्गतां शक्तिं कुम्भे चाऽवाहयेत्क्रमात् ।
एष एव विशेषः स्यादन्यत्सर्वञ्च पूर्ववत् ॥ १११ ॥

नित्यार्चनविधानेन नित्यपूजां समाचरेत् ।
नित्यहोमञ्च हुत्वा तु बलिं तत्र प्रदापयेत् ॥ ११२ ॥

औत्सवादिष्वलब्धेषु सर्वं कुर्याच्च कौतुके ।
( बिम्बानि स्थापयेद्भूमौ गुप्ते देशे सुरक्षितम् ॥

कौतुकादिगतां शक्तिं ध्रुवबेरे निवेश्य च ।
पुनर्दर्भास्तृते श्वभ्रे निखनेत्सुदृढं यथा ॥

पूर्ववत्प्रार्थनामन्त्रमुक्त्वा सम्यग्विधीयते ।
'यावत्कालं भयं नास्ति तावत्कालन्तु तत्र वै ॥

अत्र देशे श्रिया भूम्या वस त्वं हे जनार्दन ' ।
इत्युक्त्वा प्रार्थनामन्त्रं जप्त्वा देवं प्रणम्य च ॥

कौतुकादीन् समावाह्य तस्मिन् गर्ते तु शाययेत् ।
सिकताभिः प्रपूर्यैव तद्गर्तं सुदृढं यथा ॥

तत्तत्स्थानेषु सर्वेषु द्वादशाङ्गुलसम्मितम् ।
सन्न्यस्य कूर्चं प्रत्येकं तत्राऽवाह्य समर्चयेत् ॥

अर्चनान्ते पुनस्तस्मादुद्वासनमथाऽचरेत् । )
स्नपने तत्र सम्प्राप्ते ध्रुवे बद्ध्वैव कौतुकम् ॥ ११३ ॥

तस्मात्कूर्चे समावाह्य तद्द्रव्यैः प्रोक्षणं चरेत् ।
समभ्यर्च्य निवेद्यैव तथैवोद्वासयेत्पुनः ॥ ११४ ॥

कालोत्सवस्य सम्प्राप्तौ ध्वजमारोप्य पूर्ववत् ।
होमञ्च बलिदानञ्च नित्यं विधिवदाचरेत् ॥ ११५ ॥

चक्रवीशामितान् पात्रेष्वावाह्याऽभ्यर्चनां चरेत् ।
विधिना बलिमाराध्य प्रदक्षिणमथाऽचरेत् ॥ ११६ ॥

उत्सवान्ते बलेश्शक्तिं ध्रुवबेरे निवेश्य च ।
तस्मात्कूर्चे समावाह्य प्रभूतञ्च निवेदयेत् ॥ ११७ ॥

ध्रुवबेरे समारोप्य दद्यात्पुष्पाञ्जलिं पुनः ।
ततस्तीर्थदिने प्रातरुत्सवे च कृते सति ॥ ११८ ॥

निशाचूर्णाभिषेकञ्च स्नपनं कलशैरपि ।
कृत्वा तु कूर्चे देवाग्रे स्नपनं पुनराचरेत् ॥ ११९ ॥

आरम्भदिवसे कुम्भं संसाध्य ध्रुवबेरतः ।
दीपाद्दीपमिवावाह्य तेन कृत्वोत्सवं पुनः ॥ १२० ॥

तीर्थान्ते स्नपनान्ते तु पुनरुद्वासयेद्ध्रुवे ।
कालोत्सवे तु विच्छिन्ने प्रायश्चित्तं समाचरेत् ॥ १२१ ॥

सुकाले बिम्बमुद्धृत्य प्रतिष्ठां पुनराचरेत् ।
सभ्याब्जकुण्डे द्वे कृत्वा नित्यमग्निं प्रणीय च ॥ १२२ ॥

पुनःप्रतिष्ठामार्गेण सर्वं कुर्याद्यथाविधि ।
कौतुकादिषु गुप्तेषु विच्छिन्ने वा ध्रुवार्चने ॥ १२३ ॥

कृत्वा तु ध्रुवबेरस्य अर्चनाहीननिष्कृतिम् ।
तस्मात्तु कौतुकादीनां प्रतिष्ठामाचरेत्पुनः ॥ १२४ ॥

चण्डालाद्यन्त्यजस्पर्शे पायश्चित्तं तदीरितम् ।
हुत्वा शुद्धिं पुनः कृत्वा प्रतिष्ठां पुनराचरेत् ॥ १२५ ॥

अङ्गहीनं यदि भवेत् ध्रुवबेरं तदेव हि ।
अयुक्तं यदि चोद्धर्तुं कौतुकस्नापनौत्सवाः ॥ १२६ ॥

कृत्वा च दारवं बिम्बं याचितं बिम्बमेव वा ।
बालालये प्रतिष्ठाप्य नवीकरणमाचरेत् ॥ १२७ ॥

महाप्रतिष्ठामार्गेण प्रतिष्ठां पुनराचरेत् ।
(भिन्ने घटे यथाकाशं महाकाशे प्रलीयते ॥ १२८ ॥

बेरनाशे तथा शक्तिर्विश्वस्मिन्नेव लीयते ।)
प्राक्प्रत्यग्दक्षिणादिक्षु विदिक्षु च तथाऽऽनते ॥ १२९ ॥

कुक्षिच्छिद्रे तथा दीर्घे पार्श्वहीने कटिक्षये ।
ऊरुजङ्घाक्षये चैव मुखशोषे तथैव च ॥ १३० ॥

मकुटे दोषसंयुक्ते सर्वोपाङ्गक्षये तथा ।
प्रमाणपरिहीने च पादगुल्फक्षये तथा ॥ १३१ ॥

कर्णनासाक्षये चापि क्षिप्रं शान्तिञ्च कारयेत् ।
आलयाद्दक्षिणे चाग्नौ जुहुयात्पारमात्मिकम् ॥ १३२ ॥

'ईङ्कारादीं' श्च जुहुयादष्टाशीत्याहुतिं तथा ।
तद्दैवत्यञ्च जुहुयादष्टोत्तरसहस्रकम् ॥ १३३ ॥

ब्राह्मणान्भोजयित्वैव दद्यादाचार्यदक्षिणाम् ।
तत्तल्लक्षणसम्पन्नं कृत्वा संस्थापयेत्पुनः ॥ १३४ ॥

तत्तदुक्तपदादन्यपदेषु स्थापयेद्यदि ।
ऊर्ध्वदृष्ट्यादिदोषेषु ऊर्ध्वदृष्ट्यामधोदृष्ट्यां तिर्यग्दृष्ट्यां तथैव च ॥ १३५ ॥

असौम्यक्रूरदृष्ट्याञ्च प्रायश्चित्तं समाचरेत् ।
वैष्णवं पश्चिमेऽब्जाग्नौ तद्दैवत्यं शताष्टकम् ॥ १३६ ॥

'ईङ्कारादीं' स्तु जुहुयादष्टाशीतिमतः परम् ।
भोजयित्वा तथा विप्रानाचार्यादींश्च पूजयेत् ॥ १३७ ॥

संस्थाप्योक्तपदे सम्यग्विधिना चार्चयेत्पुनः ।
ध्रुवकौतुकपीठे मानहीने
ध्रुवकौतुकयोः पीठे मानहीनेऽधिकेऽपि च ॥ १३८ ॥

तद्दैवत्यञ्च जुहुयादष्टाधिकसहस्रकम् ।
मन्त्रैश्च परिवाराणां हुत्वा विप्रांश्च भोजयेत् ॥ १३९ ॥

सलक्षणं तथा पीठं कृत्वा संस्थापयेत्पुनः ।
रत्नन्यासविहीने तु [1]पीठसङ्घातकर्मणि ॥ १४० ॥

चालयित्वा ततः पीठाच्छान्तिहोमावसानके ।
रत्नन्यासं तथा कृत्वा पुनस्सङ्घातमाचरेत् ॥ १४१ ॥

रत्नन्यासे कृते पद्मसङ्घाते मन्त्रवर्जिते ।
शान्तिं हुत्वा विधानेन तत्तन्मन्त्रं स्पृशन् जपेत् ॥ १४२ ॥

यद्याग्नेयविधानेन केवलं शिल्पिनाऽथवा ।
कृते तु पद्मसङ्घाते संस्थाप्य कलशैस्तथा ॥ १४३ ॥

हुत्वा पश्चान्महाशान्तिं तत्तन्मन्त्रं जपेत्तथा ।
तथैव मूलबेरे तु स्थापिते केवलस्थले ॥ १४४ ॥

देवं विशेषतोऽभ्यर्च्य 'क्षम' स्वेति प्रणम्य च ।
कुम्भे देवं समावाह्य पीठं कृत्वा सलक्षणम् ॥ १४५ ॥

पीठे देवं समारोप्य शान्तिं हुत्वा यथाविधि ।
पर्यग्निपञ्चगव्याभ्यां पुण्याहेन च शोधयेत् ॥ १४६ ॥

1. पद्मसङ्घातकर्मणि क.

पञ्चगव्याधिवासादीन् कृत्वा संस्नाप्य पूर्ववत् ।
प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत् ॥ १४७ ॥

नवाहं वाऽथ सप्ताहं पञ्चाहं त्रियहन्तु वा ।
देवं विशेषतोऽभ्यर्च्य 'क्षम' स्वेति प्रणम्य च ॥ १४८ ॥

ब्राह्मणान् भोजयित्वा तु दद्यादाचार्यदक्षिणाम् ।

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
कौतुकबेरप्रायश्चित्तविधिर्नामैकविंशोऽध्यायः ॥

# द्वाविंशोऽध्यायः

स्थापनदोषप्रपञ्चः

यथोक्तगुणहीनेन गुरुणा स्थापकादिभिः ।
उक्तदोषयुतैर्वाऽपि स्थापिते पुरुषोत्तमे ॥ १ ॥

त्रिरात्रं तां महाशान्तिमब्जानौ जुहुयात्पुनः ।
उक्तलक्षणसम्पन्नगुरुणा स्थापयेत्पुनः ॥ २ ॥

यत्स्थानं यदधीनं स्यात् स तस्याऽचार्य उच्यते ।
स चेदयुक्तस्त्वन्येन सर्वकर्माणि कारयेत् ॥ ३ ॥

स कुर्यादन्य आचार्यस्तदनुज्ञापुरस्सरम् ।
अन्यथा यजमानस्य ग्रामस्य च विपद्भवेत् ॥ ४ ॥

पौण्डरीके महाशान्तिमेकाहं जुहुयात्पुनः ।
अनुक्तपक्षनक्षत्रराशिषु स्थापने कृते ॥ ५ ॥

पुनः प्रतिष्ठामार्गेण प्रतिष्ठां पुनराचरेत् ।
अक्ष्युन्मेषाधिवासौ तु अकृत्वा स्थापयेद्यदि ॥ ६ ॥

कृत्वा तु पूर्ववत्तत्त् प्रतिष्ठां पुनराचरेत् ।
बहुद्रव्यक्रियाहीने क्रियाणाञ्च विपर्यये ॥ ७ ॥

कुम्भपूजाविहीने च ध्यानहीने विपर्यये ।
स्नपने च विहीने वै तथा कौतुकबन्धने ॥ ८ ॥

शयने च तथा हौत्रे देवतावाहने तथा ।
तथा होमेषु हीनेषु विपर्यासे च केषु च ॥ ९ ॥

रत्नादिन्यासहीने च ध्रुवकौतुकयोस्तथा ।
आचार्यबुद्धिक्षोभे च प्रतिष्ठायां विशेषतः ॥ १० ॥

तस्मिन् काले महोत्पाते दुर्निमित्तस्य दर्शने ।
एवं महाप्रतिष्ठायां दोषान्तरसमागमे ॥ ११ ॥

पुनःप्रतिष्ठा कर्तव्या तस्य दोषस्य शान्तये ।
अक्ष्युन्मेषाधिवासौ च रत्नादिन्यासमेव च ॥ १२ ॥

एतान् पुनःप्रतिष्ठायां नाचरेदिति शासनम् ।
यद्यत्तेषु विहीनं स्यात्तत्तत्कृत्वा समाचरेत् ॥ १३ ॥

पञ्चाग्नीन् पौण्डरीकाग्निं सभ्याग्निमिति केचन ।
पुनःप्रतिष्ठा यत्रोक्ता तत्र तत्रैवमेवहि ॥ १४ ॥

कृत्वा नित्याग्निविच्छेदे पञ्चाग्नीन् पूर्ववद्बुधः ।
आधाय गार्हपत्याग्नेः प्रणीयान्येषु वै ततः ॥ १५ ॥

यथोक्तहोमं जुहुयात्सर्वमन्यत्समं भवेत् ।
देव्योः पृथक्प्रतिष्ठायां स्नापनोत्सवयोस्तथा ॥ १६ ॥

उत्सवे स्नपने चैव त्वालयाङ्गान्यकर्मणाम् ।
नित्यमेवं प्रणीयाग्निं जुहुयादिति शासनम् ॥ १७ ॥

अनेकदिनसाध्यञ्चेदेकदेशं ततो हरेत् ।
शेषाग्नौ नित्यहोमञ्च कृत्वा कर्मावसानके ॥ १८ ॥

नित्यकुण्डे प्रणीयाग्निं वैष्णवं जुहुयात्सकृत् ।
प्राकारगोपुरादीनां संस्कारे मण्डपस्य च ॥ १९ ॥

मथिताग्निविचारः

परिवारप्रतिष्ठायां तत्परिच्छदसंस्कृतौ ।
मथितं लौकिकं वाऽग्निमादाय जुहुयादिति ॥ २० ॥

यागशालादौ प्रमाणविधुरे

प्रमाणे यागशलायां हीने वाऽधिक एव वा ।
शय्यावेद्याः प्रमाणे च अलङ्कारे च वर्जिते ॥ २१ ॥

अन्यदेशे कृते वाऽपि जुहुयाद्भूमिदैवतम् ।
तद्दिक्पालकमन्त्रञ्च विष्णुसूक्तं सवैष्णवम् ॥ २२ ॥

हुत्वा च पौरुषं सूक्तं दद्यादन्नादि शक्तितः ।
यज्ञोपस्करमन्त्राणां द्रव्याणाञ्च विपर्यये ॥ २३ ॥

आग्नेयं जुहुयाद्ब्राह्मं शक्तितो दक्षिणां ददेत् ।
शिलालोष्टेष्टकावृक्षैरग्निकुण्डे कृते सति ॥ २४ ॥

वैष्णवं भौतिकं हुत्वा सावित्र्याऽष्टशतं यजेत् ।
अग्निकुण्डप्रमाणे च हीने वाऽधिक एव वा ॥ २५ ॥

ब्राह्मं सौम्यं तथाऽऽग्नेयमादित्यं जुहुयात्क्रमात् ।
मथितेऽग्नौ तु विच्छिन्ने मथित्वाऽग्निं प्रगृह्य च ॥ २६ ॥

यज्ञपात्राणां प्रमाणहानौ

आग्नेयं चरुणा हुत्वा गृह्णीयात्तं हुताशनम् ।
परिस्तरणकूर्चानां परिधीनां तथैव च ॥ २७ ॥

आज्यस्थाल्यादिपात्राणां स्रुवादीनां तथैव च ।
प्रमाणहीने न्यूने च होमे होमे प्रति प्रति ॥ २८ ॥

मिन्दाहुती च सावित्रीं व्याहृतीर्जुहुयात्क्रमात् ।
स्रुवादीनामलाभे तु पालाशस्य तथैव च ॥ २९ ॥

किंशुकस्याथवा मध्यपत्रेणैव प्रकल्पयेत् ।
अथवाऽश्वत्थपत्रेण कृत्वा होमं यथाविधि ॥ ३० ॥

स्रुवादीनि च [1]पात्राणि पर्वतानष्टमङ्गलान् ।
वेदं प्रोक्षणकूर्चञ्च प्रोक्षणीपात्रमेव च ॥ ३१ ॥

प्रणिध्यावाज्यपात्रञ्च तोरणानि तथैव च ।
पुनःपुनश्च कर्मार्थं गृह्णीयात्तत्तदालये ॥ ३२ ॥

नान्यालयार्थं गृह्णीयादिति पूर्वजशासनम् ।
[2]लोहेन वा तथा कुर्यात्स्रुवादीनीति केचन ॥ ३३ ॥

ब्रह्मसोमकूर्चकल्पनम्

रत्निमात्रायतौ कूर्चौ न्यसेद्दक्षिणवामयोः ।
तत्राऽवाह्य समभ्यर्च्य ब्रह्मसोमौ प्रकल्पयेत् ॥ ३४ ॥

---

1. पवित्रान्. ख. 2. लोहेनैव. ख.

तत्क्रियान्ते तथोद्वास्य दद्याद्ब्राह्मणभोजनम् ।
स्थाल्यामाज्ये चरौ वाऽथ मक्षिकायाः कृमेरपि ॥ ३५ ॥

रोम्णः पिपीलिकादीनां पतने तद्व्यपोह्य च ।
हव्यमन्यत्समादाय प्राजापत्यं यजेत्ततः ॥ ३६ ॥

आग्नेयं वैष्णवञ्चैव जुहुयात्तस्य शान्तये ।
अन्यालाभे तु तद्दोषमपोह्यैव प्रयत्नतः ॥ ३७ ॥

दर्भैरुद्दीप्य चोत्पूय प्रायश्चित्तञ्च पूर्ववत् ।
जुहुयात्तद्विशुद्ध्यर्थं पुनरुत्पूय चाऽहरेत् ॥ ३८ ॥

विच्छिन्ने तु प्रणीताग्नौ 'वयं ते योनि' रित्यृचा ।
समिद्ध्यारोप्य तद्भस्म लौकिकाग्नौ निधाय ताम् ॥ ३९ ॥

आधाय परिषिच्याग्निं विच्छिन्नं जुहुयात्पुनः ।
मिन्दाहुती वैष्णवञ्च व्याहृतीर्जुहुयात्क्रमात् ॥ ४० ॥

एवमग्निं सुसंसाध्य शेषञ्च जुहुयात्तथा ।
आज्येऽग्नौ वा जले क्षिप्ते चाऽग्नेयं वैष्णवं तथा ॥ ४१ ॥

व्याहृत्यन्तं यजित्वा तु शेषं कर्म समाचरेत् ।
समित्परिधिदर्भाणामलाभेऽक्षतपुष्पयोः ॥ ४२ ॥

वैष्णवं व्याहृतीर्हुत्वा पुनस्तानि समाहरेत् ।
परिस्तरणदर्भाणां परिधीनां तथैव च ॥ ४३ ॥

तथोर्ध्वसमिधोर्दाहे भेदे छेदे च नाशने ।
तद्यथास्थानमाक्षिप्य महाव्याहृतिभिर्यजेत् ॥ ४४ ॥

मिन्दाहुती तथाऽऽग्नेयं वैष्णवं व्याहृतीरपि ।
पार्श्वेऽग्नौ ज्वलिते तस्मिन् समिध्याज्ये चरौ हुते ॥ ४५ ॥

तत्तद्दिग्देवताहोमं जुहुयादुपलक्ष्य च ।
वायव्यं वैष्णवं हुत्वा पुनस्तेन च हूयते ॥ ४६ ॥

आज्येन माहिषेणाथ तैलमिश्रघृतेन वा ।
जुहुयाच्चेत्प्रमादेन भवेत्तद्धुतमासुरम् ॥ ४७ ॥

अष्टोत्तरसहस्रञ्च पद्महोमं जुहोति च ।
व्याहृतीर्जुहुयादन्ते तस्य दोषस्य शान्तये ॥ ४८ ॥

उक्तद्रव्यविहीने तु कापिलेन घृतेन वै ।
देवेशं मनसा ध्यात्वा वैष्णवं विंशतिं यजेत् ॥ ४९ ॥

क्रियामन्त्रविपर्यासे लोपे चाग्निं प्रणम्य च ।
प्रणम्य विष्णुं देवेशं वैष्णवं व्याहृतीर्यजेत् ॥ ५० ॥

यज्ञभ्रेषप्रायश्चित्तम् यज्ञकर्मणि सर्वत्र सूक्तं वैश्वानरं जपेत् ।
यज्ञकर्मणि सर्वत्र न्यूने हीने विपर्यये ॥ ५१ ॥

प्रायश्चित्तं विशेषेण [1]यस्य नोक्तन्तु तत्र वै ।
वैष्णवं विष्णुसूक्तञ्च सूक्तं तत्पौरुषं यजेत् ॥ ५२ ॥

'शन्नो मित्रे'ति शान्तिञ्च जप्त्वा सूक्तञ्च पौरुषम् ।
वैष्णवं विष्णुसूक्तञ्च जपेत् ध्यायन् हरिं परम् ॥ ५३ ॥

वैष्णवेनैव होमेन वैष्णवेन जपेन च ।
सर्वकर्मसु यन्न्यूनं तत्सम्पूर्णं भवेद्ध्रुवम् ॥ ५४ ॥

यदाह 'यज्ञो वै विष्णु'रिति नित्यश्रुता श्रुतिः ।
अलाभे प्रतिनिधिः रत्नादीनामलाभे तु तत्तत्प्रतिनिधिं हरेत् ॥ ५५ ॥

रत्नादीनां क्रमात्तेषां सुवर्णं पारदं यवम् ।
रत्नानां विष्णुसूक्तञ्च वैष्णवञ्च यजेत्तथा ॥ ५६ ॥

प्रायश्चित्तन्तु धातूनां दिग्दैवत्यं सवैष्णवम् ।
बीजे वैष्णववायव्यौ प्रत्येकं विंशतिं यजेत् ॥ ५७ ॥

---

1. यत्र क.

वस्त्रे लक्षणहीने च छिन्ने भिन्ने तथैव च ।
तत्त्यक्त्वाऽन्यत्प्रगृह्यैव श्रीमन्त्रं वैष्णवं यजेत् ॥ ५८ ॥

अण्डजादिष्वलब्धेषु पृथग्वस्त्राणि चाऽऽहरेत् ।
तत्तत्प्रतिनिधिं ध्यात्वा शयनानि प्रकल्पयेत ॥ ५९ ॥

वैष्णवं ब्रह्मदैवत्यं श्रीदैवत्यं शतं यजेत् ।
तोरणेष्वप्रमाणेषु द्वारपालकदैवतम् ॥ ६० ॥

यजेद्विंशतिकृत्वश्च दर्भमालाविवर्जिते ।
आर्षञ्च वैष्णवं हुत्वा ततः पश्चात्प्रकल्पयेत् ॥ ६१ ॥

कुम्भे विशेषः

प्रमाणहीने कुम्भे च स्फुटिते कालसंयुते ।
वस्त्रयुग्मे च रत्नेषु यथोक्तेष्वायुधादिषु ॥ ६२ ॥

सौवर्णेषु च हीनेषु न स्याद्देवस्य सन्निधिः ।
आदाय तस्मात्सर्वाणि क्षिप्त्वा पश्चात्प्रयत्नतः ॥ ६३ ॥

जुहुयात्पौरुषं सूक्तं विष्णुसूक्तञ्च वैष्णवम् ।
पृथगेव त्रयस्त्रिंशन्मुनिमन्त्रञ्च विंशतिम् ॥ ६४ ॥

ब्राह्मञ्चैव त्रयस्त्रिंशदाग्नेयञ्च दशैव च ।
पारमात्मिकमोङ्काराद्यष्टाशीतिं सकृत्सकृत ॥ ६५ ॥

ब्राह्मणान् भोजयित्वा तु गुरवे दक्षिणां ददेत ।
भिन्ने तु साधिते कुम्भे पतिते वा प्रमादतः ॥ ६६ ॥

तस्य दोषस्य शान्त्यर्थं वैष्णवं ब्राह्मसंयुतम् ।
पौरुषं विष्णुसूक्तञ्च प्रत्येकं तु शताष्टकम् ॥ ६७ ॥

हुत्वा द्विसप्त गा दत्वा पश्चाद्विप्रांश्च भोजयेत् ।
कुम्भमन्यत्समादाय पूर्ववत्साधयेत्पुनः ॥ ६८ ॥

कुक्कुटैश्च श्वकाकाद्यैरस्पृश्यैः पतितैरपि ।
कुम्भे तु साधिते स्पृष्टे तं त्यक्त्वाऽन्यं सुसाधयेत् ॥ ६९ ॥

अब्जाग्नौ वैष्णवं ब्राह्मं सौरमाग्नेयमेव च ।
पौरुषं वैष्णवं सूक्तं प्रत्येकं च शताष्टकम् ॥ ७० ॥

हुत्वा द्विसप्त गा दत्वा ब्राह्मणान् भोजयेत्पुनः ।
बिम्बस्पर्शविषयः बिम्बे त्वस्पृश्यसंस्पृष्टे शोधयित्वा यथाविधि ॥ ७१ ॥

स्नापयित्वा तु कलशैर्जुहुयात्पूर्वनिष्कृतिम् ।
होमकुण्डे स्पर्शादिदुष्टे श्वकुक्कुटसृगालैश्च होमे स्पृष्टे च वायसैः ॥ ७२ ॥

अस्पृश्यैरपि तत्कुण्डं शोधयित्वा व्यपोह्य च ।
कुण्डं सलक्षणं कृत्वा चाऽघारं जुहुयात्क्रमात् ॥ ७३ ॥

आग्नेयं वैष्णवं मूलहोमं वै पञ्चवारुणम् ।
पुनरलाभे प्रतिनिधिः पृथक्पृथक् शतं हुत्वा दत्वा गां पूजयेद्द्विजान् ॥ ७४ ॥

उक्तस्रुचामलाभे तु स्रुवेणैवाथवा यजेत् ।
तत्तद्रूपं तथा ध्यात्वा तत्तन्मन्त्रैः जुहोति च ॥ ७५ ॥

जुहुयादार्षकं मन्त्रं वैष्णवं ब्राह्मसंयुतम् ।
पालाशीं वा तथाऽऽश्वत्थीमलाभे समिधं हरेत् ॥ ७६ ॥

आज्यं वा माहिषं क्षीरं दध्याज्यं वा न चाऽहरेत् ।
गृह्णीयाच्चेत्तदज्ञानात्तस्य दोषस्य शान्तये ॥ ७७ ॥

वैष्णवं ब्राह्ममाग्नेयं सौरञ्च व्याहृतीर्यजेत् ।
नदीतटाककुल्यासु कुण्डार्थं शुद्धमृत्तिकाम् ॥ ७८ ॥

सिकाता वाऽथ गृह्णीयाद्गृह्णीयाद्यदि चान्यथा ।
वारुणं वैष्णवं हुत्वा प्रोक्षणैः प्रोक्ष्य चाऽहरेत् ॥ ७९ ॥

इन्धनादौ जन्तुकण्टकलेपादिदोषयुक्तं सधूमकम् ।
दुर्धूममिन्धनं सार्द्रं न गृह्णीयात्कदाचन ॥ ८० ॥

प्रक्षिपेद्यदि तत्त्यक्त्वा शुभमन्यत्प्रगृह्य च ।
क्षिप्त्वाऽग्नौतु तथाऽऽग्नेयं वैष्णवं व्याहृतीर्यजेत् ॥ ८१ ॥

कल्पिते देवयागार्थं दग्धे द्रव्येऽम्बरादिके ।
दर्भादौ च प्रपायां वा द्रव्येऽनुक्ते च सर्वशः ॥ ८२ ॥

जुहुयाद्वैष्णवं ब्राह्मं सौरमाग्नेयसंयुतम् ।
एकविंशतिकृत्वस्तु तस्य दोषस्य शान्तये ॥ ८३ ॥

देवोद्धारे
उद्धृते शयिते बिम्बे पूर्वमर्कोदयात्तथा ।
चतुष्कृत्वस्तु जुहुयादेव्योर्मन्त्रान् सवैष्णवान् ॥ ८४ ॥

शयनं कल्पयित्वान्यच्छाययित्वा यथा पुरा ।
मुहूर्ते समनुप्राप्ते प्रतिष्ठामाचरेत्पुनः ॥ ८५ ॥

आचार्यादीनां कलहे
आचार्यस्थापकादीनां भर्त्सने शपने तथा ।
येन केनापि हनने तस्य दोषस्य शान्तये ॥ ८६ ॥

पौरुषं वैष्णवं ब्राह्मं सूक्तं सारस्वतं यजेत् ।
दक्षिणाहीने
यथोक्तदक्षिणाहीने आचार्यस्यर्त्विजामपि ॥ ८७ ॥

पदार्थिनस्त एवात्र तत्कर्मफलमाप्नुयुः ।
हन्त्यल्पदक्षिणो यागो यजमानं न संशयः ॥ ८८ ॥

भ्रूणहत्यामवाप्नोति यजमानो न संशयः ।
अष्टोत्तरशतं हुत्वा मुनिमन्त्रञ्च वैष्णवम् ॥ ८९ ॥

दक्षिणाञ्च पुनस्तेभ्यो दद्यादेव यथोचितम् ।
पञ्चमूर्तिप्रतिष्ठायां विशेषः
पञ्चमूर्तिप्रतिष्ठायां होमं वै कुम्भपूजनम् ॥ ९० ॥

स्नपनं शयनं सर्वं कुर्यात्तेषां पृथक्पृथक् ।
अज्ञानात्स्नपनादीनि यदि तानि सहाऽचरेत् ॥ ९१ ॥

तत्तद्धोमे च होतव्यं तत्तन्मन्त्रं सहस्रशः ।
बेरद्रव्यविचारः
यद्द्रव्यं मूलबेरं तु तेनैव परिषद्गणान् ॥ ९२ ॥

कारयेद्वीरशान्तार्कदुर्गावाणीविनायकान् ।
नैव दोषप्रदाः शैला अन्यथा तु कृता यदि ॥ ९३ ॥

आभिचारकमित्युक्तं तस्य दोषस्य शान्तयें ।
ब्राह्मं सौरं तथाऽऽग्नेयं [1]शतमष्टोत्तरं यजेत् ॥ ९४ ॥

अङ्गहोमञ्च जुहुयात्पारमात्मिकसंयुतम् ।
जयादींश्चैव श्रीसूक्तं दुर्गासूक्तं ततो यजेत् ॥ ९५ ॥

'ईङ्कारादीं' स्ततो हुत्वा ब्राह्मणानपि भोजयेत् ।
मूलबेरानुरूपांस्तान् कृत्वा च स्थापयेत्पुनः ॥ ९६ ॥

लौहं शैलं दारवं वाऽप्यन्यदुद्दिश्य कल्पितम् ।
विमाने स्थापितं बिम्बं नान्यत्र स्थापयेत्पुनः ॥ ९७ ॥

स्थापितञ्चेन्महाशान्तिं हुत्वा दक्षिणया युतम् ।
तत्र चाऽनीय तद्बिम्बं पूर्ववत् स्थापयेत्तथा ॥ ९८ ॥

राज्ञा राष्ट्रान्तरं जित्वा नीतं बिम्बं भवेद्यदि ।
(प्रतिष्ठा तस्य बिम्बस्य पूर्वमेव मयोदिता) ।
तदुक्तेन प्रकारेण स्थापयित्वा समर्चयेत् ॥ ९९ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
प्रतिष्ठाप्रायश्चित्तविधिर्नाम द्वाविंशोऽध्यायः

---

1. वैशङ्कं देवतान्यपि (?) क.

# त्रयोविंशोऽध्यायः

नवीकरणम्

अतः परं प्रवक्ष्यामि नवीकरणमुत्तमम् ।
प्रासादगोपुरादीनां मण्डपानां तपोधनाः ॥ १ ॥

वर्णनाशे सुधास्फोटे भित्तिभेदे तथैव च ।
शिलेष्टकादिपतने शीघ्रं कर्मेदमाचरेत् ॥ २ ॥

आलयाभिमुखे कृत्वा कुण्डमौपासनस्य च ।
न्यक्षादीनां चतुर्णान्तु मन्त्रान् हुत्वा तु मूर्तिभिः ॥ ३ ॥

देवतानां गलस्थाने स्थापितानां विशेषतः ।
पादवर्गगतानाञ्च हुत्वा मन्त्राननुक्रमात् ॥ ४ ॥

तद्बिम्बान्तर्गतां शक्तिं ध्रुवबेरे निवेश्य च ।
प्राकाराश्रयपीठेषु तत्तद्दिक्षु यथाक्रमम् ॥ ५ ॥

न्यक्षादींश्च समावाह्य दशकृत्वस्तु वैष्णवम् ।
चतुर्वेदादिमन्त्रांश्च हुत्वा चाग्निं विसृज्य च ॥ ६ ॥

शिलेष्टकाप्रक्षेपाद्यैर्दृढं कृत्वा यथाविधि ।
सुधावर्णानुलेपादीन् पूर्ववत्परिकल्प्य च ॥ ७ ॥

पञ्चगव्यैस्समभ्युक्ष्य वास्तुहोमस्सुहूयताम् ।
अब्जाग्नौ वैष्णवं हुत्वा सूक्ते वैष्णवपौरुषे ॥ ८ ॥

व्याहृतीरङ्गहोमञ्च पारमात्मिकसंयुतम् ।
'ईङ्कारादीं' श्च जुहुयादष्टाशीत्याहुतिं तथा ॥ ९ ॥

सहस्राहुतिपर्यन्तं यजेत्तद्दोषशान्तये ।
विमानस्थापनप्रोक्तप्रकारेण यथाविधि ॥ १० ॥

संस्थाप्य तत्तद्बिम्बादीन् न्यक्षादींश्चतुरस्तथा ।
सर्वाणि चान्यकर्माणि कारयेदिति शासनम् ॥ ११ ॥

सर्वेषामेव देवानामालयेषु तथैव च ।
न्यक्षादयो विमानेशाः परिवारालयेषु च ॥ १२ ॥

विमानपतनादौ बालालयः

विमाने पतिते जीर्णे शीघ्रं बालालये ततः ।
देवदेवं प्रतिष्ठाप्य विमानं कारयेत्पुनः ॥ १३ ॥

यत्प्रमाणं यदाकारं यद्द्रव्यञ्च यदालयम् ।
तद्द्रव्यञ्च तदाकारं तत्प्रमाणञ्च कारयेत् ॥ १४ ॥

पौरुषञ्चेत्तदुत्कृष्टप्रमाणाकृतिवस्तुभिः ।
अथवा कारयेत्प्राज्ञः पूर्वनाशे यथोचितम् ॥ १५ ॥

प्राकारादिनाशे

प्राकारेषु विशीर्णेषु तत्प्राकाराधिदैवतैः ।
मन्त्रैर्हुत्वा नवीकृत्य वास्तुहोमं यजेत्पुनः ॥ १६ ॥

परिवारालये जीर्णे न्यक्षादींश्चतुरस्तथा ।
तन्मूलबेरे चारोप्य नवीकृत्य यथापुरा ॥ १७ ॥

तत्प्रतिष्ठाप्रकारेण विमाने स्थापयेत्पुनः ।
गोपुरेषु विशीर्णेषु तद्द्वाराधिपतींस्तथा ॥ १८ ॥

पीठेषु तत्तत्पार्श्वेषु समावाह्याहुतीरतः ।
तत्तन्मन्त्रैश्च हुत्वा तु नवीकृत्य यथापुरा ॥ १९ ॥

तद्द्वारपालकांस्तत्र स्थापयित्वा समर्चयेत् ।
मण्डपादिषु सर्वेषु तत्तत्प्रोक्ताधिदेवताः ॥ २० ॥

ध्रुवबेरे निवेश्यैव नवीकृत्य यथापुरा ।
समावाह्याधिदेवांस्तान् पूर्ववत्स्थापयेद्धरिम् ॥ २१ ॥

नवकर्मणि शुद्धिः

प्रासादादिषु सर्वेषु नवकर्मावसानके ।
सामान्यो वास्तुहोमश्च शुद्धिः पुण्याह एव च ॥ २२ ॥

नवीकरणे केचन नियमाः

एकबेरविमानानां पौरुषाणां विशेषतः ।
तथैवोद्धृतबिम्बानां जीर्णानान्तु [1]पुनः कृतौ ॥ २३ ॥

---

1. पृथक्. क.

पूर्वप्रमाणादधिकं यदि कुर्यान्न दोषकृत् ।
[1]पदानुगुणमेवैतत् परितो वर्धयेत्तथा ॥ २४ ॥

पूर्वं मृदालयश्चेत्तदिष्टकाद्यैः प्रकल्पयेत् ।
परितो वर्धयित्वैव कल्पयेदालयं तथा ॥ २५ ॥

प्राकाराणान्तु जीर्णानां पुनस्सन्धानकर्मणि ।
अथवा मृण्मयानाञ्च तथा वृद्धिं यदीच्छति ॥ २६ ॥

परितो वर्धयेदेव प्राच्युदीच्योरथापि वा ।
यद्यग्रे ग्रामवाथी स्यात्त्रिषु वाऽन्येषु वर्धयेत ॥ २७ ॥

शालानां मण्डपानाञ्च पार्श्वयोरग्रतस्तथा ।
वृद्धिं कुर्याद्विशेषेण प्राच्युदीच्योरथापि वा ॥ २८ ॥

उदीच्यामग्रतश्चैव वर्धयेत्पचनालयम् ।
एकतस्सङ्कटश्चेत्तु नदीसागरपर्वतैः ॥ २९ ॥

वर्धयेदन्यपार्श्वेषु नात्र कार्या विचारणा ।
दक्षिणापरवृद्धिश्च क्षयश्चापि न जातुचित ॥ ३० ॥

प्राकारमण्डपादीनां शालानाञ्च समाचरेत् ।
पुराणमन्दिरेषु नियमाः
पौराणिकविमानानां वृद्धिं वाऽपि न कारयेत ॥ ३१ ॥

ग्रामाग्रहारनगरपत्तनाद्यनुकर्मसु ।
अगर्भदैवतं वास्तु परितो वर्धयेत्समम् ॥ ३२ ॥

नैव विन्यासभेदेन यदि भेदो विनश्यति ।
विमानं येन हस्तेन प्रमितं तेन कारयेत ॥ ३३ ॥

प्राकारमण्डपादीनि नाधिकेन कदाचन ।
स्थापयेदुत्तमं बेरमालये मध्यमेऽधमे ॥ ३४ ॥

1. यथानुगुणं. आ.

अन्यथा यदि कुर्वीत राजराष्ट्रं विनश्यति ।
तस्मात्सर्वप्रयत्नेन यथाविधि समाचरेत् ॥ ३५ ॥

ध्रुवबेरजीर्णोद्धारः

वक्ष्यामि ध्रुवबेरस्य जीर्णोद्धारमतः परम् ।
जीर्णे छिन्ने तथा भिन्ने स्फुटिते वर्णसङ्क्षये ॥ ३६ ॥

बालालयमथाऽऽग्नेय्यां याम्यनैर्ऋतयोस्तथा ।
वारुण्यां वा प्रकुर्वीत यथाविभवविस्तरम् ॥ ३७ ॥

बालालयप्रतिष्ठोक्तप्रकारेण ततः परम् ।
बालालये प्रतिष्ठाप्य नवीकरणमाचरेत् ॥ ३८ ॥

दृश्यते यत्र दोषस्तु तत्र संस्कारमाचरेत् ।
वर्णे वाऽप्यनुवर्णे वा स्फुटितं दृश्यते यदि ॥ ३९ ॥

निपुणैश्शिल्पिभिश्शुद्धैस्तद्वर्णं तत्र योजयेत् ।
पटादूर्ध्वन्तु दोषश्चेत्तत्तत्कुर्यात्तु पूर्ववत् ॥ ४० ॥

दोषयुक्ते पटे वाऽपि पटं सर्वं व्यपोह्य च ।
पटमाच्छाद्य विधिना कारयेदुपरि क्रियाम् ॥ ४१ ॥

शूलोर्ध्वे दोषयुक्तश्चेदाशूलं शोधयेत्तथा ।
मृण्मये दारवे शैले शर्करालेपनादिकाः ॥ ४२ ॥

कारयित्वा क्रियास्सर्वाः बेरं सम्यक्प्रकल्पयेत् ।
शूले च मृण्मये जीर्णे सर्वमब्धौ[1] विसृज्य च ॥ ४३ ॥

दारुसङ्ग्रहणं कृत्वा शूलं संस्थाप्य पूर्ववत् ।
समुद्रे दारवं जीर्णं त्यक्त्वान्यत्स्थापयेत्तथा ॥ ४४ ॥

अङ्गहीनं तथा शैलं बेरं प्रक्षिप्य तोयधौ ।
शिलां गृहीत्वा विधिना कृत्वा बेरञ्च पूर्ववत् ॥ ४५ ॥

संस्थाप्य विधिना पश्चाद्बेरं कुर्याद्यथाविधि ।
ताम्रजस्याङ्गहीनस्य कौतुकोक्तवदाचरेत् ॥ ४६ ॥

---

1. अग्नौ. आ.

पुनर्बिम्बनिर्माणे नियमाः

पूर्वं येनोद्धृतं बिम्बं यत्प्रमाणं यदाकृति ।
तद्द्रव्येण तदाकारं तत्प्रमाणञ्च कारयेत् ॥ ४७ ॥

पूर्वन्तु पौरुषञ्चेत्तु मुख्यं वा स्थापयेत्पुनः ।
मुख्यप्रमाणाकाराभ्यां कारयेद्वाऽथ पौरुषे ॥ ४८ ॥

बिम्बेषु द्रव्यभेदेन तरतमभावः

मृद्दारूपलताम्रेषु पूर्वात्पूर्वात्परो वरः ।
स्थानकादासनं तस्माच्छयनञ्च क्रमाद्वरम् ॥ ४९ ॥

पूर्वन्तु शैलजं यत्र तत्र शैलजमेव वा ।
अशक्तः पूर्ववत्कर्तुं स्थाननाशभयादिषु ॥ ५० ॥

कालक्षेपेऽप्ययुक्ते तु हेतुना येन केनचित् ।
गौणमानाकृतिद्रव्यैः कारयेदिति केचन ॥ ५१ ॥

मूलनाशात् यथालाभं गौणं वाऽपि प्रशस्यते ।
ध्रुवकौतुकमार्गेण पदे संस्थाप्य दैविके ॥ ५२ ॥

कृत्वा वर्णानुलेपादीन् प्रतिष्ठाप्यार्चयेत्पुनः ।
कौतुकादिषु सर्वेषु नष्टे स्थाने तथैव च ॥ ५३ ॥

शैलञ्च ध्रुवबेरञ्च दृश्यते यत्र कुत्रचित् ।
अशक्तः पूर्ववत्कर्तुं स्थाननाशभयादिषु ॥ ५४ ॥

कृत्वा नयनमोक्षं तत्स्थापयेद्वा ध्रुवार्चनम् ।
असत्यां नाशशङ्कायामशक्तोऽपि यथापुरा ॥ ५५ ॥

कारयेत विधानेन गौणेनैव प्रकल्पयेत् ।
शिथिले ध्रुवपीठे तु कृत्वा बालालयं क्षणात् ॥ ५६ ॥

शिल्पिभिस्सुदृढं कृत्वा पुनः स्थापनमाचरेत् ।
स्थलनाशे च रत्नानि सुसन्न्यस्य तु पूर्ववत् ॥ ५७ ॥

प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत् ।
बहुबेरप्रतिष्ठा चेद्यद्बेरं दोषसंयुतम् ॥ ५८ ॥

वस्त्रेणावेष्ट्य निर्दोषं दोषदुष्टस्य तस्य तु ।
संस्कारं पूर्ववत्कुर्यादिति पूर्वजशासनम् ॥ ५९ ॥

परिवारेषु दुष्टेषु तत्तत्पार्श्वे तथैव च ।
कृत्वा बालालयं हुत्वा तत्तन्मन्त्रं सवैष्णवम् ॥ ६० ॥

प्रतिष्ठाप्य नवीकृत्य पुनः स्थापनमाचरेत् ।
बहुभूमिविमानेषु दोषयुक्तं तलं प्रति ॥ ६१ ॥

बालागारं प्रकल्प्यैव द्वितीयावरणेऽथवा ।
प्रथमावरणे वाऽथ उक्तदेशे यथाविधि ॥ ६२ ॥

सदोषतलबिम्बानि निर्दोषेषु तलेषु वै ।
नैव संस्थापयेन्मोहाद्यदि कुर्याद्विनश्यति ॥ ६३ ॥

शीघ्रं हुत्वा महाशान्तिं स्थापयेत्तरुणालये ।
ऊर्ध्वं तलं समुद्दिश्य पश्चिमे तरुणालये ॥ ६४ ॥

अधस्तलस्य तत्पूर्वे स्थानं सम्यक्प्रकल्पयेत् ।
पञ्चमूर्तिविधाने तु बालागारं यथाविधि ॥ ६५ ॥

तत्तन्मूर्तिं समुद्दिश्य तत्तद्दिशि च कारयेत् ।
बेराणां केषाञ्चिदेकद्रव्यनियमः — बेराणि पञ्चमूर्तीनामेकद्रव्येण कारयेत् ॥ ६६ ॥

तथैव पञ्चवीराणां ब्रह्मणो गरुडस्य च ।
विपरीतं यदि भवेत्तद्ग्रामयजमानयोः ॥ ६७ ॥

भवेदाशु विनाशाय विशेषाद्राजराष्ट्रयोः ।
बालालयमकृत्वा न नवकरणम् — बालालयमकृत्वा तु नवकर्माचरेद्यदि ॥ ६८ ॥

आभिचारिकमित्युक्तं तस्य दोषस्य शान्तये ।
नवाहं वाऽथ सप्ताहं पञ्चाहं त्र्यहन्तु वा ॥ ६९ ॥

हुत्वाऽब्जाग्नौ महाशान्तिं स्थापयित्वा समर्चयेत् ।
आदित्यमण्डलात्कुम्भे समावाह्य समर्चयेत् ॥ ७० ॥

अन्येषामपि देवानामेष एव विधिः स्मृतः ।
कौतुकादिषु गुप्तेषु नवीकरणप्रकारः कौतुकादिषु गुप्तेषु जीर्णे तस्मिन् ध्रुवे सति ॥ ७१ ॥

कुम्भे शक्तिं समावाह्य नवीकरणमाचरेत् ।
कुम्भात्कुम्भे समावाह्य यजेत्पर्वणि पर्वणि ॥ ७२ ॥

नवकर्मावसाने तु ध्रुवं संस्थाप्य पूर्ववत् ।
तस्मात्कूर्चे समावाह्य नित्यं विधिवदर्चयेत् ॥ ७३ ॥

कौतुकाभावे सुवर्णशकलेऽर्चनम् सर्वत्र कौतुकाभावे सुवर्णशकलन्तु वा ।
(कुम्भे तु मासमेकं स्यात् षण्मासं दर्पणे तथा ॥

वत्सरान्तं पटे प्रोक्तं दारौ द्वादशवत्सरम् ।
अत ऊर्ध्वं हरिस्तत्र न रमेत पुनस्तथा) ॥
अर्चापीठेऽथवा कूर्चं सन्न्यस्यावाह्य पूजयेत् ॥ ७४ ॥

जीर्णबेरार्चनं यत्तद्दोषायैव भविष्यति ।
तस्माच्छीघ्रन्तु विधिना जीर्णबेरं परित्यजेत् ॥ ७५ ॥

कौतुकादि जीर्णोद्धारः अतः परं प्रवक्ष्यामि जीर्णादौ कौतुकादिके ।
कौतुके ताम्रजे बिम्बे शैलजे दारवेऽथवा ॥ ७६ ॥

जीर्णे छिन्ने च भिन्ने च खण्डे वृद्धौ तथैव च ।
हीनप्रमाणे सुषिरे बिम्बं त्याज्यन्तु तत् त्यजेत् ॥ ७७ ॥

वस्त्रेण बिम्बं संवेष्ट्य तत्प्रक्षिप्य जलाशये ।
मधूच्छिष्टप्रयोगेण बिम्बं कृत्वा यथाविधि ॥ ७८ ॥

पूर्ववद्बिम्बमासाद्य विधिना स्थापयेत्पुनः ।
कालापेक्षा न कर्तव्या शीघ्रं कर्मेदमाचरेत् ॥ ७९ ॥

अङ्गादिसंज्ञा कण्ठोदरशिरोवक्षोबाहुकोष्ठोरुपाणयः ।
कटिजङ्घे महाङ्गानि नेत्रनासौष्ठतालवः ॥ ८० ॥

कर्णश्चाङ्गुलयोऽङ्गानि केशरोमनखादयः ।
उपाङ्गानीति चोक्तानि मकुटं भूषणाम्बरे ॥ ८१ ॥

शङ्खचक्रे शिरश्चक्रं पादपद्मायुधान्यपि ।
पीठं प्रभा च छत्रं च प्रत्यङ्गानि विदुर्बुधाः ॥ ८२ ॥

क्रीडायष्टिश्च वंशश्च प्रत्यङ्गं कृष्णविग्रहे ।
आषाढो वामने चापि प्रत्यङ्गमभिधीयते ॥ ८३ ॥

हुत्वा शान्तिं त्यजेद्बिम्बमङ्गहीनन्तु कौतुकम् ।
उपाङ्गहीने बिम्बस्य ताम्रजस्यैव भक्तितः ॥ ८४ ॥

कौतुकसंस्कार-प्रकारः

ध्रुवे शक्तिं समारोप्य सन्धानं तुल्यवस्तुना ।
हुत्वा पुरुषसूक्तेन विष्णुसूक्तेन वैष्णवैः ॥ ८५ ॥

'ईङ्काराद्यै' श्च जुहुयादष्टाशीत्या समाहितः ।
रात्रिसूक्तेन हुत्वैव जयाद्यैर्जुहुयात्पुनः ॥ ८६ ॥

बिम्बशुद्धिं ततः कृत्वा प्रतिष्ठां कारयेत्तथा ।

सन्धानयोग्यता-कथनम्

प्रत्यङ्गे तु तथा हीने न त्यजेदिति शासनम् ॥ ८७ ॥

किरीटे भूषणे वस्त्रे नखे वा रोमकेशयोः ।
चक्रे शङ्खे शिरश्चक्रे हीने सन्धानमाचरेत् ॥ ८८ ॥

शैलस्यायुधविच्छेदे कुर्याल्लोहेन वाऽऽयुधम् ।
ताम्रजस्याङ्गसन्धानं केचिदाहुर्मनीषिणः ॥ ८९ ॥

बिम्बत्यागे प्रति-प्रसवः

सौवर्णं राजितं बिम्बमङ्गहीनं भवेद्यदि ।
न त्यजेत्तुल्यलोहेन सन्धाय स्थापयेत्क्रमात् ॥ ९० ॥

प्रत्यङ्गे तु तथा हीने सन्धानं कारयेत्क्रमात् ।

सन्धाने निमित्तान्तराणि

तथा बिम्बे तु चलिते तथा पीठाद्वियोजिते ॥ ९१ ॥

रेखासुषिरयुक्ते च सन्धानं कारयेद्दृढम् ।
वस्त्रादिषु च चक्रेषु छेदे भेदे तथैव च ॥ ९२ ॥

पूर्ववत्कारयेत्तद्वत् तुल्यलोहेन युक्तितः ।
पूर्ववच्छान्तिहोमान्ते पुनः स्थापयति क्रमात् ॥ ९३ ॥

बिम्बस्य ताम्रजस्यापि कर्णनासाङ्गुलीषु च ।
हीनेष्वङ्गेषु सन्धानं कुर्यादेव न संशयः ॥ ९४ ॥

उपाङ्गे तस्य हीनेऽपि शैलजं दारवं त्यजेत ।
एकद्वियवमात्रे तु स्फुटिते तत्र तत्र वै ॥ ९५ ॥

तत्तदङ्गसमुत्पत्तिं रेखामात्रेण कल्पयेत् ।
वृद्धं प्रमाणहीनञ्च जीर्णं रौक्मञ्च राजितम् ॥ ९६ ॥

लोहवत्तत्समाहृत्य शान्तिहोमावसानके ।
मधूच्छिष्टविधानेन नवीकरणमाचरेत् ॥ ९७ ॥

अक्ष्युन्मेषादिकं कृत्वा प्रतिष्ठापयति क्रमात् ।
रत्नजप्रतिमा या स्याद्रूपमात्रं समाहरेत् ॥ ९८ ॥

निर्दुष्टबिम्बस्य न चालनम्

अर्च्यमाने तु निर्दोषे बिम्बे तत्र विशेषतः ।
लोहगौरवमुद्दिश्य पुनर्बिम्बं न कारयेत् ॥ ९९ ॥

यदि कुर्यात्तदज्ञानाद्राजा राष्ट्रञ्च नश्यति ।
जीर्णं हीनाधिकाङ्गञ्च बिम्बं त्यक्त्वा यथाविधि ॥ १०० ॥

शक्तोऽधिकेन द्रव्येण कारयेच्चेत्तदुत्तमम् ।
अङ्गहान्यादियुक्ते तु कौतुके पूर्वमर्चिते ॥ १०१ ॥

ध्रुवबेरे समारोप्य तच्छक्तिं शीघ्रमेव तु ।
यावद्बिम्बं पुनः कृत्वा स्थपयेद्विधिकोविदः ॥ १०२ ॥

तावत्कौतुकपीठे तु स्नापनं बिम्बमेव च ।
औत्सवं बलिबेरं वा स्थापयित्वाऽथ वै ध्रुवात् ॥ १०३ ॥

आवाह्य च विधानेन नित्यमर्चनमाचरेत् ।
पूर्ववत्कौतुकं कृत्वा तत्र संस्थाप्य पूजयेत् ॥ १०४ ॥

स्नापनौत्सवबल्यर्चाः स्वस्थाने सन्निवेशयेत् ।

कौतुकबिम्बप्रतिनिधित्वेन स्वर्णकूर्चाराधनम्

स्नापने चौत्सवे हीने कूर्चं रौक्मन्तु तत्र वै ॥ १०५ ॥

न्यस्य देवं समावाह्य ध्यायन् पूर्ववदर्चयेत् ।

चोरापहृतबिम्बविचारः

चोरैर्वा शत्रुभिर्वाऽपि बिम्बं त्वपहृतं यदि ॥ १०६ ॥

यावद्बिम्बं पुनः कुर्यात्तावत्कालन्तु तत्र वै ।
भक्त्या सुवर्णशकले समावाह्य समर्चयेत् ॥ १०७ ॥

बिम्बं तत्पूर्ववत्कृत्वा प्रतिष्ठां कारयेद्बुधः ।

तत्र विकल्पाः

विनैव देवदेवेन देव्यावपहृते यदि ॥ १०८ ॥

देव्यौ ते विधिना कृत्वा प्रतिष्ठाप्य यथापुरा ।
पूर्वोक्तेन विधानेन विवाहं विधिना चरेत् ॥ १०९ ॥

जुहुयाद्यदि नित्याग्नौ ध्रुवादावाहनं यदि ।
न विवाहविधिं कुर्यादिति पूर्वजशासनम् ॥ ११० ॥

देवीभ्यान्तु विना तत्र देवेशोऽपहृते यदि ।
देव्योरनुगुणं देवबेरं कृत्वा यथाविधि ॥ १११ ॥

ध्रुवादावहनं कृत्वा नित्यमग्निं प्रणीय च ।
प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत् ॥ ११२ ॥

त एव देव्यौ देवस्य नान्ये देव्यौ प्रकल्पयेत् ।
तच्छक्तेः पूर्वसंस्कारं (?) न विवाहविधिं चरेत् ॥ ११३ ॥

स्थापितेऽपि नवे बेरे दृष्टे त्वपहृते पुनः ।
समन्त्रं लौकिकं बेरं स्थापयित्वा समर्चयेत् ॥ ११४ ॥

अन्यथा यदि कुर्वीत राजराष्ट्रं विनश्यति ।
ध्रुवे स्थिते तु देवेशे तद्देव्योरङ्गहीनयोः ॥ ११५ ॥

तद्देव्योः स्थितयोर्देवे हीनाङ्गेऽपि तपोधनाः ।
तत्तद्बिम्बगतां शक्तिं कुम्भे सम्यङ्निवेश्य च ॥ ११६ ॥

बालालये प्रतिष्ठाप्य कुर्वन्वै नित्यपूजनम् ।
देवेशानुगुणं देव्यौ देवं वाऽनुगुणं तयोः ॥ ११७ ॥

पूर्वमानाकृतिद्रव्यैः कृत्वा संस्थापयेत्क्रमात् ।
पूर्वप्रमाणादधिकं मुख्याकारञ्च(?) नाचरेत् ॥ ११८ ॥

कारयेत्तुल्यलोहेन देव्यौ नैवाधिकेन च ।
यद्यद्बिम्बन्तु निर्दुष्टं तत्तन्न त्याज्यमुच्यते ॥ ११९ ॥

यागशालाग्निकुण्डेषु नित्यमग्निं प्रणीय च ।
शक्तिमुद्वास्य तामेव कुम्भे सम्यङ्निवेश्य च ॥ १२० ॥

प्रतिष्ठां पूर्ववत्कुर्याद्विवाहं तत्र नाचरेत् ।
शक्तौ संस्कृतपूर्वायां न संस्कारान्तरं पुनः ॥ १२१ ॥

सर्वेषामेव देवानां स्थितायां पुरुषाकृतौ ।
स्त्रीबेरनाशे पुरुषबेरनाशेऽथवा स्त्रियाम् ॥ १२२ ॥

सामान्योऽयं विधिः प्रोक्तः पुनस्सन्धानकर्मणि ।
सन्धानकर्तुः फलप्रशंसा
पुनस्सन्धानकर्तुः स्यात्तन्मूल्याद्द्विगुणं फलम् ॥ १२३ ॥

सर्वान् कामानवाप्नोति कीर्तिमान् धनवान् भवेत् ।
सर्वपापविनिर्मुक्तो भोगान् भुङ्क्ते महीतले ॥ १२४ ॥

( जङ्गमेषु च गुप्तेषु परचक्रभयेषु च ।
यावत्कालं तदुद्धारः तावत्कालञ्च तत्र वै ॥ १२५ ॥

कूर्चे भक्त्या समावाह्य ध्यात्वा देवं समर्चयेत् ।
उद्धृत्य तानि बिम्बानि शुद्धिद्रव्येण शोधयेत ॥ ॥ १२६ ॥

कलशैः स्नापयेद्देवं यथाविभवविस्तरम् ।
महाशान्तिञ्च हुत्वा तु पुण्याहमपि वाचयेत् ॥ १२७ ॥

ब्राह्मणान् भोजयित्वा तु शक्तितो दक्षिणां ददेत् ।
अर्चयेच्च यथान्यायं हविस्सम्यङ्निवेदयेत् ) ॥ १२८ ॥

जङ्गमेषु च गुप्तेषु हीने च स्थावरार्चने ।
महाशान्तिञ्च हुत्वा तु तत्कालानुगुणं पुनः ॥ १२९ ॥

पुनःप्रतिष्ठामार्गेण प्रतिष्ठां पुनराचरेत् ।
अर्च्यमानं गृहे बेरं सुन्दरं लक्षणान्वितम् ॥ १३० ॥

ध्रुवबेरानुरूपञ्चेद् ग्रामस्यानुगुणं तथा ।
लब्धं चेदौत्सवार्थन्तु स्नापनार्थमथापि वा ॥ १३१ ॥

नित्योत्सवार्थं वा तत्र स्थापयित्वा समर्चयेत् ।
तद्बिम्बसंस्थितां शक्तिं निवेश्यादित्यमण्डले ॥ १३२ ॥

ध्रुवात्तस्मिंस्समावाह्य पूर्ववत्स्थापयेत्सुधीः ।
तामेव शक्तिमथवा कुम्भे सम्यङ्निवेश्य च ॥ १३३ ॥

लौकिकं तत्र संस्थाप्य कुम्भादावाह्य पूजयेत् ।
लौकिकस्य प्रतिष्ठायां लौकिकाग्नौ जुहोति वै ॥ १३४ ॥

एष एव विशेषः स्यादन्यत्सर्वं समं भवेत् ।
रूपमिच्छन्ति ये देवा ये च नेच्छन्ति मन्दिरे ॥ १३५ ॥

पीठकुड्यकवाटादावर्च्यन्ते सुप्रतिष्ठिताः ।
अर्चनाङ्गेषु पात्रेषु यानादिष्वासनादिषु ॥ १३६ ॥

वापीकूपटाकादिष्वावाह्य चिरमर्चिताः ।
नवकर्मणि तेऽर्हन्ति बालागारोचिताः क्रियाः ॥ १३७ ॥

तस्मात्सर्वप्रयत्नेन मन्त्रतो यः प्रतिष्ठितः ।
तं सर्वं नवकर्मादौ जीर्णोद्धारक्रमेण वै ॥ १३८ ॥

संस्कृत्य नवकर्मान्ते संस्कुर्यात्पुनरेव वै ।
( जीर्णोद्धारविधिः प्रोक्ता विस्तरेण **मरीचिना** )
आदाय नववस्तूनि प्रतिष्ठां वा समाचरेत् ॥ १३९ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
नवीकरणप्रायश्चित्तविधिर्नाम त्रयोविंशोऽध्यायः ।

# चतुर्विंशोऽध्यायः

अर्चनायां निष्कृतिः कवाटोद्घाटने अतः परं प्रवक्ष्यामि [1]अर्चनाहीननिष्कृतिम् ।
आदित्यस्योदयात्पूर्वं प्रातर्देवालयस्य च ॥ १ ॥

सायमस्तमयात्पूर्वं मध्याह्नादह्नि मध्यमे ।
कवाटोद्घाटने हीने शीघ्रमुद्घाटयेत्ततः ॥ २ ॥

नित्याग्निकुण्डे छुल्ल्यां वा परिषिच्य च पावकम् ।
आज्येन चरुणा सौरैर्जुहुयाद्द्वारदैवतैः ॥ ३ ॥

वैष्णवैरपि षण्मन्त्रैः पुनः [2]कर्म समाचरेत् ।
द्रव्यसङ्ग्रहे नीतश्चेदर्चनाद्रव्यं जलपुष्पाद्यमन्त्रकम् ॥ ४ ॥

आलये वाऽथ संस्कुर्यात्तन्मन्त्रं द्विगुणं जपेत्[3] ।
अन्यसूत्रिभिरानीतं संस्कुर्यात्त्रिगुणं चरेत् ॥ ५ ॥

गृह्णीयात् ब्राह्मणालाभे नेयश्चेत्क्षत्रियादिभिः ।
शङ्खचक्राङ्कितभुजैः पूर्वालाभे तथोत्तरैः ॥ ६ ॥

चतुर्वेदादि षट्कृत्वो जपं कुर्यात्पुनः पुनः[4] ।
वापयेन्नखकेशादींस्ते च पर्वणि पर्वणि ॥ ७ ॥

शुद्धाम्बरधराः स्नाताः शुद्धदन्तनखाः तथा ।
दीपहीने सन्ध्यादीपविहीने तु श्रीदैवत्यं सवैष्णवम् ॥ ८ ॥

आग्नेयञ्च सकृद्धुत्वा दीपांश्च द्विगुणं ददेत् ।
अजस्रदीपविच्छेदे शतमष्टोत्तरं यजेत् ॥ ९ ॥

सर्वेषामेव देवानां दीपः प्रियतमो भवेत् ।
श्वेतपङ्कजनालोत्थैस्सूत्रैः कृत्वा तु वर्तिकाम् ॥ १० ॥

---

1. महार्चाहीननिष्कृतिम् ख. । 2. कार्यं आ. । 3. भवेत् आ. । 4. प्रयत्नतः ई. ।

उत्तमं दीपदानन्तु कापिलेन घृतेन वै ।
अष्टाङ्गुलोच्छ्रयज्वालो [1]दीप उत्तम उच्यते ॥ ११ ॥

[2]उक्तपङ्कजनालोत्थैः सूत्रैः कृत्वा तु वर्तिकाम् ।
षडङ्गुलोच्छ्रयज्वालो मध्यमो गव्यसर्पिषा ॥ १२ ॥

तैलेन कल्पितो दीपः पिचुवर्तियुतोऽधमः ।
त्र्यङ्गुलोच्छ्रयज्वालो यथालाभोच्छ्रयोऽपि वा ॥ १३ ॥

कर्पूरवर्तिकाक्लृप्तो दीपस्स्यादुत्तमोत्तमः ।
मार्जनादिहीने मार्जने च तथा हीने हीने चैवोपलेपने ॥ १४ ॥

'आपो-हिरण्य-पवमानैः' प्रोक्षयित्वोपलेपयेत् ।
निर्माल्यशोधने हीने हीने चाभ्युक्षणे तथा ॥ १५ ॥

वैष्णवं वैष्वक्सेनञ्च वारुणञ्च यजेत्पुनः ।
बिम्बाभिषेकेऽशक्तश्चेद्देवेशमभिवाद्य च ॥ १६ ॥

कुशोदकैस्समभ्युक्ष्य पूर्ववस्त्रं विसृज्य च ।
अन्येन धौतवस्त्रेण देवेशं परिधापयेत् ॥ १७ ॥

बिम्बाभिषेकहीने तु वैष्णवं वारुणं यजेत् ।
पुष्पन्यासहीने पुष्पन्यासविहीने तु कालातीते पुनस्तदा ॥ १८ ॥

कृत्वैव पुष्पन्यासञ्च विष्णुगायत्रिया पुनः ।
जुहुयाद्दशकृत्वस्तु नामभिर्जुहुयाच्छतम् ॥ १९ ॥

अन्यदेवार्चनाहीने गर्भालयगतान् देवान् द्वारेशान् द्वारपालकान् ।
समभ्यर्च्यार्चयेद्देवं हीने तेषामथार्चने ॥ २० ॥

द्विगुणं तान् समभ्यर्च्य तत्तन्मन्त्रं सकृद्यजेत् ।
अर्चने ध्यानहीने तु विष्णुसूक्तं यजेत्ततः ॥ २१ ॥

1. यथालाभोच्छ्रयोऽपि वा । ख. 2. रक्त. ई.

देवं सम्यक्तथा ध्यात्वा पुनरर्चयति क्रमात् ।
नवभेदेष्वथैकस्मिन् कल्पितेऽप्यर्चने तथा ॥ २२ ॥

आसनादिषु यद्धीनं तत्तत्प्रति विशेषतः ।
वैष्णवं विष्णुगायत्रीं जुहुयात्तदनुस्मरन् ॥ २३ ॥

देवदेवं स्मरन् बुद्ध्या सर्वव्यापिनमव्ययम् ।
हविर्निवेदनहीने हविर्निवेदने हीने ब्राह्मं हुत्वा ततः परम् ॥ २४ ॥

प्राजापत्यं ततो हुत्वा वैष्णवेन समन्वितम् ।
विष्णुसूक्तं हविस्तद्वद्द्विगुणञ्च निवेदयेत् ॥ २५ ॥

उपदंशेषु हीनेषु यजेत्सौम्यं सवैष्णवम् ।
सामादिञ्च घृते हीने जुहुयाद्वैष्णवान्वितम् ॥ २६ ॥

जुहुयाद्दधिहीने तु [1]यजुराद्यं सवैष्णवम् ।
मुखवासहीने मुखवासविहीने तु श्रीमन्त्रं वैष्णवं यजेत् ॥ २७ ॥

नित्यहोमहीने [2]नित्यहोमं कपालाग्नावज्ञानाज्जुहुयाद्यदि ।
वैष्णवं व्याहृतीश्चापि हुत्वा च जुहुयात्तथा ॥ २८ ॥

नित्याग्निं तमविच्छिन्नमशक्तौ रक्षितुं यदि ।
समिध्यात्मनि वाऽऽरोप्य निधायाहरहर्यजेत् ॥ २९ ॥

श्रीवैखानससूत्रोक्तो मन्त्र आरोपणे स्मृतः ।
तथाऽवरोपणे चाग्नौ [3]नामन्त्रं किञ्चिदाचरेत् ॥ ३० ॥

सकालेऽर्चने हीने प्रातस्सन्ध्यार्चने हीने मध्याह्ने द्विगुणं भवेत् ।
वैष्णवं पौरुषं सूक्तं [4]विष्णुसूक्तं यजेत्ततः ॥ ३१ ॥

प्रातर्मध्याह्नयोर्हीने सायाह्ने द्विगुणं भवेत् ।
एकाह्ने त्वर्चनाहीने हुत्वा तद्द्विगुणं पुनः ॥ ३२ ॥

---

1. नृ सूक्तं वैष्णवं यजेत् **आ.** । 2. नित्याग्नौ मन्त्रहीने तु आ. । 3. तन्मन्त्रम्. **ख.**
4. नित्यकुण्डे यजेत्तथा **आ.** ।

हवींष्यपि निवेद्यैव दक्षिणाग्नौ ततः परम् ।
पञ्चविंशतिकृत्वस्तु षण्मात्रान् वैष्णवान् यजेत् ॥ ३३ ॥

वैष्णवं पौरुषं सूक्तं हुत्वा [1]विप्रांश्च भोजयेत् ।
एकाहे त्विदमुद्दिष्टं द्वितीये द्विगुणं भवेत् ॥ ३४ ॥

द्वादशाहान्तमित्येवं वर्धयेत्तु दिने दिने ।
अतीते द्वादशाब्दे तु दक्षिणाग्नौ ततः परम् ॥ ३५ ॥

वैष्णवं पौरुषं सूक्तं विष्णुसूक्तं शतं यजेत् ।
चत्वारिंशद्भिरष्टाभिः कलशैः स्नापयेत्पुनः ॥ ३६ ॥

महाहविः प्रभूतं वा समभ्यर्च्य निवेदयेत् ।
आचार्याय पशून् दद्याद्ब्राह्मणान् भोजयेत्पुनः ॥ ३७ ॥

मासहीनं यदि भवेदालयं परितस्तथा ।
अग्नीनाहवनीयादीन् प्रागादि परिकल्पयेत् ॥ ३८ ॥

देवेशं मनसा ध्यात्वा प्रत्येकञ्चैकविंशतिम् ।
देवीभ्याञ्च मुनिभ्याञ्च वैघ्नं गारुडमेव च ॥ ३९ ॥

तत्तद्धोमे सुहोतव्यं महाव्याहृतिसंयुतम् ।
शताष्टकलशैर्देवं स्नापयित्वा विधानतः ॥ ४० ॥

पुण्याहं वाचयित्वा तु ब्राह्मणानपि भोजयेत् ।
यावद्दिनार्चनं हीनं गणयित्वा ततः परम् ॥ ४१ ॥

तावद्दिनार्चनाद्द्रव्यं देवेशाय निवेदयेत् ।
एवं मासे प्रकुर्वीत द्विमासे द्विगुणं भवेत् ॥ ४२ ॥

वर्षान्तं वर्धयेदेवं वर्षेऽतीते ततः परम् ।
अष्टाधिकसहस्रैर्वा शतैर्वा कलशैस्तदा ॥ ४३ ॥

---

1. विष्णुं समर्चयेत् आ.

स्नापयित्वा तु देवेशं प्रणम्यैवानुमान्य च ।
सुवर्णपशुभूम्यादीन् दत्वाऽऽचार्याय दक्षिणाम् ॥ ४४ ॥

ततोऽब्जाग्नौ महाशान्तिं हुत्वा देवमनुस्मरन् ।
सहस्रपद्मं सङ्गृह्य गायत्रीं वैष्णवीं वदन् ॥ ४५ ॥

आप्लुत्याऽऽप्लुत्य जुहुयात्कापिलेन घृतेन वै ।
पूर्वोक्तेन विधानेन प्रतिष्ठां पुनराचरेत् ॥ ४६ ॥

एवमेवार्चने हीने प्रायश्चित्तं विधीयते ।
अन्येषामपि देवानां सामान्यमिदमुच्यते[1] ॥ ४७ ॥

बलिहीने [2]प्रातस्सन्ध्याबलौ हीने मध्याह्ने द्विगुणं भवेत् ।
वैष्णवं सौरसौम्ये च प्राजापत्यं यजेत्ततः ॥ ४८ ॥

प्रातर्मध्याह्नयोर्हीने सायाह्ने द्विगुणं भवेत् ।
एकाहं बलिहीनश्चेदग्नावौपासनीयके ॥ ४९ ॥

जुहुयाद्विष्णुसूक्तञ्च पूर्वमन्त्रैश्च संयुतम् ।
उत्थापयेद्बलिं हीनं पूर्वोक्तविधिना ततः ॥ ५० ॥

एकाहे त्विदमुद्दिष्टं द्विदिने द्विगुणं भवेत् ।
वर्धयेत् द्वादशाहान्तमतीते द्वादशेऽहनि ॥ ५१ ॥

अब्जाग्नौ पौरुषं सूक्तं विष्णुसूक्तं ततः परम् ।
पारमात्मिकसंयुक्त 'मीङ्कारादीन्' जुहोति च ॥ ५२ ॥

संस्नाप्य सप्तकलशैर्बिम्बं कौतुकमेव च ।
महाहविर्निवेद्यैव बलीनुत्थापयेत्क्रमात् ॥ ५३ ॥

एवमेवविधानेन यावन्मासान्तमाचरेत् ।
मासहीनं यदि भवेत्प्राच्यामाहवनीयके ॥ ५४ ॥

---

1. वैष्णवं शतकृत्वश्च हुत्वाऽभ्यर्च्य निवेदयेत् । चत्वारिंशद्भिरष्टाभिः कलशैः स्नापयेत्प्रभुम् । महाशान्तिश्च हुत्वा तु प्रभूतञ्च निवेदयेत् । आ. 2. एतदारभ्य ७८ श्लोकपर्यन्तं ई कोशेषु न दृश्यते, अवधिश्च चिह्नितः ।

यजेदष्टोत्तरशतं सूक्ते वैष्णवपौरुषे ।
मध्ये तु सर्वदैवत्यं सभ्यकुण्डे जुहोति च ॥ ५५ ॥

शताष्टकलशैर्देवं स्नापयित्वा ततः परम् ।
पञ्चविंशतिगा दत्वा देवमुद्दिश्य यत्नतः ॥ ५६ ॥

महाहविर्निवेद्यैव बलीनुत्थापयेत्क्रमात् ।
एवमेव विधानेन कुर्यात्संवत्सरावधि ॥ ५७ ॥

पतिते तद्बलौ स्पृष्टे अस्पृश्यैः श्रुतिदूषकैः ।
पूर्ववद्बलिमापाद्य बलिदेवं यजेत्पुनः ॥ ५८ ॥

बलिमुत्थाप्य विघ्नश्चेत्सौरं सौम्यसमन्वितम् ।
हुत्वा तु पूर्ववत्कर्म प्रारभेत यथाविधि ॥ ५९ ॥

बलौ प्रमाणहीने तु वैष्णवञ्चैकविंशतिम् ।
भिन्ने जीर्णे शतं पाले तत्प्रमाणविवर्जिते ॥ ६० ॥

वैष्णवं पौरुषं सूक्तं विष्णुसूक्तमतः परम् ।
पारमात्मिक 'मीड्वारान्' सौम्यं रौद्रं तथैव च ॥ ६१ ।

सौरमाग्नेयसंयुक्तं पञ्चवारुणसंयुतम् ।
जयाद्यैश्चैव कूष्माण्डैः जुहुयात्तस्य शान्तये ॥ ६२ ॥

अतिवातातिवृष्ट्योश्च हरिमाराध्य पूर्ववत् ।
ध्रुवकौतुकसंयुक्तं गर्भगेहे प्रदक्षिणम् ॥ ६३ ॥

कृत्वा सोपानमध्ये तु श्रीभूताग्रे बलिं ददेत् ।
परिवारबलिञ्चापि देवेशं परितस्तथा ॥ ६४ ॥

तत्तत्स्थाने समासाद्य दद्यादित्येव केचन ।
कल्पितान्नबलौ काले त्वलब्धेऽन्नबलौ सति ॥ ६५ ॥

कुर्यादर्घ्यबलिं वाऽपि पूर्ववत्पुष्पमेव वा ।
नित्याग्नौ दशकृत्वस्तु यजेत्सौरञ्च वैष्णवम् ॥ ६६ ॥

आलयावरणाद्बाह्ये मुखे वामे प्रकल्पिते ।
कल्पिते बलिपीठे च तच्च कुर्यात्प्रदक्षिणम् ॥ ६७ ॥

बलिभ्रमणकाले तु वाद्यहीने तु पौरुषम् ।
नृत्तगेयविहीने च विष्णुसूक्तञ्च वैष्णवम् ॥ ६८ ॥

हुत्वा घण्टाध्वनियुतं बलिभ्रमणमाचरेत् ।
जपन्वै शाकुनं सूक्तं स्वस्तिसूक्तसमन्वितम् ॥ ६९ ॥

शवपाते पञ्चाशच्चापसीमान्ते चैकवीथ्यां शवे सति ।
अर्चनञ्च हविर्दानं देवदेवस्य वर्जयेत् ॥ ७० ॥

यदि कुर्यात्तदज्ञानाच्छुद्धोदैरभिषिच्य च ।
यद्देवाद्यैश्च हुत्वा तु समभ्यर्च्य निवेदयेत् ॥ ७१ ॥

षष्टिसप्तत्यशीत्यर्वाक् क्षत्रियादिशवे सति ।
अनुलोमशवे कुर्याच्छान्तिं शूद्रस्य चोक्तवत् ॥ ७२ ॥

अन्यवास्तुगते पूजा न दोषाय भवेच्छवे ।
अस्पृश्यस्पर्शे अर्चकान्यद्विजैः स्पृष्टे शुद्धोदैरभिषेचयेत ॥ ७३ ॥

सप्तभिः क्षत्रियैः स्पृष्टे कलशैः स्नापयेद्धरिम् ।
स्नापयेद्वैश्यसंस्पर्शे चतुर्विंशतिभिस्तथा ॥ ७४ ॥

शान्तिहोमञ्च जुहुयाच्छक्तितो भोजयेद्द्विजान् ।
अष्टोत्तरशतैश्शूद्रैः संस्पर्शे स्नापयेत्तथा ॥ ७५ ॥

महाशान्तिं ततो हुत्वा ब्राह्मणानपि भोजयेत् ।
स्पृष्टेऽनुलोमैश्शूद्रोक्तप्रायश्चित्तं समाचरेत् ॥ ७६ ॥

उच्छिष्टाशुचिभिर्विप्रैः कुर्याच्छूद्रोक्तनिष्कृतिम् ।
स्पृष्टे त्वाशौचवद्विप्रैः कुर्याच्छूद्रोक्तनिष्कृतिम् ॥ ७७ ॥

प्रतिलोमैस्तु संस्पृष्टे जलादिष्वधिवास्य च ।
महाशान्तिञ्च सप्ताहमब्जाग्नौ जुहयात्ततः ॥ ७८ ॥

प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत् ।
( अनुलोमैस्तु संस्पृष्टं हविर्यदि निवेदयेत् ॥

कलशैः स्नापयेद्देवं चत्वारिंशद्भिरष्टभिः ।
महाशान्तिञ्च हुत्वा तु प्रभूतञ्च निवेदयेत् ॥

देवेशं स्नापने काले पूजानैवेद्यकालयोः ।
प्रतिलोमाश्च पतिताः पाषण्डा वेददूषकाः ॥

नास्तिका भिन्नमर्यादा यदि पश्यन्ति मोहतः[1] ।
हविर्वा यदि पश्यन्ति [2]श्वकाकाद्याः प्रमादतः ॥

देवेशायानिवेद्यैव तद्धविः प्रक्षिपेज्जले ।
[3]तद्धविर्न निवेद्यं स्याद्देवेशाय प्रयत्नतः ॥

हविरन्यत्सुसम्पाद्य देवेशाय निवेदयेत् ।
वैष्णवं विष्णुसूक्तञ्च [4]महाव्याहृतिसंयुतम् ॥

[5]चतुरावर्त्य हुत्वैव पक्वान्नेनैव होमयेत् ।)
कारयेत्तान्त्रिकस्पर्शे प्रतिलोमोक्तनिष्कृतिम् ॥ ७९ ॥

अवेदमूलास्समयास्तान्त्रिका वेददूषकाः ।
ब्राह्मणैः पाचकाद्न्यैः स्पृष्टं नैव हविर्ददेत् ॥ ८० ॥

यदि दद्यात्तु मोहेन वैष्णवन्तु सकृद्यजेत् ।
उच्छिष्टाशुचिभिर्विप्रैः क्षत्रियैर्विड्भिरेव वा ॥ ८१ ॥

अन्ने निवेदिते स्पृष्टे शुद्धोदैरभिषेचयेत् ।
वैष्णवं दशकृत्वश्च हुत्वाऽन्यच्च निवेदयेत् ॥ ८२ ॥

स्पृष्टमाशौचवद्विप्रैः शूद्रैर्वाऽथानुलोमजैः ।
निवेदयेच्चेदज्ञानात्कलशैरधमाधमैः ॥ ८३ ॥

---

1. लोभतः ख. 2. श्वशूद्रस्पर्शने यदि. ई. 3. देवेशं न निवेद्यैव तद्धविर्विसृजे ज्जले. ई. 4. महापातकिदर्शने. ई. 5. पक्वान्नं जुहुयादपि. आ.

स्नापयित्वा ततश्शान्तिं हुत्वाऽभ्यर्च्य निवेदयेत् ।
प्रतिलोमैस्तु संस्पृष्टं हविर्यदि निवेदयेत् ॥ ८४ ॥

कलशैः स्नापयेद्देवं चत्वारिंशद्भिरष्टभिः ।
महाशान्तिञ्च हुत्वा तु प्रभूतञ्च निवेदयेत् ॥ ८५ ॥

देवेशं स्नानकाले वा पूजाकाले निवेदने ।
प्रतिलोमाश्च पाषण्डाः पतिता वेददूषकाः ॥ ८६ ॥

नास्तिका भिन्नमर्यादा यदि पश्यन्ति मोहतः: ।
हविर्वा यदि तैर्दृष्टं देवेशाय निवेदयेत् ॥ ८७ ॥

देवेशं स्नापयित्वा तु शुद्धोदैस्तस्य शान्तये ।
अभ्यर्च्य शान्तिहोमान्ते प्रभूतञ्च निवेदयेत् ॥ ८८ ॥

पूजनार्थं जले पुष्पे मन्त्रवत्संस्कृते पुनः ।
स्पृष्टश्चेद्ब्राह्मणादन्यैः तत्त्यक्त्वाऽन्यत्समाहरेत् ॥ ८९ ॥

अथवा प्रोक्षणैः प्रोक्ष्य पात्रान्तरनिवेशितम् ।
पूर्ववन्मन्त्रसंस्कारं कृत्वा तेनैव पूजयेत् ॥ ९० ॥

उच्छिष्टाशुचिभिर्विप्रैः स्पृष्टं यदि तथैव च ।
स्पृष्टमाशौचवद्भिर्विप्रैः त्यक्त्वाऽन्यद्द्रव्यमाहरेत् ॥ ९१ ॥

प्रतिलोमैस्तु संस्पृष्टं दृष्टञ्चैव विसर्जयेत् ।
शूद्रैरथाप्य शुचिभिः प्रतिलोमैरुदक्यया ॥ ९२ ॥

स्पृष्टमाज्यं दधि क्षीरं मधु वा तोयमेव वा ।
देवार्थं नैव गृह्णीयाद्दृष्टं सूतिकया तथा ॥ ९३ ॥

अज्ञानाद्देवदेवाय यदि तानि निवेदयेत् ।
शुद्धोदैः स्नापयित्वा तु हुत्वा शान्तिं समर्चयेत् ॥ ९४ ॥

त्याज्यं पुष्पञ्च संस्पृष्टमेवमन्यत फलादिकम् ।
न त्यजेद्यदि लोभेन शान्तिं हुत्वाऽभिषेचयेत् ॥ ९५ ॥

अमन्त्रकाऽर्चनं विष्णोरकाले च तथाऽर्चनम् ।
ग्रामनाशञ्च दुर्भिक्षं व्याधिश्चैव प्रयच्छति ॥ ९६ ॥

तस्मात्सर्वप्रयत्नेन काले काले विशेषतः ।
मन्त्रवत्पूजयेद्विष्णुमिति पूर्वजशासनम् ॥ ९७ ॥

अविज्ञातेषु सर्वेषु मन्त्राणान्तु पृथक् पृथक् ।
ऋषिच्छन्दोधिदेवेषु छन्दोऽनुष्टुबिति स्मरेत् ॥ ९८ ॥

अन्तर्यामी ऋषिः प्रोक्तः परमात्मा च देवता ।
इति सामान्यतः स्मृत्वा पूजयेत्पुरुषोत्तमम् ॥ ९९ ॥

अष्टविधा भक्तिः भक्तिमष्टविधां वक्ष्ये देवदेवे तु शार्ङ्गिणि ।
तद्भक्तजनवात्सल्यं तत्पूजास्वनुमोदनम् ॥ १०० ॥

तत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया ।
तदनुस्मरणं नित्यं तदर्थे दम्भवर्जनम् ॥ १०१ ॥

नित्यं तदेकशेषित्वं यच्च तन्नोपजीवति ।
भक्तिरष्टविधा ह्येषा यत्र साधारणेन वै ॥ १०२ ॥

तमेव पूजकं श्रेष्ठं वरयेन्नान्यमर्चकम् ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
नित्यार्चनाप्रायश्चित्तविधिर्नाम चतुर्विंशोऽध्यायः ।

# पञ्चविंशोऽध्यायः

स्नपनप्रायश्चित्तम्

अतः परं प्रवक्ष्यामि स्नपने दोषनिष्कृतिम् ।
नाऽर्पयित्वाऽङ्कुरं विष्णोः स्नपनं क्रियते यदि ॥ १ ॥

अङ्कुरार्पणहीने

ब्रह्मादीनान्तु षण्णां वै मन्त्रानौपासने यजेत् ।
मूर्तिभिश्च जयादीनां ( हीने वाऽप्यधिकेऽपि वा ।
मन्त्रं तद्देवतानाञ्च ) प्रत्येकं विंशतिं यजेत् ॥ २ ॥

अष्टोत्तरशतं हुत्वा व्याहृतीश्च सवैष्णवम् ।
[1]पुष्पैः प्रपूर्य पात्राणि श्वेतैर्वा तण्डुलैरपि ॥ ३ ॥

अङ्कुरानिति सङ्कल्प्य पुनश्च स्नापयेद्धरिम् ।
प्रमाणे पालिकादीनां हीने वाऽप्यधिकेऽपि वा ॥ ४ ॥

मन्त्रं तद्देवतानाञ्च वैष्णवं विंशतिं यजेत् ।
पालिकानामलाभे तु शरावेष्वथवाऽर्पयेत् ॥ ५ ॥

स्नपनशालायाम्

हीनाधिकेन मानेन कुर्याच्चेत्स्नपनालयम् ।
वैष्णवं भूमिदैवत्यं प्रत्येकं साष्टकं शतम् ॥ ६ ॥

आलयस्योत्तरे कुर्याच्छान्तिकं स्नपनालयम् ।
पुष्टिकामस्तु पूर्वस्मिन् मुक्तिकामस्तु दक्षिणे ॥ ७ ॥

जलकामस्तु वारुण्यां सर्वकामस्तु शाङ्करे ।
आग्नेये नैरृते चैव वायव्ये न समाचरेत् ॥ ८ ॥

तत्रैव यदि कुर्याच्चेत्पुनः स्नपनमाचरेत् ।
तद्दिक्पालकमन्त्रञ्च वैष्णवं विंशतिं यजेत् ॥ ९ ॥

कलशेषु

प्रमाणे कलशानाञ्च न्यूने वाऽप्यधिकेऽपि वा ।
वैष्णवं जुहुयाद्ब्राह्मं महाव्याहृतिसंयुतम् ॥ १० ॥

---

1. पद्मादिभिः सितैः पुष्पैः पालिकादीन् प्रपूर्य च. आ.

व्याहृत्यन्तं पृथग्घुत्वा गृह्णीयाल्लक्षणान्वितम् ।
वस्त्रे वस्त्रहीने महान् दोषो भवेद्वस्त्रादिहीनता ॥ ११ ॥
आचार्यं पूजयेद्वस्त्रैः श्रीमन्त्रं वैष्णवं यजेत् ।
तोरणादौ तोरणे दोषयुक्ते तु मन्त्रौ दौवारिकौ यजेत् ॥ १२ ॥
तत्तद्द्वाराधिपं हुत्वा वैष्णवेन समन्वितम् ।
कूर्चादौ प्रमाणहीने कूर्चादौ वैष्णवं ब्राह्मसंयुतम् ॥ १३ ॥
सौरं षोडशकृत्वस्तु हुत्वा कुर्यात्सलक्षणम् ।
पङ्क्तौ पङ्क्तौ प्रमाणहीनायां पङ्क्तीशञ्च समर्चयेत् ॥ १४ ॥
पङ्क्तीशमन्त्रं जुहुयाद्वैष्णवं पाञ्चभौतिकम् ।
विमानपालको मित्रः पङ्क्तीश इति कीर्त्यते ॥ १५ ॥
श्वभ्रे, मृत्सु श्वभ्रे प्रमाणहीने च मेदिन्यादीन् सुहूयताम् ।
यथोक्तस्थानमृद्धीने यथालाभं प्रगृह्य च ॥ १६ ॥
जुहुयाद्भूमिदैवत्यं वैष्णवं ब्राह्मसंयुतम् ।
अथवा पश्चिमे श्वभ्रं कृत्वा तु स्नपनालये ॥ १७ ॥
पङ्क्तिं तस्याग्रतः कृत्वा द्रव्यन्यासार्थमेव वा ।
मृदादीनि यथास्थानं पङ्क्तौ द्रव्याणि सन्न्यसेत् ॥ १८ ॥
मध्ये शुद्धोदकैः पूर्णं कुम्भं वस्त्रादिवेष्टितम् ।
सन्न्यस्य धान्यपीठोर्ध्वे मृदादिस्नपनात्परम् ॥ १९ ॥
जप्त्वा पुरुषसूक्तञ्च स्नापयेदिति केचन ।
कारयेत्स्नपनश्वभ्रं शिलयेष्टकयाऽथवा ॥ २० ॥
हस्तमात्रोच्छ्रयं पीठमधिष्ठानोक्तवच्चरेत् ।
अधिष्ठानतलोर्ध्वे चेन्मञ्चान्तं वेदिकादिकम् ॥ २१ ॥
तलोपरि तलं नैव कुर्यादित्याह पूर्वजः ।
तदूर्ध्वे कारयेच्छ्वभ्रमौपासनविधानतः ॥ २२ ॥

हस्तमात्रोच्छ्रयं [1]पीठं कृत्वा यज्ञोक्तदारुभिः ।
पङ्क्तिमध्ये प्रतिष्ठाप्य जलधारां तदुत्तरे(?) ॥ २३ ॥

संस्नाप्य देवं तच्छ्वभ्रे स्नापयेदिति केचन ।
अथ नित्याभिषेकार्थं मण्डपस्य तथोत्तरे ॥ २४ ॥

स्थापयित्वा तथा देवं देवीभ्यां स्नापयेत्सह ।
तावदायामविस्तारयुतं श्वभ्रं प्रकल्पयेत् ॥ २५ ॥

प्रागादिकन्तु (?) परितः पीठानान्तु पृथक्पृथक् ।
द्विवेदिसहितं कुर्यादौपासनविधानतः ॥ २६ ॥

हस्तोच्छ्रये षडंशे वा [1]मुखमेकांशकं भवेत् ।
त्रिभागं कण्ठतुङ्गं स्याद्विभागं चोर्ध्वपट्टिका ॥ २७ ॥

कुण्डस्यौपासनस्येव निम्नं तस्य विधीयते ।
श्वभ्रं नित्याभिषेकार्थं केचिदेवं वदन्ति वै ॥ २८ ॥

पर्वतादौ हीनाधिकेन मानेन पर्वतान् कारयेद्यदि ।
आग्नेयं वैष्णवं हुत्वा व्याहृत्यन्तं प्रतिप्रति ॥ २९ ॥

धान्यानाम् अलाभे सर्वधान्यानां केवलं यवमेव वा ।
व्रीहेरूर्ध्वं यथालाभं धान्यं प्रक्षिप्य चार्चयेत ॥ ३० ॥

वायव्यं वैष्णवं ब्राह्मं जुहुयात्तस्य शान्तये ।
अङ्कुराणाम् अङ्कुराणामलाभे तु [2]पूर्वाङ्कुरमथापि वा ॥ ३१ ॥

तद्दैवत्यञ्च जुहुयाद्वैष्णवं सौम्यमेव च ।
मङ्गलानाम् हीनाधिकप्रमाणेन मङ्गलान् कुरुते यदि ॥ ३२ ॥

ऐन्द्रं यजेद्वैष्णवञ्च महाव्याहृतिभिस्सह ।
पञ्चगव्ये यथोक्तयोगहीने तु पञ्चगव्यस्य बुद्धिमान् ॥ ३३ ॥

---

1. पद्मं ख. 2. द्रव्याङ्कुरं आ.

रौद्रञ्च वैष्णवं मन्त्रं प्रत्येकं विंशतिं यजेत् ।
कपिलाया घृतं श्रेष्ठं रक्ताया दधि चाऽहरेत् ॥ ३४

श्वेतायास्तु तथा क्षीरं कृष्णाया गोमयं भवेत् ।
कपोतगलवर्णाया गोमूत्रमपि चाऽहरेत् ॥ ३५ ॥

अलाभे चोक्तवर्णानां यथालाभमथापि वा ।
पूर्वोक्तैरेव मन्त्रैस्तु तत्संयोगमथाऽचरेत् ॥ ३६ ॥

संयोगे पञ्चगव्यस्य मन्त्रहीनं कृते सति ।
संयोगविहितं मन्त्रं द्विर्जपेत्पाणिना स्पृशन् ॥ ३७ ॥

प्रधानद्रव्येषु

ग्राह्यं क्षीरञ्च दध्याज्यमाजमाहिषवर्जितम् ।
आजं वा माहिषं वाऽपि गृहीत्वा स्नापयेद्यदि ॥ ३८

पौरुषं जुहुयात्सूक्तं विष्णुसूक्तमतः परम् ।
पारमात्मिकमीङ्काराद्यङ्गहोमं सकृत्सकृत् ॥ ३९ ॥

सद्यस्तप्तं सुवर्णाभं समपक्वं घृतं हरेत् ।
कृमिकीटपतङ्गादि यदि दृश्येत तद्घृते ॥ ४० ॥

उत्पूय वस्त्रेणोद्दीप्य प्रोक्षयित्वाऽऽहरेत्पुनः ।
संस्पृश्य वैष्णवैर्मन्त्रै 'रापो हि ष्ठा' मयादिभिः ॥ ४

सामवेदादिमन्त्रैश्च जुहुयाद्वैष्णवेन च ।
स्नापयेद्देवदेवन्तं मन्त्रवद्भक्तिसंयुतम् ॥ ४२ ॥

मधुहीने तु तोयं वा समाहृत्य मधु स्मरन् ।
हुत्वा ऋगादिमन्त्रेण वैष्णवेन ततः परम् ॥ ४३ ॥

स्नापयेद्देवदेवन्तं मन्त्रं पूर्वोक्तमुच्चरन् ।
दधि शुद्धं घनं ग्राह्यं निर्दोषं प्रियदर्शनम् ॥ ४४ ॥

सदोषे दध्नि जुहुयाद्वैष्णवं यजुरादिकम् ।
व्याहृतीश्चैव जुहुया 'दतो देवादि' वैष्णवम् ॥ ४५

'शन्नो देवी' रिति क्षीरे प्रत्येकं विंशतिं यजेत् ।
गन्धहीने च गन्धे वै तद्दैवत्यं सवैष्णवम् ॥ ४६ ॥

अक्षतोदेऽक्षतालाभे यथालाभं प्रगृह्य च ।
आर्षञ्च वैष्णवं ब्राह्मं सौम्यं हुत्वाऽभिषिञ्चति ॥ ४७ ॥

फलालाभे यथालाभं गृहीत्वा सौम्यवैष्णवैः ।
व्याहृत्यन्तं कुशालाभे दर्भाग्रं तत्र निक्षिपेत् ॥ ४८ ॥

आर्षकं वैष्णवं ब्राह्ममैन्द्रं हुत्वा समाचरेत् ।
रत्नोदकस्य रत्नानामलाभे रुक्ममेव वा ॥ ४९ ॥

वैष्णवं विष्णुसूक्तञ्च ब्राह्मं रौद्रं यजेत्ततः ।
जप्योदे जपहीने तु वैष्णवञ्च शतं यजेत् ॥ ५० ॥

हुत्वा तु पौरुषं सूक्तं विष्णुसूक्तमतः परम् ।
क्षिपेद्वा तण्डुलान् शालीनोषधीनामलाभके ॥ ५१ ॥

पुण्यपुष्पाणाम् आदित्यं वैष्णवं ब्राह्मं व्याहृत्यन्तं यजेत्पुनः ।
अलाभे पुण्यपुष्पाणां धातृमन्त्रं सवैष्णवम् ॥ ५२ ॥

प्रायश्चित्तं सकृद्धुत्वा यथालाभं समाहरेत् ।
गन्धचूर्णानाम् अलाभे गन्धचूर्णानां चक्रमन्त्रं सवैष्णवम् ॥ ५३ ॥

हुत्वोशीरेण मौद्गेन चूर्णेनोद्वर्तयेत्तथा ।
कषायचूर्णेषु सर्वालाभे कषायार्थमाश्वत्थीं त्वचमाहरेत् ॥ ५४ ॥

वारुणं वैष्णवं हुत्वा तेनैवोद्वर्तयेत्पुनः ।
तीर्थतोयस्य अलाभे तीर्थतोयानां नादेयं वा समाहरेत् ॥ ५५ ॥

गाङ्गेयं वैष्णवं मन्त्रं व्याहृत्यन्तं सकृद्यजेत् ।
ओषधीनाम् ओषधीनामलाभे तु वैष्णवं रौद्रसंयुतम् ॥ ५६ ॥

हुत्वाऽऽदाय यथालाभं मार्जयेत्पूर्वमन्त्रतः ।
अलाभे सर्वगन्धानां चन्दनं वा समाहरेत् ॥ ५७ ॥

ऐन्द्रञ्च वैष्णवं हुत्वा व्याहृतीश्च ततः परम् ।
प्लोते प्लोतालाभेऽन्यवस्त्रेण धौतेन परिमार्जयेत् ॥ ५८ ॥

त्वाष्ट्रं सवैष्णवं विष्णुसूक्तं हुत्वा समाचरेत् ।
'त्वष्टा रूपाणामधिपति' रिति त्वाष्ट्रमुदाहृतम् ॥ ५९ ॥

मूलगन्धस्य अलाभे मूलगन्धस्य दूर्वाग्रं वा समाहरेत् ।
ब्राह्मञ्च वैष्णवं हुत्वा प्राजापत्यसमन्वितम् ॥ ६० ॥

धातूनाम् अलाभे सर्वधातूनां जातिहिङ्गुलिकन्तु वा ।
दौर्गञ्च विष्णुसूक्तञ्च हुत्वा तेन समाचरेत् ॥ ६१ ॥

पाणिपादतलौष्ठेषु जातिहिङ्गुलिकं ददेत् ।
भूषणाम्बरयोर्दद्याद्धरितालं मनश्शिलाम् ॥ ६२ ॥

सर्वाङ्गेष्वञ्जनं प्रोक्तमथवा पक्ष्मणोर्द्वयोः ।
गोरोचनं नयनयोर्मुखे सर्वत्र वाऽथवा ॥ ६३ ॥

यथास्थानमलङ्कुर्यादेतैर्धातुभिरेव वै ।
अलङ्कारे अलङ्कारविपर्यासे यजेद्दौर्गञ्च वैष्णवम् ॥ ६४ ॥

जुहुयाद्भूषणालाभे स्कन्ददैवत्यवैष्णवैः ।
द्रव्योद्धारे विपर्यासोद्धृते द्रव्ये मोहाद्वाऽथ प्रमादतः ॥ ६५ ॥

तद्दैवत्यञ्च हुत्वा तु वैष्णवञ्चैकविंशतिम् ।
कलशभेदादौ साधिते कलशे भिन्ने स्पृष्टे शूद्रादिभिस्तथा ॥ ६६ ॥

अन्यं कलशमादाय पूर्ववत्सम्प्रपूरयेत् ।
तं स्पृष्ट्वा वैष्णवं मन्त्रं तद्दैवत्यं शतं जपेत् ॥ ६७ ॥

चतुर्विंशतिकृत्वश्च तद्दैवत्यं जुहोति च ।
जुहुयाद्वैष्णवं ब्राह्ममष्टोत्तरशतं पुनः ॥ ६८ ॥

कृमिकीटादिपतने कृमिकीटपतङ्गादौ द्रव्येषु पतिते यदि ।
तद्द्रव्यं वर्जयेन्नित्यं द्रव्यमन्यत्समाहरेत् ॥ ६९ ॥

तद्दैवत्यं शतं हुत्वा देवेशं स्नापयेत्पुनः ।
अथवा सर्वदोषाणां शान्त्यर्थं स्नपने तथा ॥ ७० ॥

जुहुयात्पौरुषं सूक्तं विष्णुसूक्तमतः परम् ।
पारमात्मिकमीङ्काराद्यष्टाशीत्याहुतीरपि ॥ ७१ ॥

श्रीसूक्तं रात्रिसूक्तञ्च दुर्गासूक्तं ततः परम् ।
पञ्चवारुणसंयुक्तं जयादीन् वैष्णवानपि ॥ ७२ ॥

यजेद्द्रव्याधिदेवानां जयादीनाञ्च मूर्तिभिः ।
सङ्कल्पिते स्नपने विघ्निते
कल्पिते स्नपने हीने ग्रहणे विषुवेऽयने ॥ ७३ ॥

एकाहन्तु महाशान्तिमब्जाग्नौ जुहुयाद्बुधः ।
कलशैर्द्विगुणैर्देवं स्नापयीत यथविधि ॥ ७४ ॥

एवमेव च संवर्ध्य स्नपनंप्रति कारयेत् ।
तैलाभ्यक्ते न स्नपनम्
तैलाभ्यक्ते तु देवेशे स्नपनं तत्र नाचरेत् ॥ ७५ ॥

तैलमोक्षं ततः कृत्वा पुनः स्नपनमाचरेत् ।
तैलमोक्षमकृत्वा तु मोहेन स्नापयेद्यदि ॥ ७६ ॥

आसुरं स्नपनं तत्स्यात्तस्य दोषस्य शान्तये ।
शान्तिहोमं सकृद्धुत्वा पुनश्च स्नापयेत्तथा ॥ ७७ ॥

स्नापयेद्यदि देवीभ्यां सह तच्चासुरं भवेत् ।
तत्रापि शान्तिहोमान्ते देवेशं स्नापयेत्पृथक् ॥ ७८ ॥

बेरविशेषाणां देवीसाहित्यराहित्ये
स्नापनं बलिबेरञ्च देवीरहितमेव वै ।
औत्सवं स्नापयेच्चेत्तु देवीभ्यां स्नापयेद्विना ॥ ७९ ॥

तत्रापि स्नपनान्ते तु देवीभ्यां सहितं चरेत् ।
देवीयुक्ते स्नापने तु पूर्ववत्कारयेद्बुधः ॥ ८० ॥

बलिबेरे च देवीभ्यां युक्ते तु सह सन्नयेत् ।
कौतुके स्नपनं स्याच्चेद्देवीभ्यां सह नाचरेत् ॥ ८१ ॥

अज्ञानान्निष्कृतिप्रोक्तप्रायश्चित्तं समाचरेत् ।
स्नपने सप्तकलशैः पञ्चभिः कलशैरपि ॥ ८२ ॥

प्रतिद्रव्यार्चने हीने उपचारं प्रतिप्रति ।
अर्चनानिष्कृतिप्रोक्तप्रायश्चित्तं समाचरेत् ॥ ८३ ॥

निवेदने पक्वमप्युदयात्पूर्वं सोष्णं चेत्तद्धविर्ददेत् ।
पक्वमस्तमयात्पूर्वं सोष्णं निशि निवेदयेत् ॥ ८४ ॥

पात्रान्तरागतं शीतं लङ्घितं विवृतं तथा ।
हविस्सूतिकया दृष्टं प्रतिलोमैरुदक्यया ॥ ८५ ॥

मक्षिकापक्षिकीटैश्च दूषितञ्च पिपीलिकैः ।
पक्वं सन्धिद्वयात्पूर्वं हविर्नैव निवेदयेत् ॥ ८६ ॥

निवेदयेच्चेदज्ञानाच्छुद्धोदैरभिषिच्य च ।
महाशान्तिञ्च हुत्वा तु द्विगुणञ्च निवेदयेत् ॥ ८७ ॥

सोष्णं सन्धिद्वयातीतं प्रभूतञ्च महाहविः ।
कृच्छ्रभूतं हविश्चापि देवेशाय निवेदयेत् ॥ ८८ ॥

कृमिकीटपतङ्गाद्यैः बह्वन्ने दूषिते यदि ।
द्विप्रस्थचरुमुद्धृत्य भस्माद्भिः प्रोक्ष्य मन्त्रतः ॥ ८९ ॥

दग्ध्वा दर्भोल्कयाऽऽस्राव्य घृतं पश्चान्निवेदयेत् ।
निर्माल्यपूजनादौ निर्माल्येनार्चने चापि निवेदितनिवेदने ॥ ९० ॥

संस्नाप्य शान्तिहोमान्ते समभ्यर्च्य निवेदयेत् ।
प्रायश्चित्तं तथैवोक्तं तत्संस्पृष्टनिवेदने ॥ ९१ ॥

एष एव विशेषस्स्यादन्यत्सर्वं खिलोक्तवत् ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
महास्नपननिष्कृतिर्नाम पञ्चविंशोऽध्यायः ।

## षड्विंशोऽध्यायः



उत्सवप्रायश्चित्तम्

अतः परं प्रवक्ष्यामि [1]प्रायश्चित्तमथोत्सवे ।
[2]वस्त्रे प्रमाणहीने च ध्वजदण्डे तथैव च ॥ १ ॥

ध्वजपटादीनां लक्षणहानौ

वीशे लक्षणहीने च चित्रकर्मविपर्यये ।
गारुडं ध्वजदैवत्यं शतमष्टोत्तरं यजेत् ॥ २ ॥

कृते सङ्कीर्णवर्णेन प्रायश्चित्तमथाचरेत् ।

अस्पृश्यस्पर्शादौ

कृते प्रतिष्ठासंस्कारे ध्वजे तत्र विशेषतः ॥ ३ ॥

संस्पृष्टे क्षत्रियैर्वैश्यैः प्रोक्षणैः प्रोक्ष्य चाऽहरेत् ।
उच्छिष्टाशुचिभिर्विप्रैः शूद्रैः स्पृष्टे [3]तथैव च ॥ ४ ॥

सप्तभिः कलशैः प्रोक्ष्य जुहुयाद्ध्वजगारुडौ ।
( सप्तविंशतिकृत्वः स्यादुच्छिष्टाशुचिभिर्नृपैः ) ॥ ५ ॥

चतुर्विंशतिभिः प्रोक्ष्य कलशैर्द्विगुणं यजेत् ।
द्विगुणं तद्वणिक्स्पर्शे स्नपनं होममाचरेत ॥ ६ ॥

उच्छिष्टाशुचिभिश्शूद्रैः प्रतिलोमैरुदक्यया ।
स्पृष्टे सूतिकया वाऽथ कलशैस्साष्टकैश्शतैः ॥ ७ ॥

स्नापयित्वा तु पूर्वोक्तं होमं द्विगुणमाचरेत् ।
पूर्वद्ध्वजदेवस्य प्रतिष्ठामाचरेत्पुनः ॥ ८ ॥

[4]( सवर्णाख्यानुलोमेन संस्पृष्टे क्षत्रियोक्तवत् ।
अभिषिक्ताख्यसंस्पर्शे कुर्याद्वैश्योक्तनिष्कृतिम् ॥ ९ ॥

अन्यानुलोमसंस्पर्शे कुर्याच्छूद्रोक्तनिष्कृतिम् ।
वर्णजातिविवेकेन यत्र नोक्ता तु निष्कृतिः ॥ १० ॥

---

1. प्रायश्चित्तं महोत्सवे. ख. 2. वास्तु. आ. 3. अथवा ध्वजे. आ. 4. कुण्डलितो भागः ख. कोश एव दृश्यते.

तत्क्रमेणैव विहितं प्रायश्चित्तं समाचरेत् )।
पर्यग्निपञ्चगव्याभ्यां शुद्धिं सर्वत्र कारयेत् ॥ ११ ॥

ध्वजे अधरोत्तरे

ध्वजारोहणकाले तु ध्वजे तत्राधरोत्तरे ।
महाशान्तिञ्च हुत्वा तु ध्वाजमष्टोत्तरं शतम् ॥ १२ ॥

गारुडञ्च तथा हुत्वा कलशैः प्रोक्ष्य सप्तभिः ।
समभ्यर्च्य निवेद्यैव पुनरारोपयेद्ध्वजम् ॥ १३ ॥

कृत्वैवं दण्डभङ्गे च ध्वजभङ्गे तथैव च ।
भङ्गे च यष्ट्याधाराणां तद्वदन्यत्समाहरेत् ॥ १४ ॥

ध्वजपतनादौ

ध्वजे तु पतिते ध्वाजं गारुडं वैष्णवं यजेत् ।
प्रोक्षणैः प्रोक्ष्य तत्पश्चाद्ध्वजं तत्र सुयोजयेत् ॥ १५ ॥

ध्वजस्य नाशे भेदे च [1]आग्नेयं गारुडं तथा ।
ध्वाजञ्च वैष्णवं हुत्वा कारयित्वैव तद्ध्वजम् ॥ १६ ॥

आवाह्य गरुडं तत्र पुनरारोपयेद्ध्वजम् ।
ग्रामप्रदक्षिणञ्चैव बलिदानञ्च नाऽचरेत् ॥ १७ ॥

[2]शिष्टाहेषु प्रपूर्णेषु ध्वजं तमवरोपयेत् ।

ध्वजारोहणहीने

ध्वजारोहणहीने तु लोकपालकदैवतम् ॥ १८ ॥

प्राजापत्यञ्च रौद्रञ्च विष्णुसूक्तं यजेत्क्रमात् ।

एकाहोत्सवे न ध्वजारोहणम्

न ध्वजारोहणं कुर्यादेकाहे च दिनद्वये ॥ १९ ॥

दिनत्रयोत्सवे चापि न कुर्यादिति केचन ।
अनुक्तेषु च दोषेषु प्रायश्चित्तं ध्वजस्य च ॥ २० ॥

ध्वाजञ्च गारुडञ्चैव दशकृत्वो यजेत्पुनः ।

कालोत्सवे विघ्निते

प्रत्यब्दक्रियमाणे तु हीने कालोत्सवे खिले ॥ २१ ॥

---

1. दाहे छेदे तथैव च. ख. 2. दशाहेषु. ख.

पौण्डरीके महशान्तिं यावद्दिवसमुत्सवः ।
दिनेषु तावत्सङ्ख्येषु जुहुयाद्भक्तिसंयुतः ॥ २२ ॥

[1]सवत्सास्तावतीर्गाश्च देवेशाय ददेन्मुदा ।
उत्सवस्य च यन्मूल्यं द्रव्यं तद्वाऽथ सन्ददेत् ॥ २३ ॥

कलशैस्स्नापयित्वा तु शतेनाष्टाधिकेन च ।
सर्वोपाचारैरभ्यर्च्य निवेद्य च महाहविः ॥ २४ ॥

कृत्वा च महतीं पूजां पुण्याहमपि वाचयेत् ।
संस्तूय विष्णुसूक्तेन देवेशं पौरुषेण च ॥ २५ ॥

ब्राह्मणान् भोजयित्वा तु पुनश्चोत्सवमाचरेत् ।
उत्सवं द्विगुणं सम्यक्कारयेदिति केचन ॥ २६ ॥

समूर्तार्चनयज्ञस्य प्रायश्चित्तमिदं स्मृतम् ।
[2] (ध्वजारोहणकाले तु आचार्यो गर्भवान् यदि ॥ २७ ॥

महोत्सवे पवित्रस्याद्ब्रूषे वेषे [3]कृतो यदि ।
नित्यकर्म तदाख्यातं गर्भदीक्षा न विद्यते ॥ २८ ॥

प्रोक्षणाद्यानि कर्माणि नित्यान्यन्यानि चाऽचरेत् ।
गर्भिणीपतिराचार्यस्त्रिमासात्प्रभृति द्विजाः ॥ २९ ॥

श्राद्धान्नं तिलहोमञ्च दूरयानं प्रतिग्रहम् ।
सिन्धुस्नानं गयाश्राद्धं वपनं प्रेतवाहनम् ॥ ३० ॥

पर्वतारोहणञ्चैव न कुर्यादिति वै विधिः) ।
प्रतिसंवत्सरञ्चैव वर्धयित्वा तु कारयेत् ॥ ३१ ॥

हीने दिने तथैकस्मिन् तस्य कालोत्सवस्य तु ।
हुत्वा पुरुषसूक्तेन वैष्णवैः षड्भिरेव च ॥ ३२ ॥

---

1. सवत्सां गां ददेत्पश्चात्. ख. 2. कुण्डलितो भागः ख. कोशे. 3. कृते सति. आ.

कूष्माण्डैः ब्राह्ममन्त्राभ्यामैन्द्रैरपि च वैष्णवैः ।
मूर्तिभिः परिवाराणां तदालयनिवासिनाम् ॥ ३३ ॥

कलशैः स्नापयित्वा तु समभ्यर्च्य निवेदयेत् ।
पूर्वोक्तेन क्रमेणैव चोत्सवं पुनराचरेत् ॥ ३४ ॥

वर्धयित्वा चरेदेवं दिनंप्रति[1] दिनंप्रति ।
अतीताहोत्सवं कृत्वा पुनश्शेषं समाचरेत् ॥ ३५ ॥

उत्सवं द्विगुणं केचित्प्रातर्हीने दिने दिने ।
एककालोत्सवे हीने एककालोत्सवे हीने पूर्वोक्तं होममाचरेत् ॥ ३६ ॥

उत्सवञ्च तथा कुर्याच्छेषं पूर्ववदाचरेत् ।
(वीथीभ्रमणवेलायां देवे यानगते सति ॥ ३७ ॥

रथयात्रायां सम्भाव्यमानदोषेषु
कलहे रुधिरस्रावे महोत्पाते मृते जने ।
रथचक्रग्रहे[2] चैव नराणां मृतिसम्भवे ॥ ३८ ॥

शेषवीथीं परिभ्राम्य प्रादक्षिण्यक्रमेण तु ।
आलयञ्च प्रविश्यैव देवेशमवरोप्य च ॥ ३९ ॥

सप्तभिः कलशैर्देवं संस्नाप्य च विधानतः ।
पुण्याहं वाचयेद्विद्वान् प्रोक्षणञ्चैव कारयेत् ॥ ४० ॥

विशेषेण तु देवाय मुद्गान्नं विनिवेदयेत् ।
क्षमामन्त्रं समुच्चार्य प्रणाममपि कारयेत् ॥ ४१ ॥

क्षमामन्त्रप्रकारः
क्षमामन्त्रं प्रवक्ष्यामि शृणुध्वं मुनिसत्तमाः ।
अज्ञानादर्थलोभाद्वा रागाद्द्वेषात्प्रमादतः ॥ ४२ ॥

अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम ।
मया वा मज्जनैर्वाऽथ मम बन्धुभिरेव वा ॥ ४३ ॥

---

1. विशेषतः. आ. 2. गते. ख.

अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम ।
आचार्येणार्चकेनाऽपि भक्तैर्वा परिचारकैः ॥ ४४ ॥

अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम ।
राज्ञा वा राजभृत्यैर्वा तदमात्यैरथापि वा ॥ ४५ ॥

अपराधः कृतो यस ं क्षमस्व पुरुषोत्तम ।
ग्रामणीभिर्ग्रामिभिर्वा ग्रामपालैरथापि वा ॥ ४६ ॥

अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम ।
गायकैर्नर्तकैर्वाऽपि तथा वादित्रवादकैः ॥ ४७ ॥

अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम ।
अमन्त्रकार्चनायां यत् जातमज्ञातजन्मनः ॥ ४८ ॥

अवद्यं ममयत्किञ्चित् क्षमस्व पुरुषोत्तम ।
प्रणामादिविसर्गान्तं क्रियासु विधिपूर्वकम् ॥ ४९ ॥

अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम ।
अर्पितन्तु यथाशक्ति पत्रं पुष्पं फलं जलम् ॥ ५० ॥

निवेदितञ्च नैवेद्यं स्वीकुरु त्वं जनार्दन ।
[1]आवाहनं न जानामि न जानामि विसर्जनम् ॥ ५१ ॥

कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्मम ।
अन्तश्चरसि भूतानां द्रष्टा त्वं जगदीश्वरः ॥ ५२ ॥

नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम् ।
तेषु तेष्वच्युता भक्तिरच्युतेऽस्तु सदा त्वयि ॥ ५३ ॥

देवो दाता च भोक्ता च देवस्सर्वमिदं जगत् ।
देवो जयति सर्वत्र त्वं देवः स्वयमेव हि ॥ ५४ ॥

---

1. आवाहनविसर्गान्तं (?) क्रियासु विधिपूर्वकम् । अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम इत्यधिकम्. ई.

अशक्यं विधिवत्कर्तुं ब्रह्माद्यैरपि पूजनम् ।
न्यूनातिरेकव्याघातदोषहीनं जगत्पते ॥ ५५ ॥

किमुतास्माभिरल्पज्ञैर्मनुष्यैरदृढात्मभिः ।
तस्मान्नित्यार्चनायान्तु [1]यदुद्भूतमशोभनम् ॥ ५६ ॥

अनया पूजया विष्णो प्रशान्तं सर्वमस्तु नः ।
उपचारापदेशेन कृतानहरहर्मया ॥ ५७ ॥

अपचारानिमान् सर्वान् क्षमस्व पुरुषोत्तम ।
एवं नित्यार्चनान्ते तु प्रार्थयेत्सर्वनिष्कृतिः ॥ ५८ ॥

पूजाभागं न [2]जानामि त्वं गतिः पुरुषोत्तम ।
इति संस्तुत्य नुत्यन्ते यागशालां प्रविश्य च ॥ ५९ ॥

शान्तिहोमप्रकारः पौण्डरीकाग्निमासाद्य घृतेन जुहुयात्क्रमात् ।
वैष्णवं विष्णुसूक्तञ्च पौरुषं सूक्तमेव च ॥ ६० ॥

जुहुयाद्विष्णुगायत्रीं शतमष्टोत्तरं तदा ।
ईङ्कारादींश्च जुहुयाद्वास्तुहोमञ्च कारयेत् ॥ ६१ ॥

पर्यग्निकरणम्
वर्षबिन्दुपतनादौ कुर्याद्वीथ्याञ्च पर्यग्निं प्रोक्षयेच्च विधानतः ।
उत्सवे देवदेवस्य सेचने वर्षबिन्दुभिः ॥ ६२ ॥

तथा बिम्बं समानीय समाच्छाद्यान्यदंशुकम् ।
परिधाप्य महाशन्तिं हुत्वा स्नाप्य शताष्टकैः ॥ ६३ ॥

भारतण्डुलसंयुक्तं तदर्धतिलसंयुतम् ।
निष्कत्रयसुवर्णञ्च ताम्बूलसहितं पुनः ॥ ६४ ॥

दत्वा कालोत्सवे प्रोक्तां निष्कृतिञ्च समाचरेत् ।
द्विगुणार्चनादिहीने देवदेवस्य देव्योश्च सायं प्रातस्तथोत्सवे ॥ ६५ ॥

---

1. यदा भूतं. ख. 2. यच्छामि. ख.

हविषि द्विगुणे हीने हीने च द्विगुणेऽर्चने ।
वैष्णवं विष्णुसूक्तञ्च हुत्वा तत्र चतुर्गुणम् ॥ ६६ ॥

अर्चयित्वा हविश्चाऽपि सम्यग्दद्याच्चतुर्गुणम् ।
हविषो द्विगुणे हीने वीशशान्तानपायिनाम् ॥ ६७ ॥

द्विगुणं तान् समभ्यर्च्य द्विगुणञ्च निवेदयेत् ।
उत्सवचक्रहीने — उत्सवं चक्रहीनन्तु नाचरेदिति शासनम् ॥ ६८ ॥

कारयेदुत्सवार्थं तमथवा चानपायिनाम् ।
चक्रञ्च बलिबेरञ्च याचयेदिति केचन ॥ ६९ ॥

याचितं तत्क्रियान्ते तु नीत्वा पूर्वालयं पुनः ।
संस्थाप्य शान्तिं हुत्वा तु पूर्वस्थाने निवेशयेत् ॥ ७० ॥

आवाह्य पाले पुष्पेषु वीशशान्तौ समुत्सृजयेत् ।
होमहीने तु जुहुयाद्द्विगुणन्तु यथाविधि ॥ ७१ ॥

कुम्भस्थदेवानां पूजने हीने — हीने कुम्भस्थदेवानां सायं प्रातस्तथार्चने ।
एकादशोपचारेषु हीनेषु च तदर्चने ॥ ७२ ॥

कारयेदर्चनाहीनप्रायश्चित्तोक्तनिष्कृतिम् ।
कुम्भस्थानाञ्च देवानां नामभिश्च यजेत्पुनः ॥ ७३ ॥

पुनर्द्विगुणमभ्यर्च्य द्विगुणञ्च निवेदयेत् ।
कुम्भस्यास्पृश्यस्पर्शादौ — कुम्भे स्पृष्टे श्वकाकाद्यैः अस्पृश्यैश्च तथैव च ॥ ७४ ॥

प्रायश्चित्तं प्रतिष्ठोक्तं कृत्वाऽन्यं कुम्भमाहरेत् ।
अनपायिनामर्चने हीने — वीशानपायिपङ्क्तीशशान्तानां[1] यागमण्डपे ॥ ७५ ॥

हीनेऽर्चने तु तन्मन्त्रैस्तद्दिगग्नौ[2] जुहोति च ।
त्रेताग्निर्यदि शान्तस्य यजेदाहवनीयके ॥ ७६ ॥

---

1. चक्राणां. आ. 2. तत्तदग्नौ. आ.

सर्वेषां जुहुयात्सभ्ये मन्त्रानेकाग्निकल्पने ।
द्विगुणञ्च समभ्यर्च्य द्विगुणञ्च निवेदयेत् ॥ ७७ ॥

[1]अतीतदिवसाद्येवं प्रायश्चित्तं समाचरेत् ।
नित्याग्न्यावनादृते [2]नित्याग्निव्यतिरिक्ताग्निर्यदि कुण्डे प्रणीयते ॥ ७८ ॥

उत्सवो निष्फलस्तस्मादग्निं नित्यं प्रणीय च ।
हुत्वा तद्द्विगुणं होमं पुनश्चोत्सवमाचरेत् ॥ ७९ ॥

[3]( आतीर्थदिवसादग्निमविच्छिन्नञ्च रक्षयेत् ।
ग्रामबलौ हीने हीने ग्रामबलौ तत्तद्देवानां मूर्तिभिस्सह ॥ ८० ॥

जुहुयाद्वैष्णवञ्चापि व्याहृत्यन्तं प्रतिप्रति ।
पश्चाद्ग्रामबलिं दत्वा पुनश्चोत्सवमाचरेत् ॥ ८१ ॥

आस्थानार्चनम् आस्थानमण्डपं कुर्याद्विदिशासु दिशासु वा ।
प्राङ्मुखं कल्पयेद्विद्वानथवा दक्षिणामुखम् ॥ ८२ ॥

पञ्चहस्तादिभेदेन कल्पयेद्देशिकोत्तमः ।
तत्र देवं प्रतिष्ठाप्य पाद्याद्यैरर्चयेत्क्रमात् ॥ ८३ ॥

तन्मुखे नृत्तगीतादिविनोदकरणानि च ।
कारयेत्तु विधानेन पादे पुष्पाञ्जलिं ददेत् ॥ ८४ ॥

अन्यत्र कृत्यवैकल्ये राजा राष्ट्रञ्च नश्यतः ।
तस्मात्सर्वप्रयत्नेन उक्तवत्सर्वमाचरेत् ) ॥ ८५ ॥

बलिभ्रमणकाले सम्भाव्यमानदोषेषु बलिभ्रमणवेलायां[4] चण्डालस्सूतिकाऽथवा ।
प्रमादात्प्रविशेत्सद्यश्श्वकादीनालयं नयेत् ॥ ८६ ॥

चक्रशान्तौ च वीशञ्च बलिबेरं पृथक्पृथक् ।
संस्नाप्य सप्तकलशैः प्रोक्षयित्वा बलिं तथा ॥ ८७ ॥

---

1. आदित्यदिवसाद्येवं. **आ.** 2. नित्याग्निव्यतिरिक्ताग्निर्व्यतिरिक्तं निवर्तते (?) **ई.**
3. कुण्डलितो भागः **आ.** कोशेष्वेव दृश्यते. 4. काले तु **आ.**

चक्रवीशामितानाञ्च मन्त्रैरपि च वैष्णवैः ।
बलिरक्षकमन्त्राभ्यां शतमष्टोत्तरं यजेत् ॥ ८८ ॥

पर्यग्निपञ्चगव्याभ्यां शोधयित्वाऽथ वीथिकाम् ।
दत्वा शिष्टबलिं पश्चात्पुनः कर्म समापयेत ॥ ८९ ॥

उत्सवे वीथ्यां शवपतने

अन्तर्वीथ्यां शवे याते वास्तुहोमावसानके ।
पर्यग्निपञ्चगव्याभ्यां वीथीं संशोध्य सर्वतः ॥ ९० ॥

लोकपालकमन्त्रैश्च बलिं निर्वाप्य [1]पूर्ववत् ।
हुत्वा बल्युत्सवादीनि पूर्ववत्परिकल्पयेत् ॥ ९१ ॥

तद्ग्रामान्तर्मृतौ [2]सत्यां शीघ्रमुद्धृत्य तं शवम् ।
प्रायश्चित्तञ्च पूर्वोक्तं कृत्वा शेषं समाचरेत् ॥ ९२ ॥

[3](शवञ्च केवलं नैव नयेत्केशवसन्निधौ ।
नीतञ्चेत्स्याद्विनाशाय तद्ग्रामयजमानयोः ॥ ९३ ॥

तस्मात्तद्दोषशान्त्यर्थं वास्तुहोमञ्च कारयेत् ।
शान्तिञ्चैव महाशान्तिं हुत्वा तत्र विचक्षणः ॥ ९४ ॥

अलङ्करणहीने

ब्राह्मणान् भोजयित्वैव दक्षिणाञ्च ददेद्गुरोः ।
भूषणैरपि सौवर्णैर्नानावर्णाम्बरैरपि ॥ ९५ ॥

देवालङ्करणे हीने श्रीसूक्तं वैष्णवं यजेत् ।
सुगन्धैर्बहुभिः पुष्पैर्माल्यैरपि विशेषतः ॥ ९६ ॥

देवालङ्करणे हीने महीसूक्तञ्च वैष्णवम् ।

शिबिकादिहीने

रथरङ्गे डोलिकायां शिबिकायामथापि वा ॥ ९७ ॥

हीनेषु देवदेवस्य चान्यालङ्करणेषु च ।

हविषि हीने

हविषि द्विगुणे हीने चोत्सवं नाचरेद्बुधः ॥ ९८ ॥

---

1. नामभिः. ख. 2. सद्यः. ख. 3. कुण्डलितो भागः ख कोश एव.

यानालङ्करणे हीने वैष्णवं गारुडं यजेत् ।
ध्वजहीने तु जुहुयाद्ध्वजमन्त्रं सवैष्णवम् ॥ ९९ ॥

परिकारान्तरहीने　नृत्तगेयविहीने तु [1]ब्राह्मं रौद्रञ्च वैष्णवम् ।
[2]श्वेतच्छत्रादिहीने तु सौम्यवैष्णववारुणान् ॥ १०० ॥

हीने परिच्छदेऽन्यस्मिन् श्रीमन्त्रं वैष्णवं यजेत् ।
गन्धधूपविहीने तु बार्हस्पत्यं सवैष्णवम् ॥ १०१ ॥

जुहुयादार्षकैर्मन्त्रैः ब्राह्ममन्त्रसमन्वितम् ।
दीपहीने तु जुहुयात्सौरमाग्नेयवैष्णवौ ॥ १०२ ॥

स्तोत्रहीने तु जुहुयाद्दिग्दैवत्यं सवैष्णवम् ।
आचार्यादिषु हीनेषु बार्हस्पत्यं सवैष्णवम् ॥ १०३ ॥

जुहुयादार्षकैर्मन्त्रैर्ब्राह्ममन्त्रसमन्वितम् ।
आचार्यगरिमा　उत्सवे च प्रतिष्ठायां स्नपनादौ तथैव च ॥ १०४ ॥

गुरुरेवाचरेत्सर्वमलाभेऽन्यपदार्थिनाम् ।
यथोक्ताऽचार्यहीने तु नारभेतोत्सवं हरेः ॥ १०५ ॥

आचिनोऽति हि शास्त्रार्थमाचारे स्थापयत्यपि ।
तस्मादाचार्य इत्युक्तस्सर्वकार्योपदेशकः ॥ १०६ ॥

हीने परिजने हुत्वा विष्णुसूक्तं सवैष्णवम् ।
विष्णोस्सूक्तेन जुहुयाद्धीने धामप्रदक्षिणे ॥ १०७ ॥

स्नापनहीने　( स्नानहीने तु देवस्य तोयमन्त्रं सवैष्णवम् ।
वारुणं जुहुयाद्देवं पूर्ववत्स्नापयेत्पुनः ॥ १०८ ॥

उत्सवे स्पर्शदोषाभावः　विष्णोरुत्सवसेवार्थमागतास्तत्र ये जनाः ।
ते तु विप्रसमास्सर्वे प्रतिलोमादयोऽपि च ॥ १०९ ॥

---

1. रौद्रं ब्राह्मं. ख.　2. श्वेतच्छत्रविहीने तु सौम्यवैष्णववारुणान्. आ.

तस्मादस्पृश्यसंस्पर्शो न दोषाय प्रकल्पते ।
उत्सवे देवदेवस्य यस्स्नाति स्पर्शहेतुना ॥ ११० ॥

स्वर्गस्थाः पितरस्तस्य पतन्ति नरके ध्रुवम् ।
उत्सवान्तोपचारहीने उत्सवान्तेऽर्चनाहीने तथा हीने हविष्यपि ॥ १११ ॥

हुत्वा तं वैष्णवं मन्त्रं द्विगुणञ्च समर्चयेत् ।
द्विगुणञ्च हविर्दद्यात् 'क्षमस्वे' ति प्रणम्य च ॥ ११२ ॥

प्रायश्चित्तावसाने तु पूर्ववच्छेषमाचरेत् ।
उत्सवे कालातिक्रमे कालातीते तु जुहुयाच्छतं ब्राह्मञ्च वैष्णवम् ॥ ११३ ॥

मिन्दाहुती च विच्छिन्नं विष्णुसूक्तं यजेत्तथा ।
अभिमतकालः- प्रातरुत्सवमारब्धं मध्याह्ने तु समाप्यताम् ॥ ११४ ॥

सायं सायार्चनादूर्ध्वं यामादर्वाक् समाप्यताम् ।
आसायं कर्मणः प्रातराप्रातस्सायमेव वा ॥ ११५ ॥

गौणे न्यूने तु गौणन्तु प्रायश्चित्तं समाचरेत् ।
[1]मुख्ये न्यूने तथा मुख्यमिति पूर्वजशासनम् ॥ ११६ ॥

अन्नबलौ पतिते प्रतितेऽन्नबलौ वाऽपि तथाऽभ्यर्च्य बलौ पुनः ।
सम्यगभ्यर्च्य देवेशं हविश्चैव निवेद्य च ॥ ११७ ॥

बलिरक्षकमभ्यर्च्य होमञ्च जुहुयाद्द्वयोः ।
विधिना बलिमाराध्य पुनरन्यं समुद्धरेत् ॥ ११७ ॥

पतिते बिम्बे भूमौ निपतिते बिम्बे शीघ्रमुध्दृत्य तत्पुनः ।
संस्नाप्य शुद्धतोयेन नमस्कृत्य समर्च्य च ॥ ११९ ॥

संस्तूय विष्णुसूक्तेन सूक्तैनैकाक्षरादिना ।
चतुर्विंशतिभिर्देवं कलशैरभिषिच्य च ॥ १२० ॥

---

1 कुण्डलितं ख कोश एव.

समभ्यर्च्य निवेद्यैव वैष्णवं जुहुयाच्छतम् ।
विष्णोर्नुकादिभिः स्तुत्वा क्रमादुत्सवमाचरेत् ॥ १२१ ॥

भूमौ निपतिते बिम्बे वीशशान्तानपायिनाम् ।
संस्नाप्य तत्तन्मन्त्रैश्च तत्तन्मूर्तिभिरेव वा ॥ १२२ ॥

वैष्णवैर्विष्णुसूक्तेन कृत्वा तद्दोषशान्तये ।
अर्चयेत्तञ्च देवेशमुत्सवञ्च समाचरेत् ) ॥ १२३ ॥

पीठे वियोजिते

यानान्निपतिते बिम्बे पीठे बिम्बाद्वियोजिते ।
भिन्नं पीठं प्रभां छत्रमायुधाभरणादिकम् ॥ १२४ ॥

आलक्ष्य तद्बिम्बगतां शक्तिं कुम्भे निवेश्य च ।
भिन्नान् च्युतांश्च संयोज्य बिम्बशुद्धिं समाचरेत् ॥ १२५ ॥

वास्तुहोमञ्च हुत्वा तु स्नपनञ्च समाचरेत् ।
महाशान्तिञ्च हुत्वा तु प्रतिष्ठां पुनराचरेत् ॥ १२६ ॥

( समभ्यर्च्य निवेद्यैव पुनरुत्सवमाचरेत् )

पतनादङ्गहीने

पतनादङ्गहीने चेध्द्रुवे शक्तिं निवेश्य च ॥ १२७ ॥

जीर्णबेरपरित्यागविधिं कृत्वा [1]विसृज्य च ।
पुनर्बिम्बञ्च कृत्वा तु प्रतिष्ठाप्य यथाविधि ॥ १२८ ॥

उत्सवं पुनरारभ्य कारयेदिति शासनम् ।
अथोत्सवस्य शेषन्तु कौतुकेनार्चयाऽथवा ॥ १२९ ॥

आचरेदुत्सवं बिम्बं कारयेदिति केचन ।
चक्रवीशामितादीनामेवमेव समाचरेत् ॥ १३० ॥

सहस्रकृत्वो जुहुया[2]दुक्तमन्त्रैश्च मूर्तिभिः ।

यानानां पतने

[3]यानानां पतने चैव गारुडं होममाचरेत् ॥ १३१ ॥

---

1. विचक्षणः आ. 2. तत्तन्मन्त्रैश्च मूर्तिभिः. आ. 3. रङ्गादि ख. रथादीनां पतने. ई.

रथरङ्गादिपतने ब्राह्मं वैष्णवसंयुतम् ।
हुत्वा तु कारयेत्तानि पूर्ववद्विधिकोविदः ॥ १३२ ॥

गायकादीनां पतनादौ
गातुर्नर्तुश्च पतने श्रीदेव्या होममाचरेत् ।
ऋत्विगाचार्यसंक्षोभे [1]भर्त्सने शपने तथा ॥ १३३ ॥

केनचिद्धनने तेषां चतुर्दशभिरार्षकैः ।
षड्भिश्च वैष्णवैर्हुत्वा पुनः कर्म प्रवर्तयेत् ॥ १३४ ॥

दीपपात्रादीनां पतनादौ
( दीपानां पतने चैव आग्नेयं वैष्णवं यजेत् ।
बार्हस्पत्यैश्चतुर्भिश्च धूपादिपतने यजेत )॥ १३५ ॥

पतने चामरादीनां दहने येन केनचित् ।
तद्धारकाणां पतने व्यजनानां तथैव च ॥ १३६ ॥

मायासंह्लादिनी चैव किष्किन्धं सुन्दरं तथा ।
अभ्यर्च्य वायुदैवत्यं वैष्णवं होममाचरेत् ॥ १३७ ॥

ध्वजस्याग्निस्पर्शादौ
ध्वजपातेऽग्निदाहे च [2]यजेद्ध्वाजञ्च वैष्णवम् ।
कलहे ब्राह्मणादीनां भक्तनां ब्राह्मवैष्णवौ ॥ १३८ ॥

वादित्रवादकादीनां पतने नन्दीशमर्चयेत् ।
ब्राह्मञ्च वैष्णवं सौरं हुत्वा कर्म समारभेत ॥ १३९ ॥

कलहे पदार्थिनाम्
कलहे [3]रुधिरस्रावे चान्योत्पातान्मृते जने ।
तत्सर्वञ्चैव संशोध्य वास्तुहोमावसानके ॥ १४० ॥

जुहुयाद्विष्णुसूक्तञ्च वैष्णवं पौरुषं क्रमात् ।
परिषद्गणमन्त्रैश्च देवदेवमनुस्मरन् ॥ १४१ ॥

---

1. पतने व्याधितेऽपि वा । बार्हस्पत्यं चतुर्भिश्च ध्रुवानां पतने भवेत् ।(?) कुण्डलितः ख कोश एव. 2. ध्वजमन्त्रं सवैष्णवं. ई. 3. ब्राह्मणादीनां भक्तानां ब्राह्मवैष्णवौ । वादित्रवादकादीनां पाते नन्दीशमर्चयेत् । ब्राह्मञ्च वैष्णवं सौरं हुत्वा कर्म समाचरेत् । कलहे रुधिरस्रावे वह्निना दाहिते जने । तत्सर्वं ' मित्यादि. ख.

देवानामुत्सवाङ्गानां मन्त्रैरपि च हूयते ।
कौतुकबन्धनहीने पूर्वरात्रे च तीर्थार्थं बध्नीयात्कौतुकं तथा ॥ १४२ ॥

प्रमादात्तु न बध्नीयात्प्रातः प्रतिसरं तथा ।
वारुणं वैष्णवं मन्त्रं हुत्वा तद्दिनदैवतम् ॥ १४३ ॥

कृत्वा प्रतिसराबन्धं कारयेत्तु पुनस्तथा ।
शयने हीने शयने तत्र हीने तु देव्योर्होमं समाचरेत् ॥ १४४ ॥

उत्सवश्चोत्सवाभावे कौतुके [1]कारयेद्यदि ।
प्रातस्सन्ध्यार्चनान्ते तु सद्यः कौतुकबन्धनम् ॥ १४५ ॥

कृत्वोत्सवञ्च तीर्थञ्च सद्य एव समाचरेत् ।
विषुवादौ विशेषः विषुवे चायने चापि ग्रहणे सोमसूर्ययोः ॥ १४६ ॥

करोत्यवभृथं चेत्तत्सद्यः कौतुकबन्धनम् ।
कृत्वोत्सवञ्च तीर्थञ्च [2]तत्काले सम्यगाचरेत् ॥ १४७ ॥

अतीते तीर्थकाले तु [3](वारुणं स्कन्ददैवतम् ।
विष्णुसूक्तं ततो हुत्वा तीर्थस्नानं समाचरेत् ॥ १४८ ॥

मध्याह्ने तीर्थकालः स्यात्) पूर्वाह्ने वा गुणान्विते ।
[4]तीर्थान्तस्नपने हीने दिग्दैवत्यं सवैष्णवम् ॥ १४९ ॥

विष्णुसूक्तञ्च हुत्वा तु पुनः स्नपनमाचरेत् ।
महाहविषि हीने च विष्णुसूक्तेन वैष्णवैः ॥ १५० ॥

सूक्तेन वैष्णवेनाऽपि प्राजापत्येन हूयते ।
पुनरभ्यर्च्य देवेशं निवेद्यैव महाहविः ॥ १५१ ॥

संस्तूय विष्णुसूक्तेन पौरुषेण च वैष्णवैः ।
"क्षमस्वे" ति च तैर्मन्त्रैर्दद्यात्पुष्पाणि पादयोः ॥ १५२ ॥

---

1. कारयेद्बुधः ई. 2. तत्काले सम्यगाचरेत. म. सम्यगेव समाचरेत्. आ.
3. कुण्डलितः ई कोशेषु नास्ति. 4. तीर्थे तु.

उत्सवदीक्षाया-माशोचाभावः उत्सवार्थन्तु देवस्य प्रतिष्ठार्थमथापि वा ।
[1]कृतेऽङ्कुरार्पणे पूर्वं तत्तत्कर्मावसानतः ॥ १५३ ॥

नैवाऽशौचं गुरोर्विद्यात्सूतकं प्रेतकन्तु वा ।
[2]वृतानामृत्विजां तत्तत्कर्मारम्भात्परं न हि ॥ १५४ ॥

तत्तत्कर्मावसानान्तमिति पूर्वजशासनम् ।
जात्युक्ताशौचभाजः स्युः क्षत्रियाद्याश्च सर्वशः ॥ १५५ ॥

मन्त्रवद्वरणं तेषां नास्ति दीक्षा च नान्यतः ।
शूद्राणामपि भक्तानां क्षत्रियाणां विशामपि ॥ १५६ ॥

देवकार्याभियुक्तानां नास्त्येवाशौचलाघवम् ।
अवताराणामुत्सवः यदीच्छेदवताराणामर्चनं मुनिसत्तमाः ॥ १५७ ॥

पूर्वेषामेव पञ्चानामुत्सवं कल्किनस्तथा ।
चतुर्णामपि शेषाणामुत्सवं कारयेद्बुधः ॥ १५८ ॥

[3](तेषामपि च वीशाङ्कध्वजमारोपयेदिति ।
दीक्षाविशेषः उत्सवार्थन्तु देवस्य प्रतिष्ठाऽर्थमथापि वा ॥ १५९ ॥

राष्ट्रक्षोभमहोत्पातदुर्भिक्षभयपीडनैः ।
एवं प्रकारैर्विघ्नश्चेदुत्सवस्य दिनस्य वा ॥

तद्दिनेषु व्यतीतेषु राजा राष्ट्रं विनश्यति ।
तस्मात्सर्वप्रयत्नेन दिनेषूक्तेषु कारयेत् ॥

तद्दिनेष्वर्धरात्रे तु यदीच्छेदुत्सवं नृपः ।
आचार्यस्यर्त्विजाञ्चापि क्षौरकर्म विधीयते ॥

अर्धरात्रेऽपि कार्यं स्यादिति शातातपोऽब्रवीत् ) ।
देवकार्ये न दोषस्स्यादिति पूर्वजशासनम् ॥

---

1. अङ्कुरार्पणमारभ्य. ई. 2. वरणे. ई. 3. कुण्डलितः ई कोशेषु न दृश्यते.

देवोत्सवस्य मध्ये तु तत्तीर्थादूर्ध्वमेव वा ।
देव्युत्सवे विशेषः देव्युत्सवं विधानेन सम्यगेव समाचरेत् ॥ १६० ॥

[1]पूर्वं देवेशमभ्यर्च्य पश्चाद्देव्यौ समर्चयेत् ।
तेषां पृथक्पृथक्कुर्यादङ्कुरार्पणमुत्सवे ॥ १६१ ॥

पूर्वरात्रौ तु देवेशं समभ्यर्च्य विशेषतः ।
सुवर्णादिमये पात्रे तण्डुलोपरि कौतुकम् ॥ १६२ ॥

न्यस्यालङ्कारसंयुक्तं ग्राममालयमेव वा ।
शिरसैव वहन्सम्यक्कारयित्वा प्रदक्षिणम् ॥ १६३ ॥

सन्न्यस्य देवाभिमुखे पुण्याहान्तेऽभिमृश्य च ।
बद्ध्वा प्रतिसरं पश्चाच्छयने शाययेत्तथा ॥ १६४ ॥

प्रातर्देवं समभ्यर्च्य संस्थाप्याऽस्थानमण्डपे ।
स्नापयित्वा समभ्यर्च्य प्रभूतञ्च निवेद्य च ॥ १६५ ॥

अलङ्कृत्य च वस्त्राद्यैः भूषणैर्विविधैरपि ।
अन्यमुत्सवकालोक्तमुत्सवं सम्यगाचरेत् ॥ १६६ ॥

पुनश्च स्नापयित्वा तु समभ्यर्च्य निवेदयेत् ।
अनन्तरदिने तस्मादलङ्कारप्रभामपि ॥ १६७ ॥

योजयित्वोत्सवं कृत्वा स्नापयित्वा तु पूर्ववत् ।
समभ्यर्च्य [2]निवेद्यैव जीवस्थाने तु सन्न्यसेत् ॥ १६८ ॥

अवतारक्रमात्तेषां चतुर्णामुत्सवं[3] चरेत् ।
यत्रालयेऽवताराणां क्रियते नित्यमर्चनम् ॥ १६९ ॥

अवतारक्रमात्तत्र कुर्या[4]दुत्सवमत्वरः ।
तदवस्था[5]क्रमादेवमर्चयेद्बहुविग्रहैः ॥ १७० ॥

---

1. 'पूर्वं देव्यौ समभ्यर्च्य पश्चाद्देवेशमर्चये' दिति अस्य श्लोकार्धस्य स्थाने दृश्यते. **ई.**
2. तु तं देवं. **ई.** 3. परम् . **ई.** 4. अर्चनं. **ख.** 5. क्रमादेकं. **ख.**

उत्सवं लौकिकानाञ्च कर्तुं भक्त्या यदीच्छति ।
एवमेवाचरेत्सर्वमङ्कुरार्पणकादिकम् ॥ १७१ ॥

लौकिकेष्ववतारेषु क्रियमाणेऽपि चोत्सवे ।
नित्यञ्चैवौत्सवे बिम्बे सायं प्रातस्समाचरेत् ॥ १७२ ॥

अन्यदेवोत्सवनिषेधः

उत्सवे क्रियमाणे तु देवदेवस्य शार्ङ्गिणः ।
तस्मिन् ग्रामेऽन्यदेवानां न कुर्यादुत्सवं पुनः ॥ १७३ ॥

अन्यवास्तुगतानाञ्च न दोषश्चोत्सवे[1] भवेत् ।
अरोपिते ध्वजे विष्णोरुत्सवार्थन्तु तत्र वै ॥ १७४ ॥

अर्वाक्तदवसानात्तु प्रतिष्ठां नाचरेद्बुधः ।
तदालयोत्सवाङ्गांश्च स्थापयेदिति केचन (?) ॥ १७५ ॥

ग्रामे उत्सवान्तरनिषेधः

उत्सवे च प्रतिष्ठायां विष्णोरमिततेजसः ।
ग्रामे तत्र मनुष्याणामुत्सवं [2]न समाचरेत् ॥ १७६ ॥

अन्यदेवोत्सवे विष्णोरुत्सवो नैव दोषदः ।
तस्याग्नेयोत्सवेनैव(?) [3]दूषितस्सौम्य उत्सवः ॥ १७७ ॥

ग्रामवासिनामन्यत्रगमननिषेधः

आरोपिते ध्वजे विष्णोरुत्सवार्थं विशेषतः ।
उत्सवावभृथात्पूर्वं सर्वे तद्ग्रामवासिनः ॥ १७८ ॥

अन्यत्र यदि गच्छन्ति भवन्ति व्याधयो ध्रुवम् ।
[4]भवन्ति नैव तद्ग्रामवास्तुबाह्ये निवासिनाम् ॥ १७९ ॥

[5](स्वप्रधानं यदि भवेदुत्सवस्य विधिक्रमे ।
विशेषमत्र वक्ष्यामि शृणुध्वं मुनिसत्तमाः ॥ १८० ॥

यागशालामलङ्कुर्यान्मध्ये वेदिञ्च कारयेत् ।
एकं कुम्भञ्च सन्न्यस्य तत्पूर्वे गरुडं तथा ॥ १८१ ॥

---

1. उत्सवः ई. 2. न च कारयेत्. ख. 3. दोषदः. ई. 4. तद्ग्रामे वास्तुबाह्ये तु वासिनां नैव दोषदः. ई. 5. कुण्डलितः ख कोश एव.

दक्षिणे वाहनञ्चापि (?) पश्चिमे चक्रमेव च ।
उत्तरे विष्वक्सेनञ्च कल्पयित्वा विधानतः ॥ १८२ ॥

कुम्भे तथैव देव्यौ च समावाह्य समर्च्य च ।
परिवारपीठे तद्देवान् समभ्यर्चेद्यथाविधि ॥ १८३ ॥

एवमेव विधानेन सायं प्रातर्दिने दिने ।
कुम्भवेद्यान्तु तत् प्राच्यां तत्तदग्निं प्रकल्पयेत् ॥ १८४ ॥

एष एव विशेषः स्यादन्यत्सर्वं खिलोक्तवत् ) ।

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे

महोत्सवप्रायश्चित्तविधिर्नाम षड्विंशोऽध्यायः

# सप्तविंशोऽध्यायः

अस्पृश्यप्रवेश-प्रायश्चितम्

अतः परं प्रवक्ष्यामि प्रायश्चित्तं तपोधनाः ।
चण्डालसूतिकोदक्यापतितप्रतिलोमजैः ॥ १ ॥

गर्भालये प्रविष्टे तैः स्पृष्टे बिम्बे तथैव च ।
सप्तरात्रं महाशान्तिमब्जाग्नौ जुहुयात्ततः ॥ २ ॥

जलाधिवासनं कृत्वा जङ्गमानां तथैव च ।
[1]ध्रुवशुद्धिञ्च कृत्वा तु प्रतिष्ठां पुनराचरेत् ॥ ३ ॥

शूद्रैर्वाऽथानुलोमैर्वा स्पृष्टे बिम्बे तथैव च ।
शताष्टकलशैस्स्नाप्य प्रतिष्ठां पुनराचरेत् ॥ ४ ॥

श्वकुक्कुटवराहाणां सृगालानां प्रवेशने ।
स्पर्शने च तथा तेषां शान्तिहोमं जुहोति च ॥ ५ ॥

पुनःप्रतिष्ठामार्गेण प्रतिष्ठां पुनराचरेत् ।
चण्डालादिप्रवेशे तु प्रथमावरणे यदि ॥ ६ ॥

वास्तुहोमं तथा हुत्वा शान्तिहोमं जुहोति च ।
अष्टोत्तरशतैर्देवं कलशैः स्नापयेत्तथा ॥ ७ ॥

द्वितीयावरणे चैव स्नपनं स्याच्छताष्टभिः ।
शान्तिं हुत्वा तृतीये तु चतुर्विंशतिभिस्तथा ॥ ८ ॥

स्नापयित्वा तु कलशैः [2]समभ्यर्च्य निवेदयेत् ।
चतुर्थावरणे चेत्तु वैष्णवं त्वेकविंशतिम् ॥ ९ ॥

हुत्वा तु सप्तकलशैस्स्नापयित्वा समर्चयेत् ।
पञ्चमावरणे चेत्तु दशकृत्वस्तु वैष्णवम् ॥ १० ॥

---

1. ध्रुवस्य वर्जयित्वा तु. ख. 2. विशेषेण. ख.

हुत्वा तु पञ्चकलशैस्स्नापयित्वा समर्चयेत् ।
तत्तत्प्राकारपरिषद्दैवत्यं विंशतिं यजेत् ॥ ११ ॥

षष्ठावरण एवापि कलशैरेव सप्तभिः ।
स्नापयित्वा तु विधिवत्पुण्याहमपि वाचयेत् ॥ १२ ॥

सप्तमावरणे चेत्तु सर्वसञ्चार इष्यते ।
वीथ्यामेषां प्रवेशे तु न दोषो भृगुरब्रवीत् (?) ॥ १३ ॥

परिवारालयान्तश्चेत्तेषां स्नपनमाचरेत् ।
बहिश्चेच्छतकृत्वस्तु तत्तन्मन्त्रं सवैष्णवम् ॥ १४ ॥

हुत्वा तु सप्तकलशैस्स्नापयेदिति शासनम् ।
पर्यग्निपञ्चगव्याभ्यां शुद्धिस्सर्वत्र कीर्तिता ॥ १५ ॥

देवालयसमीपे तु प्रतिलोमनिवेशने ।
अर्चयेद्देवदेवन्तं मोहादपि न जातुचित् ॥ १६ ॥

तत्प्राकारानुषक्तश्चेन्महादोषो भवेत्ततः ।
राष्ट्रस्य यजमानस्य ग्रामस्य च महद्भयम् ॥ १७ ॥

अपनीय तु तच्छीघ्रं सप्तरात्रं यथाविधि ।
महाशान्तिञ्च हुत्वा तु प्रतिष्ठां पुनराचरेत् ॥ १८ ॥

शतदण्डान्तरे चैव प्रतिलोमनिवेशनम् ।
चण्डालपुल्कसानाञ्च क्रोशादूर्ध्वं प्रकल्पयेत् ॥ १९ ॥

मृतिप्रायश्चित्तम्

गर्भालये तु मरणे प्रायश्चित्तं प्रवक्ष्यते ।
चण्डालादिप्रवेशे तु यदुक्तं तत्समाचरेत् ॥ २० ॥

प्रथमावरणे चेत्तु तत्तथैव समीरितम् ।
शालानुषक्तशालासु बहिर्मरणसम्भवे ॥ २१ ॥

तथैव मरणे चैव महाशान्तिं सकृद्यजेत् ।
संस्नाप्य कलशैर्देवं समभ्यर्च्य निवेदयेत् ॥ २२ ॥

गृहीत्वाऽऽघावमज्ञानादन्तःस्थशवकूपके ।
अर्चयेद्यदि तत्पक्वं हविश्चापि निवेदयेत् ॥ २३ ॥

वैष्णवञ्च शतं हुत्वा ‘ यद्देवादि ’ समन्वितम् ।
स्नापयित्वा तु कलशैस्समभ्यर्च्य निवेदयेम् ॥ २४ ॥

अन्यथा चेन्महादोष इति पूर्वजदर्शनम् ।
मण्डपादीनां अग्निदाहे
मण्डपे गोपुरे चैव प्रपायाञ्च तथैव च ॥ २५ ॥

अग्निदाहे महाशान्तिं हुत्वा संस्नापयेद्धरिम् ।
वस्त्रादीनां दाहे
गर्भालयेऽग्निदाहे तु वस्त्रे माल्ये च भूषणे ॥ २६ ॥

बिम्बे अग्निस्पृष्टे
देवबिम्बेऽग्निसंस्पर्शे तच्छीघ्रं व्यपनीय च ।
सप्तरात्रं महाशान्तिं गन्धोदैः स्नपनं चरेत् ॥ २७ ॥

प्रतिष्ठाञ्च पुनः कृत्वा समभ्यर्च्य निवेदयेत् ।
अग्निना बेरनाशे
बेरनाशेऽग्निदाहेन तद्बेरमपनीय च ॥ २८ ॥

मासमेकं महाशान्तिं हुत्वा गर्भालये पुनः ।
पर्यग्निपञ्चगव्याभ्यां शुद्धिं कृत्वोपलिप्य च ॥ २९ ॥

बिम्बमन्यत्समादाय प्रतिष्ठामाचरेत्पुनः ।
दारवं मृण्मयं बेरं धूमाक्रान्तं परित्यजेत् ॥ ३० ॥

ज्वालाक्रान्तं तथा शैलं सन्त्यजेत्पेशलं यदि ।
भिन्ने घटे घटाकाशं यथाऽऽकाशे प्रलीयते ॥ ३१ ॥

बेरनाशे तथा शक्तिर्विश्वं व्याप्यैव तिष्ठति ।
ग्रहस्थानं कल्पयित्वा पञ्चाग्नौ च तथाऽऽलये ॥ ३२ ॥

महाशान्तिञ्च पञ्चाग्नौ हुत्वा तत्राष्टदिक्षु च ।
तत्तद्ग्रहाग्निकुण्डेषु ग्रहशान्तिं जुहोति च ॥ ३३ ॥

तत्तद्दैवत्यमन्त्रैश्च मध्याग्नौ पाञ्चभौतिकम् ।
हुत्वा बिम्बं समासाद्य ‘ नमो ब्रह्मण ’ ईर्य च ॥ ३४ ॥

शय्यावेद्यास्तु पूर्वस्यामेकं वै सभ्यमेव वा ।
कल्पयित्वा तु पूर्वेद्युः सायं सन्ध्यामुपास्य च ॥ ५७ ॥

बालालयस्योत्तरतो वास्तुहोमं तदा यजेत् ।
पर्यग्निपञ्चगव्याभ्यां बालागारञ्च शोधयेत् ॥ ५८ ॥

यागशालाञ्च सर्वत्र पुण्याहं वाचयेत्पुनः ।
रात्रिपूजावसाने तु देवदेवं समर्च्य च ॥ ५९ ॥

हविर्निवेद्य विधिना 'क्षमस्वे' ति प्रणम्य च ।
बालालयस्थापना-क्रमः
ततः प्रणीय नित्याग्निं कुण्डेष्वाघारमाचरेत् ॥ ६० ॥

[1](अलाभे मथितं वाऽपि लौकिकं सम्प्रकल्पयेत् ।
श्रोत्रियागारतो वाऽपि कुण्डेष्वाघारमाचरेत् ॥ )

संसाध्य पूर्ववत्कुम्भं [2]देवाग्रे तु यमान्तरे ।
धान्यपीठे सुसन्न्यस्य प्रार्थयित्वा तु पूर्ववत् ॥ ६१ ॥

देवं कुम्भे समावाह्य ध्रुवबेराद्यथाविधि ।
गर्भालयगतान् देवान् द्वारेशान् द्वारपालकान् ॥ ६२ ॥

सोपानसंस्थितान् देवांस्तत्कुम्भाम्भसि संस्मरेत् ।
विमानञ्चैव जीर्णञ्चेन्न्यक्षादींश्चतुरस्तथा ॥ ६३ ॥

[3]पीठेऽर्च्यमानपरिषद्देवानिति च केचन ।
कुम्भं बिम्बं समादाय स्नानश्वभ्रे निवेश्य च ॥ ६४ ॥

संस्नाप्य सप्तकलशैर्बद्ध्वा प्रतिसरं तथा ।
शाययित्वा तथा हौत्रं दक्षिणाग्नौ प्रशंसति ॥ ६५ ॥

तदालयगतान् देवान् समावाह्यैव पूर्ववत् ।
आवाहनक्रमेणैव निरुप्याज्याहुतीर्यजेत् ॥ ६६ ॥

1. कुण्डलितः ख कोश एव. 2. पूर्ववत् स्थापयेत्क्रमात् । ई. 3. पीठे विमानं. ई.

परितो यागशालान्तु परिवारान् समर्चयेत् ।
प्रतिष्ठोक्तक्रमेणैव होमकर्म समाचरेत् ॥ ६७ ॥

व्याहृत्या परिषन्मन्त्वान् दक्षिणाग्नौ जुहोति वै ।
विनैव सर्वदैवत्यं सभ्यहोमं जुहोति च ॥ ६८ ॥

नृत्तैर्गेयैश्च वाद्यैश्च रात्रिशेषं नयेत्क्रमात् ।
प्रातस्स्नात्वा विधानेन सूक्तानि च तथा जपेत् ॥ ६९ ॥

अर्चापीठं प्रकुर्वीत ब्राह्मे बालालये तथा ।
रत्नन्यासं विना पीठे चरराशौ विशेषतः ॥ ७० ॥

स्थापयित्वाऽग्रतः[1] कुम्भं धान्यपीठे सुसन्न्यसेत् ।
आवाह्य कौतुके [2]कुम्भात्तस्मादेवौत्सवार्चयोः ॥ ७१ ॥

गर्भालयगतान् देवान् द्वारेशान् द्वारपालकान् ।
तत्तत्स्थाने समावाह्य देवान् सोपानगानपि ॥ ७२ ॥

पुण्याहं वाचयित्वा तु पूजयित्वा यथाविधि ।
हवींषि पञ्चधा दत्वा नित्यं विधिवदर्चयेत् ॥ ७३ ॥

आवाहनविसर्गौ द्वौ नाचरेत्तरुणालये ।
नित्यकुण्डे प्रणीयाग्निं नित्यहोमं समाचरेत् ॥ ७४ ॥

बालालये स्नानशालादिकल्पनम्

स्नानपानीयशाले च तथैव स्नपनालयम् ।
पुष्पसञ्चयशालाञ्च द्रव्यसम्भारमण्डपम् ॥ ७५ ॥

यागशालां ध्वजस्थानं भूतपीठं महानसम् ।
पूर्ववत्कारयेद्विद्वान् प्रथमावरणे तथा ॥ ७६ ॥

द्वितीयावरणे चेत्तु भूतपीठं ध्वजं तथा ।
बालालयस्याभिमुखे कुर्यादेवं यथाविधि ॥ ७७ ॥

1. ततः. ई. 2. बिम्बे. म. कुम्भे. ई.

कारयेत्परितस्सर्वं तृतीयावरणे यदि ।
एष एव विशेषस्स्यादन्यत्सर्वं [1]खिलोक्तवत् ॥ ७८ ॥

तन्त्रसङ्कर-निष्कृतिः

अतः परं प्रवक्ष्यामि तन्त्रसङ्करनिष्कृतिम् ।
विष्णोस्तन्त्रं द्विधा प्रोक्तं सौम्यमाग्नेयमेव च ॥ ७९ ॥

वैखानसं पाञ्चरात्रं वैदिकं तान्त्रिकं क्रमात् ।
द्वयोर्वैखानसं श्रेष्ठमैहिकामुष्मिकप्रदम् ॥ ८० ॥

तान्त्रिकं पाञ्चरात्रन्तु गौणमामुष्मिकप्रदम् ।
विधिस्तु वेदमूलश्च दीक्षायुक्तश्च तान्त्रिकः ॥ ८१ ॥

पाञ्चरात्रमपि प्रोक्तं शुद्धं मिश्रमिति द्विधा ।
शुद्धं भागवतं प्रोक्तं पाञ्चरात्रमथेतरत् ॥ ८२ ॥

(तस्माद्वैखानसं श्रेष्ठं व्यासेन कथितं पुरा । )
पूजयेच्छुद्धमार्गेण सूतो वा सात्त्वतोऽथवा ।
उत्सृष्टसूत्रा विप्राद्या दीक्षिता मिश्रपूजकाः ॥ ८३ ॥

निषेकाद्याः क्रियास्तेषां तत्तत्तन्त्रेषु चोदिताः ।
याऽभवन्मिलितावस्था वेदानां व्यसनात्पुरा ॥ ८४ ॥

तान्तु वैखानसीं शाखां वदन्ति ब्रह्मपारगाः ।
तान्तु वैखानसीं शाखामादावध्यापयत्प्रभुः ॥ ८५ ॥

नाम्ना विखनसं प्राहुर्यञ्च वैखानसं तथा ।
ऋषीणां सोऽब्रवीत्सूत्रं धर्मं समनुबोधयन् ॥ ८६ ॥

ऋषयो बहुसूत्राणि चक्रुस्तस्यानुसारतः ।
केचिद्वर्णाश्रमान् धर्मान् वदन्ति स्मृतिरूपतः ॥ ८७ ॥

[2]अथाग्नौ नित्यहोमान्ते सायं प्रातरतन्द्रितः ।
विष्णोर्नित्यार्चनं कुर्यात्सर्वदेवार्चनन्तु तत् ॥ ८८ ॥

---

1. च पूर्ववत्. ई. 2 अग्निहोत्रादि ख.

इति वैखानसे सूत्रे प्रोक्तं सङ्क्षेपतोऽर्चनम् ।
[1]ऋषिभिस्तदुपन्यासो विस्तृतश्च समन्ततः ॥ ८९ ॥

बहुप्रयोगो व्याख्यातो लोकानां हितकाम्यया ।
**काश्यपेनात्रिणा चैव मया चैव मरीचिना** ॥ ९० ॥

सोऽयं तत्सूत्रमूलत्वाद्विधिर्वैखानसस्स्मृतः ।
वैखानसेन विधिना प्रतिष्ठाप्य यथाविधि ॥ ९१ ॥

अर्चने क्रियमाणे तु पाञ्चरात्रेण सङ्करे ।
ग्रामश्च यजमानश्च राजा राष्ट्रञ्च नश्यति ॥ ९२ ॥

पक्षमेकं महाशान्तिं हुत्वा तद्दोषशान्तये ।
ब्राह्मणान् भोजयित्वा तु तत्र पञ्चशतावरान् ॥ ९३ ॥

वैखानसेन विधिना प्रतिष्ठाप्यार्चयेत्पुनः ।
जनयुक्तेषु सर्वेषु ग्रामादिषु च वास्तुषु ॥ ९४ ॥

नारायणं देवदेवं पाञ्चरात्रेण नार्चयेत् ।
वैखानसेन विधिना पूजयेत्सर्वसम्पदे ॥ ९५ ॥

ग्रामबाह्ये विविक्ते वा नदीतीरे वनेऽचले ।
वैखानसेन विधिना पाञ्चरात्रेण वाऽर्चयेत् ॥ ९६ ॥

पाञ्चरात्रेण विधिना प्रतिष्ठाप्य यथाविधि ।
क्रियमाणेऽर्चने मासमेकं हीनार्चनं यदि ॥ ९७ ॥

पाञ्चरात्रे तथाऽऽग्नेये सौम्यस्यास्य प्रवेशनम् ।
यदीच्छेत्कारयेद्भक्त्या सौम्यं तच्च भविष्यति[2] ॥ ९८ ॥

---

1. एतत् स्थाने ऋषिभिश्च बहुन्यासः स्मृतिभिश्च समन्ततः, इत्यर्धं श्लोको दृश्यते- ई.

2. वैखानसेन विधिना अर्चनं यत्र वर्तते । यदीच्छेत् पाञ्चरात्रेण कर्तुमाराधनं हरेः । तद्ग्रामवासिनस्सर्वे नश्यन्ति व्याधिभिर्भृशम् । राजराष्ट्रं विनश्येत पुत्रदारविनाशनम् । तस्मात् सर्वप्रयत्नेन शीघ्रमालोच्य यत्नतः । वैखानसविधानेन प्रतिष्ठां पुनराचरेत् । इत्यधिकं दृश्यते. ई.

सप्तरात्रं महाशान्तिं पौण्डरीके जुहोति च ।
ब्राह्मणान्भोजयित्वा तु शक्तितो दक्षिणां ददेत् ॥ ९९ ॥

तत्तन्मन्त्रजपं कुर्याद्भूपरीक्षादि[1]कर्मणाम् ।
नयनोन्मीलनादीनामुक्तहोमं जुहोति च ॥ १०० ॥

जलाधिवासं कुर्वीत जङ्गमानान्तु पूर्ववत् ।
ध्रुवबेरोदितां शुद्धिं [2]ध्रुवबेरे समाचरेत् ॥ १०१ ॥

वैखानसेन विधिना प्रतिष्ठाप्य पुनः क्रमात् ।
अर्चनादीनि सर्वाणि विधिना तेन कारयेत् ॥ १०२ ॥

यदीच्छेच्छुद्धपूजायां सौम्यस्यास्य प्रवेशनम् ।
पक्षमेकं [3]महाशान्तिं हुत्वा शेषञ्च पूर्ववत् ॥ १०३ ॥

स्थापयित्वाऽर्चनादीनि कारयेदिति शासनम् ।
अविच्छिन्नार्चने चाऽपि मिश्रे ग्रामादिवास्तुषु ॥ १०४ ॥

वैखानसेन विधिना [4]प्रतिष्ठाप्यार्चयेदिति ।
क्रूरैः शैवादिविधिभिरज्ञानात्सङ्करे सति ॥ १०५ ॥

मासमेकं महाशान्तिं हुत्वा विप्रसहस्रकम् ।
भोजयित्वा तु सौम्येन प्रतिष्ठाप्य समर्चयेत् ॥ १०६ ॥

सर्वेषामन्यदेवानां तन्त्रसङ्करनिष्कृतौ ।
एष एव विधिः प्रोक्त इति पूर्वजशासनम् ॥ १०७ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
अस्पृश्यस्पर्शनतन्त्रसङ्करप्रायश्चित्तविधिर्नाम
सप्तविंशोऽध्यायः ।

---

1. कारयेत् । ई. 2. प्रोक्षयेन्मन्त्रवारिणा· ई. 3. च कुरुते. ई. 4. अर्चयेदिति केशवम्· ई.

# अष्टाविंशोऽध्यायः

पात्राणां संस्कारः पात्राणामर्चनाङ्गानां नवानां द्विजसत्तमाः ।
वक्ष्यामि शुद्धिसंस्कारं कृत्वा तं सम्यगाचरेत् ॥ १ ॥

[1]लोहानामर्घ्यपात्राणां हविः पात्रस्य चैव हि ।
तथाऽऽचमनपात्राणां पाद्यार्थानां तथैव च ॥ २ ॥

स्नानावाहनपात्राणां बलिपात्रस्य चैव हि ।
[2]नीराजनार्थपात्राणां धूपदीपार्थपात्रयोः ॥ ३ ॥

सहस्रधारापात्रस्य शङ्खपद्माङ्कपात्रयोः ।
लोहानां कलशादीनां त्रिपादानां तथैव च ॥ ४ ॥

[3]सलक्षणानि कृत्वैतान्यद्भिर्मृद्भिश्च शोधयेत् ।
वास्तुहोमं ततो हुत्वा पर्यग्निकरणं तथा ॥ ५ ॥

पञ्चगव्योक्षणं कृत्वा धान्यपीठोपरि न्यसेत् ।
तत्तद्देवांस्समावाह्य समभ्यर्च्य निवेदयेत् ॥ ६ ॥

आवाहनादिपात्राणां चतुर्णां वरुणोऽधिपः ।
शङ्खानां पूर्वमेवोक्ता अर्चनायान्तु देवताः ॥ ७ ॥

अर्घ्यपानीयपात्राणां सोम एवाधिदैवतम् ।
हविःपात्राधिपो भानुः धूपपात्रे बृहस्पतिः ॥ ८ ॥

दीपनीराजनार्थानां पात्राणां श्रीरुदाहृता ।
सहस्रधारापात्रे तु प्रकृतिः कर्णिकान्तरे ॥ ९ ॥

दलाष्टकेऽष्टैश्वर्याणि चतुर्वेदास्तु तत्र च ।
शङ्खपद्मनिधी पूज्यौ शङ्खपद्माङ्कपात्रयोः ॥ १० ॥

---

1. पञ्चानाञ्चैव. ई. 2. तथाऽचमन. ई. 3. सन्ध्यारक्षणपात्राणां. ई.

घण्टायां पूर्वमेवोक्तानधिदेवांत्समाह्वयेत् ।
पात्राणां करकादीनां [1]त्रिपादानां तथैव च ॥ ११ ॥

महाभूतानि पञ्चैव स्कन्दश्च कलशाधिपः (?) ।
इत्युक्तान् सर्वपात्राणामधिदेवांत्समर्चयेत् ॥ १२ ॥

शयनासनयानानां संस्कारः

शयनासनयानानां संस्कारञ्च वदाम्यहम् ।
शय्यां खट्वासने पीठं रथरङ्गं तथैव च ॥ १३ ॥

शिबिकाञ्चैव यानानि तानि कृत्वा यथाविधि ।
औपासनाग्निमाधाय वास्तुहोमं यजेत्ततः ॥ १४ ॥

पर्यग्निपञ्चगव्याभ्यां शोधयित्वा तु पूर्ववत् ।
धर्मं ज्ञानमथैश्वर्यं वैराग्यमिति वै पृथक् ॥ १५ ॥

शयनासनयानानां पादानामधिदेवताः ।
शयनाधिपतिश्शेषो धर्म एवाऽऽसनाधिपः ॥ १६ ॥

यानानामपि सर्वेषां गरुडस्त्वधिदेवता ।
कुम्भे तु साधिते सम्यक् ध्यात्वा वै तत्तदीश्वरान् ॥ १७ ॥

संस्नाप्य सप्तकलशैः धान्योपरि निवेश्य च ।
बद्ध्वा प्रतिसरं पादे पूर्वस्मिन्नेव दक्षिणे ॥ १८ ॥

तांस्तान् देवांत्समावाह्य हौत्रकर्मावसानके ।
आवाहनक्रमेणाऽऽज्यं निरुप्याज्याहुतीर्यजेत् ॥ १९ ॥

तत्तद्दैवत्यमन्त्रांस्तु शतमष्टोत्तरं यजेत् ।
तत्तन्मूर्तिभिरावाह्य तत्तत्प्रोक्ताधिदेवताः ॥ २० ॥

अष्टोपचारैरभ्यर्च्य देवमारोपयेत्पुनः ।
अर्चयेदासने याने कुर्याद्ग्रामप्रदक्षिणम् ॥ २१ ॥

---

1. पद्मानां कलशाधिपाः (?)

शयने शाययेद्देवं पूजयेद्वा यथाविधि ।
अन्यानि सर्वपात्राणि शोधयेच्च यथोचितम् ॥ २२ ॥

प्रच्छन्नपटस्य

सूतादिप्रतिलोमाश्च पाषण्डाः पतितास्तथा ।
नास्तिका भिन्नमर्यादास्तथा वै वेददूषकाः ॥ २३ ॥

पापरोगयुताश्चैव तथैव गुरुनिन्दकाः ।
अर्चनं देवदेवस्य हविर्दानञ्च वीक्षितुम् ॥ २४ ॥

नार्हन्ति तस्मात्कुर्वीत द्वारं यवनिकावृतम् ।
महापातकिनाञ्चापि सन्निधिं परिवर्जयेत् ॥ २५ ॥

तस्माद्द्वारसमायामं कुर्याद्यवनिकापटम् ।
द्वारं यवनिकाच्छन्नमकृत्वा पूजयेद्यदि ॥ २६ ॥

हुत्वा तद्द्वारदैवत्यं वैष्णवं व्याहृतीर्यजेत् ।
देवदेवञ्च संस्नाप्य समभ्यर्च्य निवेदयेत् ॥ २७ ॥

पूजाद्रव्याधिदेवार्चामकृत्वा पूजयेद्यदि ।
हुत्वा तद्द्वारदैवत्यं वैष्णवं व्याहृतीर्यजेत ॥ २८ ॥

[1](द्रव्याधिदेवतापूजां कृत्वा तैरेव पूजयेत् ।
उक्तकाले तु सम्पूर्णे कुर्याद्वै द्वारबन्धनम् ॥ २९ ॥

न कुर्याद्यदि मोहेन सन्ध्यान्ते द्वारबन्धनम् ।)
उद्घाटने तदाऽकाले तस्य दोषस्य शान्तये ॥ ३० ॥

वैष्णवं पौरुषं सूक्तं विष्णुसूक्तं तथैव च ।
तत्तत्सन्ध्याधिदैवत्यं हुत्वा कुर्याच्च बन्धनम् ॥ ३१ ॥

प्रातस्सन्ध्येन्द्रदैवत्या माध्याह्नी रविदैवता ।
तथा वरुणदैवत्या सायंसन्ध्या प्रकीर्तिता ॥ ३२ ॥

---

1. कुण्डलितः पाठः ख. कोश एव.

पक्वं ग्रहणवेलायां ग्रहणात्पूर्वमेव वा ।
हविर्निवेदयेन्नैव यदि मोहान्निवेदयेत् ॥ ३३ ॥

पीड्यते तु जगत्सर्वमाधिव्याध्याद्युपद्रवैः ।
वैष्णवं विष्णुसूक्तञ्च मन्त्रांश्च ग्रहदैवतान् ॥ ३४ ॥

हुत्वा संस्नाप्य देवेशं समभ्यर्च्य निवेदयेत् ।
नवीकरणे विशेषविधयः
एकबेरविमानानां पौरुषाणां विशेषतः ॥ ३५ ॥

तथैवोध्दृतबिम्बानां जीर्णानान्तु पुनः कृतौ ।
पूर्वप्रमाणादधिकं यदि कुर्यान्न दोषकृत् ॥ ३६ ॥

पादानुगुणमेवैतत्परितो वर्धयेत्तथा ।
पूर्वं मृदालयं यत्तदिष्टकादिप्रकल्पने ॥ ३७ ॥

परितो वर्धयित्वैव कारयेदालये तथा ।
प्राकाराणान्तु जीर्णानां पुनस्सन्धानकर्मणि ॥ ३८ ॥

अथवा मृण्मयानाञ्च यदि वृद्धिं तथेच्छति ।
परितो वार्धयेदेवं प्राच्युदीच्योरथापि वा ॥ ३९ ॥

यद्यग्रे ग्रामवीथी स्यात्तिसृष्वाशासु वर्धयेत् ।
सालानां मण्डपानाञ्च पार्श्वयोरग्रतस्तथा ॥ ४० ॥

वृद्धिं कुर्याद्विशेषेण प्राच्युदीच्योरथापि वा ।
उदीच्यामग्रतश्चैव वर्धयेत्पचनालयम् ॥ ४१ ॥

एकतस्सङ्कटञ्चेत्तु नदीसागरपर्वतैः ।
वर्धयेदन्यपार्श्वेषु नात्र कार्या विचारणा ॥ ४२ ॥

दक्षिणापरवृद्धिश्चेत्क्षेमस्स्यात्तु न जातुचित् ।
प्राकारमण्डपादीनां सालानां न समाहरेत ॥ ४३ ॥

मण्डपादिषु सर्वेषु हीनद्रव्यकृतेषु च ।
न्यूनं वाऽप्यधिकं वाऽपि कारयेद्देशिकोत्तमः ॥ ४४ ॥

मुख्यद्रव्यकृतं यत्तु न्यूनं वाऽप्यधिकं न च ।
कारयेच्चेत्तदज्ञानाद्यजमानो विनश्यति ॥ ४५ ॥

( तस्मात्सर्वप्रयत्नेन यथापूर्वं समाचरेत् । )
महानसोत्तरे वाऽथ कुर्यादभिमुखे तथा ॥ ४६ ॥

तटाकादिकल्पनम् देवालयस्याभिमुखे तटाकं परिकल्पयेत् ।
तटाकमानं निश्चित्य रज्जुनाऽऽयादि शोधयेत् ॥ ४७ ॥

तताहतायतेनैव कुर्यादायादिशोधनम् ।
नाहेन तिथिवारौ च कल्पयेदिति शासनम् ॥ ४८ ॥

वृत्तार्धं तेन चाहत्य कूपस्यायादिशोधनम् ।
सर्वारामोपकार्याणामग्रे वापीं प्रकल्पयेत् ॥ ४९ ॥

अथ तेषां प्रवक्ष्यामि संस्कारं मुनिसत्तमाः ।
वापीकूपतटाकानां तटमश्मेष्टकादिभिः ॥ ५० ॥

दृढमाबध्यकाष्ठासु सोपानक्रमसंयुतम् ।
दशाहे तु ततोऽतीते वास्तुहोमं ततो यजेत् ॥ ५१ ॥

पर्यग्निकरणं कृत्वा पञ्चगव्येन शोधयेत् ।
तन्तुना कुम्भमावेष्ट्य नादेयजलपूरितम् ॥ ५२ ॥

तीर्थमृत्तोयसौवर्णकूर्मयादस्समुज्ज्वलम् ।
कुशकूर्चाक्षतोपेतं पुण्यपुष्पोपशोभितम् ॥ ५३ ॥

धान्यपीठे प्रतिष्ठाप्य वस्त्रयुग्मेन वेष्ट्य च ।
'आपो हि ष्ठा' दि मन्त्राणामनुवाकद्वयं जपेत् ॥ ५४ ॥

'नमो वाचे' समुच्चार्य 'शन्नो वात' इतीर्य च ।
'आपो वा इद' मित्युक्त्वा मन्त्रैर्वेदादिभिस्तथा ॥ ५५ ॥

अभिमन्त्र्य च तत्कुम्भं तस्मिन्वरुणमर्चयेत् ।
'आपो वा इद' मित्युक्त्वा कुम्भतोयन्तु तत्पुनः ॥ ५६ ॥

वापीकूपतटाकेषु प्राङ्मुखः प्रक्षिपेद्गुरुः ।
एवं कृत्वा ततस्तोयमुपयुञ्जीत कर्मसु ॥ ५७ ॥

अन्यथा यदि कुर्यात्तु प्रायश्चित्तं विधीयते ।
महाशान्तिं सकृद्धुत्वा प्रतिष्ठां पुनराचरेत् ॥ ५८ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
पात्रसंस्कारविधिर्नाम अष्टाविंशोऽध्यायः ।

# एकोनत्रिंशोऽध्यायः



महाशान्तिविधिः

अतः परं प्रवक्ष्यामि महाशान्तिविधिं परम् ।
सर्वदोषोपशमनं सर्वव्याधिभयापहम् ॥ १ ॥

सर्वाभीष्टप्रदं श्रेष्ठं सर्वाशुभविनाशनम् ।
आयुरारोग्यदं कर्तुः शान्तिपुष्टिसुखप्रदम् ॥ २ ॥

महादोषेषु सर्वत्र महाशान्तिर्विधीयते ।
आलयाभिमुखे कुर्यात्पौण्डरीकं सलक्षणम् ॥ ३ ॥

दक्षिणस्यामथाग्नेय्यां पचनालय एव वा ।
अलङ्कृत्य चतुर्दिक्षु पूर्णकुम्भाङ्कुरध्वजैः ॥ ४ ॥

कदलीक्रमुकैश्चैव मुक्तादामावलम्बनैः ।
मासं पक्षञ्च सप्ताहं पञ्चाहं त्रिदिनन्तु वा ॥ ५ ॥

एकाहं वाऽथ सङ्कल्प्य दोषाणां गुरुलाघवम् ।
ज्ञात्वा तदनुरूपाणि दिनानि जुहुयात्क्रमात् ॥ ६ ॥

आघारान्ते सुहोतव्ये सूक्ते वैष्णवपौरुषे ।
रुद्रसूक्तं ततो हुत्वा धातादीन् जुहुयात्क्रमात् ॥ ७ ॥

'नमो वाचे' समुच्चार्य 'शन्नो वात' इतीर्य च ।
'नारायणाय विद्म' ति तथा षड्भिश्च वैष्णवैः ॥ ८ ॥

आज्येन साज्यचरुणा समिधा च घृताऽक्तया ।
सक्तुलाजतिलापूपैः घृतमिश्रैर्यथाक्रमम् ॥ ९ ॥

संस्नाप्य कलशैर्देवं समभ्यर्च्य निवेदयेत् ।
त्रिकालमुत्तमो होमो रात्रिहीनश्च मध्यमः ॥ १० ॥

सायंप्रातश्च हीनश्चेदधमः परिकीर्तितः ।
पूर्वोक्तसर्वद्रव्यैश्चाप्युत्तमे जुहुयाद्बुधः ॥ ११ ॥

आज्येन साज्यचरुणा मध्यमे जुहुयात्क्रमात् ।
अधमे केवलाज्येन प्रातर्मध्याह्न एव वा ॥ १२ ॥

उत्तमे स्नपनं नित्यं मध्यमे केवलार्चनम् ।
अधमे केवलं होम इति प्रोवाच पूर्वजः ॥ १३ ॥

रक्षेदग्निमविच्छिन्नं यावत्कर्मावसानकम् ।
अन्तहोमं समाप्तौ च कृत्वा विप्रांश्च भोजयेत् ॥ १४ ॥

अतिशान्तिः दद्यादाचार्यपूर्वेभ्यो दक्षिणां देवसन्निधौ ।
यद्देवादियुतत्वे तु अतिशान्तिरिति स्मृता ॥ १५ ॥

अद्भुतशान्तिः नवग्रहाधिदैवत्यैर्युक्ता चेदद्भुताऽह्वया ।
सामान्यशान्तिः सामान्यशान्तिरित्युक्ता युक्ता सा चेज्जयादिभिः ॥ १६ ॥

उत्पातशान्तिः द्वादशाष्टाक्षराभ्याञ्च शताहुतिरथापि वा ।
उत्पातशान्तिरित्युक्ता तथा विष्णोर्नुकादिभिः । १७ ॥

शान्तिः अथवा शान्तिरित्युक्ता केवलं वैष्णवं शतम् ।
महाशान्तिः महाशान्तिरिति प्रोक्ता यद्देवादिसमन्विता ॥ १८ ॥

इति षट्च्छान्तयः प्रोक्ताः सर्वदोषोपशोषणाः ।
अल्पदोषे यजेच्छान्तिं सर्वत्रापि च वैष्णवैः ॥ १९ ॥

मिन्दाहुती च विच्छिन्नं गायत्रीं वैष्णवीं पुनः ।
'शन्नो मित्र' इतीत्युक्ता तथा विष्णोर्नुकादिभिः ॥ २० ॥

अष्टाशीतिः [1](अष्टाशीतिं प्रवक्ष्यामि विष्णवे इति चोच्चरन्)
विष्णवे स्वस्तिदायेति तथा सर्वेश्वराय च ।
विष्णवे सर्वगोप्त्रे च तथा सर्वात्मनेऽपि च ॥

सर्वदेवात्मने चेति सर्ववेदात्मने तथा ।
मुनीनामात्मने चेति योगसन्धारणाय च ॥

---

1. अष्टाशीतिं प्रवक्ष्यामि अष्टाशीत्याहुतीर्यजेत् । इत्येव. मन्त्रप्रयोगक्रमो न दृश्यते आ. कोशेषु.

तथा सर्वप्रतिष्ठाय विष्णुशब्दादयो दश ।
विष्णुशब्देन तत्र स्यात्प्रयुक्तं सर्वमत्र तु ॥

नारायणाय च तथा तदाद्येनात्मने पुनः ।
सर्वदेवात्मने तद्वदिन्द्ररूपाय वै तथा ॥

संयमनाधिपतये सम्भोगपतये तथा ।
सर्वतृप्तिप्रदायेति [1]अनन्तात्मने च क्रमात् ॥

( ब्रह्मेशानात्मने चेति प्रजापतय इत्यपि ) ।
अनन्तशयनायेति दश नारायणादयः ॥

पुण्यनारायणायेति त्रिदशाधिपतये तथा ।
( वटपत्रशायिने ) (?) चेति तथा वटाक्षवासिने ॥

तथा पादार्चिषे चेति बालरूपाय वै पुनः ।
मायारूपिण इत्युक्त्वा प्रबोधिन इति ब्रुवन् ॥

सर्वाधिष्ठानकायेति [2]सर्वप्रवरणाय च ।
[3]मूर्धस्थानायेति दश पुण्यनारायणादयः ॥

बालाय बालरूपाय तथा वटपत्रशायिने ।
सत्याय सत्यनिष्ठाय तथा सत्यात्मने पुनः ॥

सत्यनित्याय चेत्युक्त्वा देवदेवमनुस्मरन् ।
सर्वं सत्यं हि सत्यस्य सत्ये सत्यं प्रतिष्ठितम् ॥

चतुर्थ्यन्तमनेनैव सर्वलोकप्रवर्तिने ।
तथा सत्यात्मदेवाय सत्यमोदाय वै पुनः ॥

सत्यसोपानकायेति देवदेवमनुस्मरन् ।
दश त्वं सत्ये सत्यात्मन् सत्यनिष्ठोद्भवाय च ॥

1. सर्वानन्दाय ख. 2. सर्वप्रकारकाय च ख. 3. मोक्ष ख.

पुरुषाय तथा पुरुषसंस्तुतायेति च क्रमात् ।
पुरुषसमधीतायेति पुरुषनिष्ठाय वै पुनः ॥

पुरुषात्मने वै पुरुषपुरुषायेति चोच्चरन् ।
जगन्मित्राय जगदाधाराय च ततः परम् ॥

जगत्प्रवर्तिने चेति [1]जगद्धेतवे चेत्यपि ।
चत्वारः पुरुषायेति विष्णुक्रीडात्मने पुनः ॥

भूमिसङ्क्रीडात्मन इति जगन्मोदाय वै पुनः ।
जगद्धिताय चेत्युक्त्वा तथा निखुर्यपाय च ॥

काय कस्मै कतमस्मै सर्वस्मै विष्णवे तथा ।
विष्णवे च तथा ब्रूयात् मन्त्रसन्द्रुहणाय च ॥

ध्रुवरूपिण इयुक्त्वा संवृतात्मन इत्यपि ।
सम्प्रीतिकरायेति सर्वशुभप्रदाय च ॥

अशुभनाशनायेति शुभसम्बर्हणाय च ।
पुण्यायेति ततो हुत्वा पुण्यशब्दादयोऽपरे ॥

बलोर्जिताय हुत्वा तु देवदेवमनुस्मरन् ।
तथा जयसमृद्धाय कामानन्दजननाय च ॥

सर्वानन्दाय चेत्युक्त्वा समृद्धाय ततः परम् ।
श्रीविधानाय चेत्युक्त्वा ब्रह्मसन्द्रुहणाय च ॥

वरस्थानाय चेत्युक्त्वा लोकसम्भावनाय च ।
अद्भुताय यजेत्पश्चादनादिनिधनाय च ॥

तथाऽमितमहिम्नेति तथाऽत्यन्तहिताय च ।
चतुर्थ्यन्तेन तेनैव सर्वप्रतिष्ठायेति च ॥

सर्वलोकप्रतिष्ठाय सर्वलोकशुभावहाय च ।
सर्वात्मन इति प्रोक्ता अष्टादश समीरिताः ॥

---

1. जगद्धिताय ख.

विष्णुर्नारायणश्चैव पुण्यनारायणस्तथा ।
पुण्यश्चेति चतुर्थ्यन्तान् व्यस्तानेव प्रयोजयेत् ॥

अथवा विष्णुगायत्र्या आष्टाशीत्याहुतीर्यजेत् ।
विष्णुगायत्रिया साकं यत्राष्टाशीतिरीरिता ॥

न तत्र विष्णुगायत्र्या त्वष्टाशीत्याहुतीर्यजेत् ।
अङ्गहोमः अङ्गहोमं ततो वक्ष्ये निबोधत तपोधनाः ॥

शिरसे च ततोऽक्षिभ्यां कर्णाभ्यामिति चोच्चरन् ।
नासिकाभ्यामथौष्ठाभ्यां दन्तेभ्यो जुहुयाद्बुधः ॥

जिह्वायै कण्ठायोरसे बाहुभ्यामिति च क्रमात् ।
कोष्ठाभ्याञ्चैव पाणिभ्यां नखेभ्य उदराय च ॥

कटये च तथोरुभ्यां जङ्घाभ्यामपि हूयते ।
लोमभ्यां मकुटायेति शिरश्चक्राय वै पुनः ॥

शङ्खायैव च चक्राय गदायै च ततः परम् ।
शार्ङ्गायासय इत्युक्त्वा चाम्बरायेति हूयताम् ॥

भूषणेभ्यः प्रभायै च छत्राय च जुहोति वै ।
दम्भ्यः स्वाहादिभिर्मन्त्रैर्हुत्वा तत्तदनुसरन् ॥

मौलिमालादिहोमः मौलिमालायै दिव्याय चोत्तराय ततः परम् ।
सर्वोत्तराय सर्वस्मै विष्णवे प्रभविष्णवे ॥

त्वं यज्ञपुरुषायेति प्रणवाय च विष्णवे ।
शिरसे जुहुयात्पश्चात्तथैव प्रभविष्णवे ॥

दिव्याय सुवहायेति काय कस्मै ततः परम् ।
तमेव विष्णवे चेति निखुर्यपाय चैव हि ॥

ध्रुवरूपाय चेत्युक्त्वा ललाटाय च विष्णवे ।
भ्रूभ्यामन्तरिक्षायेति सप्राणात्मभुवे तथा ॥

श्रोत्राभ्यां सञ्जुहोत्यन्ते पक्ष्मभ्यामिति चोच्चरन् ।
सञ्जुहोत्यक्ष्यङ्गेभ्यश्च अक्षिभ्यामिति हूयते ॥

तारकाभ्यामपाङ्गाभ्यां कुवलयाभ्यां तथैव च ।
युगाभ्याञ्च कपोलाभ्यां तत्तदङ्गमनुस्मरन् ॥

जुहोति नासिकायै च पुटाभ्यामिति तृण्णवे (?) ।
अण्डाभ्यामिति दन्तेभ्यः कोष्ठाभ्यामपि हूयते ॥

निम्नेभ्यश्चाधरोष्टाय जिह्वायै च ततः परम् ।
सुवक्त्रायै च जुहुयात्तालवे विष्णवे पुनः ॥

हनुभ्यां जुहुयात्पश्चात्तत्तदङ्गमनुस्मरन् ।
कर्णाभ्यां कर्णपालिभ्यां छलाभ्यां कीकसाय च ॥

ग्रीवायै कनकायेति सुप्रग्रीवाय वै तथा ।
कण्ठनालाय कण्ठाय कर्णनालाय हूयताम् ॥

द्यौः शिरसे च हुत्वा तु तथा द्यौरक्षकाय च ।
सर्वाधिष्ठानकायेति तथा प्राणाश्रयाय च ॥

केशेभ्यश्शिरसे चेति जुहुयात्पुण्यवासिने ।
आहुभ्यो दिक्प्रबन्धेभ्यस्सर्वक्षत्राणकाय च ॥

सर्वदेशशरीरेभ्यः सर्वप्राणालयाय च ।
सर्वदुःखवियोगेभ्यः ॥

चलेभ्यस्सर्वलोकानां दुःखत्राणेभ्य इत्यपि ।
कण्ठाय कण्ठनालीभ्यः कन्दाय च ततः परम् ॥

पृष्ठाग्रफलकायैव बाहुभ्योऽष्टाभ्य इत्यपि ।
कीकसेभ्यः कोर्परेभ्यः कनिष्ठाभ्यस्तथैव च ॥

सर्वेभ्यश्च नखेभ्यश्च वर्तिनीभ्य इति ब्रुवन् ।
जत्रुभ्यां तात्वदेशाय पार्श्वमूलेभ्य इत्यपि ॥

पार्श्वाभ्यामुरसे हुत्वा भल्लकाय ततः परम् ।
उरस्याय शिरस्याय बाहुमुक्ताय हूयताम् ॥

हृदयाय पुण्डरीकाय चित्ताय च ततः परम् ।
चित्तेभ्य आकूतायेति आकूतिभ्यश्च हूयताम् ॥

तर्काय तर्कवासिभ्यो मतये प्रबलाय च ।
कीकसे साक्षवासाभ्यः(?) सूर्याय विष्णुचक्षुषे ॥

वामाय सोमनेत्राय विष्णवे प्रबुधाय च ।
अतलायादितलायेति महाबीजाय महात्मने ॥

आत्मने चेति हुत्वा तु तथा सर्वात्मने बुधः ।
सर्वोदानाय लोकानां व्याप्तये तृप्तये तथा ॥

जुहोत्यप्रकृतिरूपाय समानाय यमाय च ।
सर्वस्य सामरूपाय जुहुयात्प्राणिबन्धने ॥

तत्तदङ्गमनुस्मृत्य शिरस्तस्तु जुहोति च ।
जुहोति रोमकूपेभ्यः आन्त्रायेति तथैव च ॥

आन्त्ररूपाय जुहुयादान्त्रसञ्चारणाय च ।
दिवसाय कण्ठनित्याय नित्यबन्धाय वै पुनः ॥

बन्धोद्बन्धनरूपाय स्तनाभ्यां मन्दकाय च ।
मर्मभ्यश्च प्रमर्मभ्यः पार्श्वस्थधिषणाय च ॥

सम्पत्तिभ्यः कुमारीभ्यः पुण्डरीकाय वै पुनः ।
नाभये हुल्लसायेति नासायै चेति हूयताम् ॥

आर्द्राय वर्तितायेति जुहुयात्तमनुस्मरन् ।
अनिरुद्धाय वृषते वत्सलायेति हूयताम् ॥

तथा यकृत्प्लीहाभ्याञ्च मुकुन्दाय तथैव च ।
न्यस्तायेति वरायेति चोर्वराय ततः परम् ॥

तथैवोदरबन्धाय नाडीभ्यामिति चोच्चरन् ।
वासिभ्यश्चैव वस्तुभ्यो वस्तिमुष्काय वै पुनः ॥

प्रजनाय जनितृभ्यः श्रोणीभ्यामिति वै पुनः ।
ताटिकायै च वंशाय वंशधारिभ्य एव च ॥

प्रजापतय इत्युक्त्वा विष्णवे चेति हूयताम् ।
शुक्राय शुक्रवासिभ्यः ऊरुभ्यामिति चोच्चरन् ॥

सिराभ्यश्चास्थिबन्धेभ्यो मुखेभ्यश्चेति हूयते ।
त्वगस्थिभ्यश्च हुत्वा तु जुहुयाच्च ततः परम् ॥

रूपं रूपेभ्य इत्युक्त्वा प्रसेभ्य उरसाय च ।
रक्ताय रक्तवासिभ्यो मेदसे च तथा पुनः ॥

जीवाय तास्तनश्चैव चास्थिमज्जाय (?) वै पुनः ।
जुहुयान्मज्जावासिभ्य उत्तमाङ्गाय वै पुनः ॥

धातवे चैव धातुभ्यः धातुरूपेभ्य इत्यपि ।
जुहुयादुपधातुभ्यः पार्श्वत्वच इति ब्रुवन् ॥

सर्वरूपाय ग्रीवायै धनदाय धनात्मने ।
सर्वेश्वराय यज्ञाय पुरुषायेति हूयताम् ॥

यत्राङ्गहोमो विहितस्त्वक्ष्युन्मेषादिकर्मसु ।
तत्रैवमेवं जुहुयादिति पूर्वजशासनम् ॥

सर्वस्य साम्यरूपाय स्वाहेत्यादि विवर्जितः ।
मध्यमे मौलिमालायै स्वाहादिरहितोऽधमः ॥

अष्टाशीत्यङ्गहोमान्ते स्वाहान्तैस्तु पृथक्पृथक् ।
मौलिमालादिहोमश्च वदन्त्यन्येऽन्यथा बुधाः ॥

भ्रूभ्यामिति समारभ्य जुहुयाद्दोषशान्तये ।
इत्यन्तं सर्वसामान्यप्रायश्चित्तमितीरितम् ॥

मौलिमालायै दिव्याय रत्नायाथोत्तराय च ।
सर्वोत्तराय सर्वस्मै विष्णवे प्रभविष्णवे ॥

मकुटाय च केशेभ्य उष्णीषाय तथैव च ।
मूर्ध्ने मुखललाटाभ्यां श्रोत्राभ्याञ्च भ्रुवोरपि ॥

अपाङ्गाभ्यामथाक्षिभ्यां पक्ष्मभ्यश्चाप्यनन्तरम् ।
पताकाभ्यां ज्योतिषे च ज्योतीरूपाय चेति तु ॥

गण्डाभ्याञ्च हनुभ्याञ्च नासिकाभ्यां तथैव च ।
पुटाभ्यामपि चौष्ठाभ्यां दन्तेभ्यो जुहुयात्ततः ॥

जिह्वायै च सुवक्त्राय चुबुकयाऽधराय च ।
गलाय चाथ कण्ठाय ग्रीवायै कीकसाय च ॥

जत्रुभ्यो जत्रुरूपेभ्यः अंसाभ्याञ्च तथैव च ।
दोषभ्याञ्चैव स्कन्धाभ्यां बाहुभ्यां कूर्पराय च ॥

प्रकोष्ठेभ्यस्तलेभ्यश्च अङ्गुलीभ्यस्तथैव च ।
पर्वभ्यश्च नखेभ्यश्च हृदयाय तथैव च ॥

स्तनाभ्याञ्चैव पार्श्वाभ्यामुदराय च नाभये ।
कृकाटिकायै नालीभ्यः वंशश्रोण्यै तथैव च ॥

कटिराय प्रजननाय प्रजात्यै वस्तये तथा ।
वस्तिमुष्काय सक्थिभ्यामूरुजानुभ्य एव च ॥

जङ्घाभ्याञ्चैव गुल्फेभ्यः पार्ष्णिपादेभ्य एव च ।
पादाङ्गुलिभ्यः पर्वभ्यः नखेभ्यस्सन्धिभ्यस्तथा ॥

सन्धानेभ्यस्तु रोमभ्यो रोमकूपेभ्य एव च ।
मर्मभ्यो मर्मपालिभ्यः होत्रेभ्यः सिराभ्यस्तथा ॥

त्वग्रक्तमांसमेदोऽस्थिमज्जाशुक्लेभ्य एव च ।
शुक्लरूपेभ्य इति च तेजिष्काय च तेजसे ॥

धातुभ्यो धातुरूपेभ्यः वाग्भ्यश्चैवाक्षराय च ।
नादेभ्यश्चैव मनसे बुद्ध्यै तदनन्तरम् ॥

अहङ्काराय चित्ताय स्वाहेति तदनन्तरम् ।
हृत्प्राणशब्दपूर्वन्तु पुण्डरीकमुदीर्य च ॥

वायुर्जीवश्च जीवात्मा सत्याय समुदीर्य च ।
सत्यरूपस्तथा ज्ञानं ज्ञानरूपस्तथैव च ॥

ज्ञेयविज्ञात्रनन्ताश्च आनन्दो व्यक्त एव च ।
अव्यक्तः प्राणः प्राणात्माऽपानव्यानावनन्तरम् ॥

उदानश्च समानश्च महते च महात्मने ।
आत्माऽनात्मा च विश्वस्मै विश्वात्मा पर एव च ॥

परमात्मा तथा यस्मै तस्मै कस्मै तथैव च ।
सर्वस्मै च शिरश्चक्रं चक्रशङ्खौ तथैव च ॥

पादपीठं महाङ्गेभ्यः उपाङ्गेभ्यस्तथैव च ।
प्रत्यङ्गेभ्यश्च सर्वेभ्यः पुरुषाय च व्याहृतिः ॥

सूक्तपरिभाषा विष्णोर्नुकादिषण्मन्त्रैर्विष्णुसूक्तमुदाहृतम् ।
'जातवेदस' इत्यादि सूक्तं दौर्गमुदाहृतम् ॥

'हिरण्यवर्णां हरिणी' मिति श्रीसूक्तमीरितम् ।
'भूमिर्भूम्ने' ति भूसूक्तं सर्वलोकशुभावहम् ॥

'हिरण्यगर्भ' इत्यादि ब्रह्मसूक्तमुदाहृतम् ।
'ओमासश्चर्षणी' त्यादि सूक्तं सारस्वतं मतम् ॥

'परिणो रुद्र' इत्युक्त्वा 'स्तुहि श्रुत' मिति ब्रुवन् ।
'मीढुष्टम शिवतमः - अर्हन् बिभ' र्षीति च ॥

'त्वमग्ने रुद्र' इत्युक्त्वा 'आ वो राजान' मित्यपि ।
एतैरपि च षण्मन्त्रैः रुद्रसूक्तमुदाहृतम् ॥

बलिपीठप्रतिष्ठा

बलिपीठप्रतिष्ठाञ्च प्रवक्ष्यामि समासतः ।
तस्योत्सेधं समुद्दिष्टं गर्भागारसमं तथा ॥ २१ ॥

आयतं विस्तृतं वाऽपि गर्भागारस्य मध्यमे (?) ।
उत्सेधे दशभागे तु सप्तांशं समुदाहृतम् ॥ २२ ॥

सप्तविंशतिभागे तु विभक्ते तु समुच्छ्रये ।
द्व्यंशकं पादुकं ज्ञेयं जगती चतुरंशकम् ॥ २३ ॥

त्र्यंशकं कुमुदं ज्ञेयमेकांशं पट्टिका भवेत् ।
षड्भागं कण्ठमित्याहुः द्व्यंशकं बलकम्पयोः (?) ॥ २४ ॥

चतुरंशैकपादञ्च अंशे चैवाग्रवर्तिका ।
द्व्यंशार्धं पद्मपुष्पन्तु एकार्धं पद्मपुष्पकम् ॥ २५ ॥

एवं सम्यग्विदित्वा तु भागे भागे विनिर्दिशेत् ।
त्र्यंशं हस्तप्रमाणेन त्रिहस्तादधिकञ्च वा ॥ २६ ॥

पञ्चहस्ताधिकं वाऽपि गोपुरात्प्राग्विधीयते ।
मध्ये भूतन्तु कर्तव्यं चतुस्तालप्रमाणतः ॥ २७ ॥

सुखासनमिदं श्रेष्ठं परावृत्तन्तु कारयेत् ।
यदीच्छेत्स्वामिनं प्रेक्ष्य ग्रामनाशो भविष्यति ॥ २८ ॥

अथवा कारयेद्विद्वान् कारणांशे तु मध्यमे ।
यथान्यायं चतुर्दिक्षु तत्तत् दिक्षु समीक्ष्य वै ॥ २९ ॥

इत्येवं विधिना कृत्वा प्रतिष्ठां कारयेत्तु वै ।
प्रथमावरणादीनां मुखायामं यथाक्रमम् ॥ ३० ॥

चतुर्थांशं विभज्यैव तृतीये प्रथमादिषु ।
चक्रशङ्खध्वजान् यूथनाथपाकोर्जुनानपि ॥ ३१ ॥

चतुर्थावरणञ्चेत्तु तद्द्वितीयतृतीययोः ।
यूथनाथाक्षहौ चैव स्थापयेदिति केचन ॥ ३२ ॥

गुणावरणमात्रञ्चेत्तृतीये प्रथमांशके ।
ध्वजं द्वितीये यूथेशमक्षहञ्च प्रकल्पयेत ॥ ३३ ॥

अन्तर्धारावसानञ्चेत्तृतीयांशे विशेषतः ।
चक्रशङ्खध्वजांश्चैव भूतेशञ्च प्रकल्पयेत् ॥ ३४ ॥

एकावरणमात्रञ्चेदग्रमण्डपपूर्वतः ।
चतुर्भागं विभज्यैव तृतीये तु प्रकल्पयेत् ॥ ३५ ॥

अथवा गोपुराद्बाह्ये मुखायामं प्रकल्प्य च ।
कल्पयेत्तत्र वा सर्वान् यूथेशं वाऽथ केवलम् ॥ ३६ ॥

वास्तुहोमं ततो हुत्वा पर्यग्निकरणं तथा ।
पञ्चगव्यैस्समभ्युक्ष्य कुर्याच्चैवाक्षिमोचनम् ॥ ३७ ॥

गवादीन् दर्शयित्वा तु पञ्चगव्यादिभिः पुनः ।
स्नापयित्वाऽधिवास्यैव तत्तन्मन्त्रैः पृथक्पृथक् ॥ ३८ ॥

औपासनाग्निं सङ्कल्प्य तस्याग्रे दक्षिणेऽपि वा ।
आघारान्ते तु विधिना कुम्भं संसाध्य पूर्ववत् ॥ ३९ ॥

संस्नाप्य सप्तकलशैः शुद्धोदैरभिषेचयेत् ।
बध्नीयात्कौतुकञ्चापि प्रदक्षिणवशाद्गले ॥ ४० ॥

हौत्रं प्रशंस्य चाऽवाह्य निरुप्याज्याहुतीर्यजेत् ।
अष्टोत्तरशतं हुत्वा तन्मन्त्रन्तु सवैष्णवम् ॥ ४१ ॥

प्रातः पीठे समावाह्य समभ्यर्च्य निवेदयेत् ।
एष एव विशेषस्स्यादन्यत्सर्वञ्च पूर्ववत् ॥ ४२ ॥

गरुडप्रतिष्ठा

अतः परं प्रवक्ष्यामि सुपर्णस्थापनं परम् ।
स्थानके मूलबेरे तु कुर्यात्स्थानकमेव वा ॥ ४३ ॥

आसने शयने चापि आसीनं स्थानकन्तु वा ।
विपरीतं यदि भवेद्राजा राष्ट्रञ्च नश्यतः ॥ ४४ ॥

त्रिषूत्तरेषु रोहिण्यां हस्ते स्वात्यां पुनर्वसौ ।
यजमानस्य जन्मर्क्षे राज्ञो नक्षत्र एव वा ॥ ४५ ॥

तस्मात्तु दिवसात्पूर्वमङ्कुरानर्पयेत्तथा ।
अङ्कुरार्पणकादूर्ध्वं द्रव्यं सम्भृत्य पूर्ववत् ॥ ४६ ॥

अक्षिमोचनमुद्दिश्य पूर्वाह्णे होममाचरेत् ।
अङ्गहोमञ्च हुत्वा तु मूर्तिहोमं तथा हुनेत् ॥ ४७ ॥

'शतधा' रेति मन्त्रेण 'कदापिसृज' तेति च ।
दशवारं ततो हुत्वा ताभ्यां कृत्वाऽक्षिमोचनम् ॥ ४८ ॥

अन्तहोमं ततो हुत्वा भास्करं सम्प्रणम्य च ।
पञ्चगव्याधिवासादीन् कुर्यात्तदपराह्णके ॥ ४९ ॥

गोमूत्रे गोमये चैव कुशोदे चाधिवासयेत् ।
अथवा कारयेद्विद्वान् पञ्चगव्यस्य कुण्डके ॥ ५० ॥

प्रतिष्ठादिवसात्पूर्वं रात्रौ होमं समाचरेत् ।
भूमियज्ञञ्च कृत्वा तु पर्यग्निञ्चैव कारयेत् ॥ ५१ ॥

शय्यावेदिं प्रकल्प्यैव पूर्वोक्तविधिना पुनः ।
वेद्या दक्षिणपार्श्वे तु दक्षिणाग्निं प्रकल्पयेत् ॥ ५२ ॥

औपासनाग्निमथवा कारयेदिति केचन ।
पुण्याहं वाचयित्वा तु भूमिशुद्धिं समाचरेत ॥ ५३ ॥

स्नानवेद्यां प्रतिष्ठाप्य कुम्भं संसाध्य पूर्ववत् ।
संस्नाप्य सप्तकलशैः प्लोतेन परिमृज्य च ॥ ५४ ॥

वस्त्रादिभिरलङ्कृत्य शय्यावेद्यां निवेश्य च ।
बद्ध्वा प्रतिसरञ्चैव शयनेषु च शाययेत् ॥ ५५ ॥

ताभ्यामेव तु मन्त्राभ्यां सर्वमेतत्समाचरेत् ।
दक्षिणाग्निं परिस्तीर्य तद्दैवत्यं सुहूयताम् ॥ ५६ ॥

होता हौत्रक्रमेणैव तन्मूर्त्याऽऽवाह्य हूयताम् ।
ततो गरुडमन्त्राभ्यामष्टोत्तरशतं यजेत् ॥ ५७ ॥

सामवेदादिमन्त्रैश्च यजेद्वैष्णवसंयुतम् ।
नृत्तैर्गेयैश्च वाद्यैश्च रात्रिशेषं नयेत्पुनः ॥ ५८ ॥

ततः प्रभाते धर्मात्मा स्नात्वा तु स्थापकैस्सह ।
मुहूर्ते समनुप्राप्ते रत्नन्यासं समाचरेत् ॥ ५९ ॥

देवं कुम्भं समादाय प्रविशेदालयं पुनः ।
श्वेतवर्णस्य पूर्वे वा कृष्णपार्श्वेऽथवा पुनः ॥ ६० ॥

प्रथमावरणे वाऽपि द्वितीयावरणेऽपि वा ।
मण्डपस्य ततो मध्ये स्थापयित्वा समन्त्रकम् ॥ ६१ ॥

आचार्यं पूजयित्वा तु सुवर्णपशुभूमिभिः ।
स्थापकान् पूजयेत्तद्वद्वस्त्राभरणकुण्डलैः ॥ ६२ ॥

एवं संस्थापयेद्वीशं श्रद्धाभक्तिसमन्वितः ।
सन्ततीनां समृद्धिः स्याद्वाहनानां तथैव च ॥ ६३ ॥

सर्वान् कामानवाप्नोति विष्णुलोकं स गच्छति ।
विष्वक्सेनप्रतिष्ठा अतः परं प्रवक्ष्यामि शान्तस्य स्थापनं परम् ॥ ६४ ॥

( बिम्बं सलक्षणं कृत्वा स्थापनं सम्यगाचरेत् ।
पूर्वोक्तमासनक्षत्रे शुक्लपक्षे शुभे दिने ) ॥ ६५ ॥

बिम्बं सलक्षणं कृत्वा कृत्वा शिल्पिविसर्जनम् ।
वास्तुहोमाङ्गहोमौ च हुत्वा मन्त्रैश्च भौतिकैः ॥ ६६ ॥

विष्वक्सेनस्य मन्त्रौ द्वौ वैष्णवं व्याहृतीर्यजेत् ।
कुर्यात्क्रमात्तु मन्त्राभ्यां दक्षिणाद्यक्षिमोचनम् ॥ ६७ ॥

पञ्चगव्याधिवासादि कल्पयेत्तदनुक्रमात् ।
तस्यालयस्याभिमुखे यागशालां प्रकल्प्य च ॥ ६८ ॥

शय्यावेदिञ्च तन्मध्ये बिम्बाध्यर्धप्रमाणतः ।
कुर्यादौपासनाग्निञ्च तत्प्राच्यामग्र एव वा ॥ ६९ ॥

दक्षिणे स्नपनश्वभ्रं कल्पयित्वा तु पूर्ववत् ।
वास्तुहोमं यजेत्कुर्यात्पर्यग्निकरणं तथा ॥ ७० ॥

पञ्चगव्योक्षणं कृत्वा सायं पूर्वेद्युरेव वा ।
अधिवासगतं देवमुद्धृत्य स्नापयेत्तदा ॥ ७१ ॥

कुम्भं संसाध्य विधिना तत्राऽवाह्य समन्त्रकम् ।
संस्नाप्य सप्तकलशैरर्चयित्वाऽष्टविग्रहैः ॥ ७२ ॥

ततः कौतुकबन्धान्ते शयने शाययेत्तदा ।
हौत्रं प्रशंस्य चाऽवाह्य निरुप्याऽज्याहुतीर्यजेत् ॥ ७३ ॥

सर्वदेवार्चनं हित्वा वेदाध्ययनमाचरेत् ।
विष्वक्सेनस्य मन्त्राभ्यां शतमष्टोत्तरं यजेत् ॥ ७४ ॥

वैष्णवं मूर्तिमन्त्रञ्च ( हुत्वा गायत्रिया तथा ।
प्रधानहोमं हुत्वा तु ) हुत्वा रात्रिं निनीय च ॥ ७५ ॥

प्रातस्संस्थाप्य चाऽवाह्य समभ्यर्च्य निवेदयेत् ।
दद्यादाचार्यपूर्वेभ्यो दक्षिणां देवसन्निधौ ॥ ७६ ॥

सर्वेषां परिवाराणां प्रतिष्ठायां विशेषतः ।
आलयाभिमुखे तेषां यागशालां प्रकल्प्य च ॥ ७७ ॥

शय्यावेदिञ्च तन्मध्ये तस्याग्रेऽग्निञ्च कल्पयेत् ।
एष एव क्रमः प्रोक्तो मन्त्र एव विशिष्यते ॥ ७८ ॥

अष्टोत्तरशतं हुत्वा तत्तन्मन्त्रं सवैष्णवम् ।
प्रतिष्ठाप्य समावाह्य नित्यं विधिवदर्चयेत् ॥ ७९ ॥

अनन्तप्रतिष्ठा

अनन्तं सर्वनागानामधिपं चानिरुद्धवत् ।
बिम्बं सलक्षणं कृत्वा फणासप्तकसंयुतम् ॥ ८० ॥

प्रथमावरणे वाऽपि द्वितीयावरणेऽपि वा ।
वामलूरुसमीपे वा गोपुराद्वाह्यतोऽपि वा ॥ ८१ ॥

स्थानं सङ्कल्प्य सम्भारान् सम्भृत्यैव ततः परम् ।
अङ्कुरार्पणमारभ्य प्रतिष्ठान्तोदिताः क्रियाः ॥ ८२ ॥

शेषदैवत्यमन्त्राभ्यां तत्सूक्तेनाथवा पुनः ।
संस्थाप्य सौम्यमार्गेण नित्यं विधिवदर्चयेत् ॥ ८३ ॥

अनन्तो गरुडश्चैव विष्वक्सेनः पितामहः ।
अनादिवैष्णवाः पञ्च मुनिशङ्खिना अपि ॥ ८४ ॥

सुपर्णस्य च शान्तस्याप्यनन्तस्य तथैव च ।
त्रयाणां स्थापनञ्चोक्तमद्य सङ्क्षेपतो मया ॥ ८५ ॥

विखनसः प्रतिष्ठा ब्रह्मणश्च त्रिधा प्रोक्तं स्थापनन्तु पृथङ्मया ।
गर्भालये च देवस्य पूजकत्वेन सम्मतः ॥ ८६ ॥

त्रिमूर्तिस्थापने चैव द्विमूर्तिस्थापने तथा ।
मूर्तिमन्त्रेण सम्प्रोक्तो मण्डलान्तर्गतो विधिः (?) ॥ ८७ ॥

प्राधान्येन तु सुप्रोक्तः पृथगेव प्रतिष्ठितुम् ।
अधुना सम्प्रवक्ष्यामि स्थापनं विखनोमुनेः ॥ ८८ ॥

देवस्य दक्षिणे भागे श्रियो देव्यास्समीपतः ।
शङ्खचक्रधरं सौम्यं चतुर्भुजधरं तथा ॥ ८९ ॥

त्रिदण्डधारिणं विष्णोरर्चनासक्तमानसम् ।
कूर्मपीठे प्रतिष्ठाप्य नित्यं विधिवदर्चयेत् ॥ ९० ॥

देवदेवप्रतिष्ठावत्सर्वं सम्यक्समाचरेत् ।
स्थानके मूलबेरे तु चासने शयनेऽपि वा ॥ ९१ ॥

आसीनमेव सर्वत्र तपोयुक्तं प्रकल्पयेत् ।
विपरीतं यदि भवेद्राजराष्ट्रविनाशनम् ॥ ९२ ॥

त्रिषूत्तरेषु रोहिण्यां हस्ते स्वात्यां पुनर्वसौ ।
यजमानस्य नक्षत्रे राज्ञो नक्षत्र एव वा ॥ ९३ ॥

तस्मात्तु दिवसात्पूर्वमङ्कुरानर्पयेत्तथा ।
अङ्कुरार्पणकादूर्ध्वं द्रव्यं सम्भृत्य पूर्ववत् ॥ ९४ ॥

अक्षिमोचनमुद्दिश्य पूर्वाह्णे होममाचरेत् ।
अङ्गहोमञ्च हुत्वा तु मूर्तिहोमस्सुहूयताम् ॥ ९५ ॥

'अतो देवा–इदं विष्णु' रिति हुत्वा सहस्रशः ।
कृत्वा ताभ्यामक्षिमोक्षमन्ते होमं यजेद्बुधः ॥ ९६ ॥

अधिवासत्रयं वाऽपि अधिवासचतुष्टयम् ।
पूर्वोक्तविधिना कृत्वा बलिं निर्वाप्य पूर्ववत् ॥ ९७ ॥

प्रतिष्ठादिवसात्पूर्वं रात्रौ होमञ्च कारयेत् ।
भूमियज्ञञ्च कृत्वा तु पर्यग्निमपि कारयेत् ॥ ९८ ॥

शय्यावेदिं प्रकल्प्यैव पूर्वोक्तविधिना पुनः ।
शय्यावेद्याः पूर्वभागे श्रामणाग्निं प्रकल्पयेत ॥ ९९ ॥

औपासनाग्निमथवा केचिदाहवनीयकम् ।
पुण्याहमन्त्रैस्सम्प्रोक्ष्य भूमिशुद्धिमथाचरेत् ॥ १०० ॥

स्नानवेद्यां प्रतिष्ठाप्य कुम्भं संसाध्य पूर्ववत् ।
संस्नाप्य सप्तकलशैः प्लोतेन परिमृज्य च ॥ १०१ ॥

वस्त्रादिभिरलङ्कृत्य शय्यावेद्यां निवेश्य च ।
बद्ध्वा प्रतिसरञ्चैव शयनेषु च शाययेत् ॥ १०२ ॥

पूर्वाभ्यामेवमन्त्राभ्यां सर्वमेतत् समाचरेत् ।
श्रामणाग्निं परिस्तीर्य वैष्णवञ्च सुहूयताम् ॥ १०३ ॥

होता हौत्रक्रमेणैव तन्मूर्त्याऽऽवाह्य होमयेत् ।
पूजकश्रेष्ठरूपत्वे वक्ष्यन्ते मूर्तयोऽधुना ॥ १०४ ॥

त्रिदण्डिनं तपोनिष्ठं पुण्डरीकविलोचनम् ।
हरिप्रियं समावाह्य चतुर्भिर्मूर्तिभिर्हुनेत् ॥ १०५ ॥

द्वारपालकरूपत्वे वक्ष्यन्ते मूर्तयोऽन्यथा ।
पृथक्स्थापनकाले तु देवीसहितमाचरेत् ॥ १०६ ॥

प्रलम्बसूत्रं श्रीवत्सं विनाऽन्यैर्विष्णुवच्चरेत् ।
लक्ष्मीनारायणस्येव बिम्बं तत्समुदाहृतम् ॥ १०७ ॥

तस्य पत्नी च विख्याता दिव्याख्या परमर्षिभिः ।
विष्णुप्रियसुतश्चेति विष्वक्सेनसखं तथा ॥ १०८ ॥

कल्पसूत्रकृतञ्चेति श्रामणाग्निप्रियं तथा ।
परतत्त्वप्रवक्तारं मूर्तिभिः पञ्चभिः क्रमात् ॥ १०९ ॥

पृथक्त्वेन प्रधानत्वे तस्य पत्न्याश्च मूर्तयः ।
आदिवैष्णवमन्त्राभ्यां शतमष्टोत्तरं यजेत् ॥ ११० ॥

'यो वेदादिः परम' इति यजेद्वैष्णवसंयुतम् ।
अष्टोत्तरसहस्रं वा अष्टोत्तरशतन्तु वा ॥ १११ ॥

नृत्तैर्गेयैश्च वाद्यैश्च रात्रिशेषं नयेद्गुरुः ।
अर्चकोत्तमरूपत्वे देवदेवस्य सन्निधौ ॥ ११२ ॥

द्वारपालकरूपत्वे द्वितीयद्वारदक्षिणे ।
पृथक्प्रधानरूपत्वे यमाग्न्योरन्तरे तथा ॥ ११३ ॥

शङ्खचक्रधरो वाऽपि अपि ताभ्यां विवर्जितः ।
द्वारपालकरूपत्वे स विभुः प्रोच्यते बुधैः ॥ ११४ ॥

शङ्खचक्रधरस्साक्षादितरत्र प्रकीर्तितः ।
गर्भालये वा बाह्ये वा स्थापने चोत्तरामुखः ॥११५ ॥

द्वारस्य दक्षिणे भागे स्थापयेद्देवराण्मुखम् ।
ध्रुवसूक्तेन संस्थाप्य विष्णुसूक्तेन संस्पृशेत् ॥ ११६ ॥

गोभूसुवर्णदानाद्यैः गुरुं सम्पूज्य भक्तितः ।
पूजयेत्स्थापकादींश्च वस्त्राभरणकुण्डलैः ॥ ११७ ॥

गुरूत्तमस्य यः कुर्यात्स्थापनं भक्तिसंयुतः ।
वेदानाञ्च समृद्धिस्स्यात्समृद्धिः पुण्यकर्मणाम् ॥ ११८ ॥

सर्वान्कामानवाप्यैव पुण्यलोकं स गच्छति ।
'अतो देवा—इदं विष्णु' रिति मन्त्रद्वयेन च ॥ ११९ ॥

पूजकत्वे प्रधानत्वे षोडशैरुपचारकैः ।
सम्पूज्य विधिवद्विष्णुं तन्निवेदितवस्तुभिः ॥ १२० ॥

माल्यैर्गन्धैश्च धूपैश्च दीपैश्च हविरादिभिः ।
अर्चयित्वा तु देहान्ते सायुज्यं पदमाप्नुयात् ॥ १२१ ॥

वैखानसस्य नैवेद्यं विष्णुनैवेद्यवच्चरेत् ।
द्वारपालप्रतिष्ठायां तद्दैवत्यं जुहोति च ॥ १२२ ॥

द्वारस्य दक्षिणे भागे स्थानकस्सुप्रतिष्ठितः ।
'वैखानसाय' मन्त्रश्च तद्दैवत्यः प्रकीर्तितः ॥ १२३ ॥

तिष्ठत्ययं त्रिरूपेण विष्णोराज्ञाविशेषतः ।
तत्कथा च **निरुक्ताधिकारे** प्रोक्ता सुविस्तरा ॥ १२४ ॥

समिदादीनां लक्षणम्

समिधां लक्षणं वक्ष्ये सर्वेषामपि कर्मणाम् ।
कण्टकं सुषिरं शुष्कं कृमियुक्तं पिपीलिकम् ॥ १२५ ॥

ह्रस्वं दीर्घं कृशञ्चैव स्थूलञ्चैव द्विपर्वकम् ।
हीनचर्म तथा दग्धं पुराणञ्च विवर्जयेत् ॥ १२६ ॥

वृक्षे पक्षिगणावासे चैत्यवृक्षे तथैव च ।
तथा देवालये चैव श्मशाने चोषरे तथा ॥ १२७ ॥

जीर्णालये तथा मूले सूतकाद्याशौचिसङ्गते ।
मैथुने चैव निद्रायामातुरे च विवर्जयेत् ॥ १२८ ॥

कण्टकं सुषिरञ्चैव प्रोक्तं सर्वविनाशनम् ।
शुष्के भ्रातृविनाशस्स्यात्कृमिदष्टे मतिभ्रमः ॥ १२९ ॥

पिपीलिकादौ त्वग्दोषः ह्रस्वः कुक्षिज्वरप्रदः ।
दीर्घे च मरणं विन्द्यात्कृशे क्लेशभयावहम् ॥ १३० ॥

स्थूलं दारिद्र्यदं प्रोक्तं द्विपर्व पापरोगदम् ।
त्वचश्छेदे तु दौर्भाग्यं दग्धञ्चेत्सन्निपातकम् ॥ १३१ ॥

पुराणे पुत्रनाशः स्यात् ज्ञानञ्चापि विनश्यति ।
पक्षिदेवालयोत्थञ्चेन्मातापित्रोर्विनाशनम् ॥ १३२ ॥

श्मशानजं कुलं हन्ति ऊषरे राज्यनाशनम् ।
जीर्णालयसमीपस्थं शिरोरोगं प्रयच्छति ॥ १३३ ॥

सूतक्याशौचिसंस्पृष्टे भार्यापुत्रविनाशनम् ।
मैथुने स्पृश्यते चेत्तु वृक्षे वै व्याधिपीडनम् ॥ १३४ ॥

निद्रातो निधनं याति चाऽतुरे तस्कराद्भयम् ।
एतैर्दोषैर्विमुक्तन्तु सर्वलक्षणसंयुतम् ॥ १३५ ॥

पालाशं बैल्वमथ च शमीजं खादिरन्तथा ।
अश्वत्थवटवृक्षोत्थं प्लाक्षमौदुम्बरं तथा ॥ १३६ ॥

द्वादशाङ्गुलदीर्घन्तु ततश्शान्तिकरं विदुः ।
त्रयोदशाङ्गुलञ्चैन्द्रं द्विसप्ताङ्गुलमार्षकम् ॥ १३७ ॥

पञ्चदशाङ्गुलायाममाभिचारिकमुच्यते ।
विद्वेषेऽनामिकानाहप्रमाणमिति निश्चयः ॥ १३८ ॥

तथाविधाः परिधय उक्तायामसमन्विताः ।
नदीतटाकतीरोत्थास्समिधो दोषवर्जिताः ॥ १३९ ॥

साग्रा अगर्भा दर्भाः स्युरस्थूलकृशवामनाः ।
षट्त्रिंशदङ्गुलाः कूर्चाः परिस्तरणकर्मणि ॥ १४० ॥

द्वादशाङ्गुलमायामं पवित्रं समुदाहृतम् ।
हस्तमात्रमितः प्रोक्तः कूर्चः प्रोक्षणकर्मणि ॥ १४१ ॥

ऋत्विजोरप्यभावे तु कल्पने ब्रह्मसोमयोः ।
अरत्निमात्रमायामं कूर्चं न्यस्येत्तु पार्श्वयोः ॥ १४२ ॥

सर्वेषामपि कूर्चानामग्रन्तु चतुरङ्गुलम् ।
ग्रन्थिस्तु द्व्यङ्गुला प्रोक्ता शेषं लम्बं प्रकल्पयेत् ॥ १४३ ॥

(वत्सजानुसमाकारो वेदः प्रादेशसम्मितः ।
निर्मितश्शतदर्भैश्च शोधनार्थमथाध्वरे ) ॥ १४४ ॥

द्वाभ्यामगर्भदर्भाभ्यां पवित्रं परिकल्पयेत् ।
चतुरङ्गुलं भवेदग्रं ग्रन्थिरेकाङ्गुला भवेत् ॥ १४५ ॥

[1]द्व्यङ्गुलं मूलमित्युक्तमेवं कुर्याद्यथाविधि ।
सन्न्यस्यानामिकाङ्गुल्योः सर्वकर्माणि कारयेत् ॥ १४६ ॥

अपवित्रकरः किञ्चिन्नाचरेदिति शासनम् ॥ १४६[५] ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
महाशान्तिविधानबलिपीठप्रतिष्ठादिविधिर्नाम
एकोनत्रिंशोऽध्यायः ।

---

1. त्र्यङ्गुलं रज्जुवलयमेवं कृत्वा यथाविधि. ख.

# त्रिंशोऽध्यायः

अवताराणां एकत्र कल्पनम्

दशानामवताराणां स्थापनं वक्ष्यते ततः ।
पूर्वमेव मया प्रोक्तं पृथगालयकल्पनम् ॥ १ ॥

एकगर्भगृहे स्युश्चेत्षोडशांशं विभज्य च ।
कल्पयेदनिरुद्धस्य चतुरंशांस्तु मध्यमे ॥ २ ॥

अथवा केवलं विष्णुमासीनं स्थितमेव वा ।
अंशौ द्वौ पुरतस्त्यक्त्वा द्वारार्थं मुनिसत्तमाः ॥ ३ ॥

शेषेषु दशभागेषु मत्स्याद्यंशान् प्रकल्पयेत् ।
यस्य यस्य च यो देशः कल्पितः पदकल्पने ॥ ४ ॥

अवस्थाभेदभिन्नानि तत्तद्रूपाणि तत्पदम् ।
समभागं प्रकल्प्याऽत्र स्थापयित्वा समर्चयेत् ॥ ५ ॥

प्रधानाभिमुखान् कुर्यादवतारान् यथाक्रमम् ।
खिले विस्तरशः प्रोक्तमेतेषां लक्षणं पुरा ॥ ६ ॥

ध्रुवकौतुकसंयुक्तं कुर्यात्प्रत्येकमुत्तमम् ।
संस्थाप्य कौतुकं वाऽथ केवलं विहिते पदे ॥ ७ ॥

आदिमूर्तेस्समावाह्य पूजयेदिति केचन ।
अपादनं दशांशानामनिरुद्धो यतः स्मृतः[1] ॥ ८ ॥

एतन्मध्यममुद्दिष्टमधमं केवलं ध्रुवम् ।
स्थापयित्वाऽग्रतः पीठे समावाह्य समर्चयेत् ॥ ९ ॥

आदिमूर्तिसमं वाऽथ कर्णसीमान्तमेव वा ।
अथवा बाहुसीमान्तं तद्बेराणि प्रकल्पयेत् ॥ १० ॥

---

1. अनिरुद्धादयः स्मृताः. ख.

पञ्चमूर्तिप्रतिष्ठायां पुरुषादिप्रकल्पने ।
एतदेव प्रमाणं स्यादधिकं न समाचरेत् ॥ ११ ॥

प्रमाणं पञ्चवीराणां ब्रह्मणो गरुडस्य च ।
वासुदेवसमं वाऽथ बाह्वन्तं वाऽधिकं न च ॥ १२ ॥

बिम्बं दशावताराणां केवलं कौतुकं यदि ।
आदिमूर्तिध्रुवोत्सेधं त्रिधा कृत्वा विचक्षणः ॥ १३ ॥

एकभागं व्यपोह्यैव द्विभागं चोत्तमोदयम् ।
तत्त्रिभागद्विभागोच्चं मध्यमं प्रतिमोदयम् ॥ १४ ॥

एकांशमधमं तत्तदन्तरे नवधा कृते ।
सप्तविंशतितुङ्गानि पूर्ववत्परिकल्पयेत् ॥ १५ ॥

केवलं कौतुकं स्याच्चेदर्चास्थाने प्रकल्पयेत् ।
निर्माल्यहारिणं तेषामर्चयेत्परितोऽमितम् ॥ १६ ॥

परितो वैनतेयस्य मध्यमे नवभिः पदैः ।
कल्पयेदनिरुद्धस्य वाहनानि (?) प्रकल्पयेत् ॥ १७ ॥

इत्थं बेराणि कृत्वैव प्रतिष्ठामारभेत्पुनः ।
कल्पयेद्यागशालाया उपपीठपदं क्रमात् ॥ १८ ॥

परितस्तद्बहिः पङ्क्तौ प्राच्यां दिशि पदत्रयम् ।
याम्यादिषु तथैकैकं द्वारार्थं परिकल्पयेत् ॥ १९ ॥

आग्नेयादीशपर्यन्तं मत्स्यादीनां यथाक्रमम् ।
तत्तद्दिक्षु दशांशानां प्रधानाग्नीन् प्रकल्पयेत ॥ २० ॥

श्वभ्रं शयनवेदिञ्च कल्पयित्वा यथोचितम् ।
अङ्कुरार्पणकादूर्ध्वमक्ष्युन्मेषादिकाः क्रियाः ॥ २१ ॥

विनैव सर्वदैवत्यं पारमात्मिकमेव च ।
प्रतिष्ठामुत्सवादींश्च पूर्ववत्परिकल्पयेत ॥ २२ ॥

एषां प्रधानमन्त्राश्च मूर्तिभेदास्तथैव च ।
पूर्वमेव मया प्रोक्ताः सर्वमन्यद्धरेरिव ॥ २३ ॥

आवाहनं दशांशानां आदिमूर्तेर्ध्रुवाद्यदि ।
निष्कलत्वाद् ध्रुवस्यास्य कुर्यात्कौतुकनामभिः ॥ २४ ॥

विपरीतं यदि भवेद्ध्रुवनाम्ना समर्चयेत् ।
वाराहं नारसिंहञ्च रामं कृष्णं तथैव च ॥ २५ ॥

(ध्रुवबेरवशात्कृत्वा केवलं कौतुकं तथा)
[1]दक्षिणोत्तरयोस्सम्यक् स्थापयेन्मुखमण्डपे ।
स्थापयेदन्तराले वा नृत्तमण्डप एव वा ॥ २६ ॥

तेषाञ्च स्थापने शालां वराहार्थं प्रकल्प्य च ।
दक्षिणाभिमुखीं शालां [2]वामनस्य प्रकल्पयेत् ॥ २७ ॥

तद्दक्षिणे वा पूर्वस्मिन् राघवार्थं प्रकल्पयेत् ।
कृत्वा वामे नृसिंहार्थं तद्वामे पूर्वमेव वा ॥ २८ ॥

कृष्णार्थं कल्पयेद्यागशालां प्राक्पश्चिमायताम् ।
पश्चिमे शयनं तत्र कारयित्वा तदग्रतः ॥ २९ ॥

सङ्कल्पयेत्प्रधानाग्निं स्नानश्वभ्रं तदग्रतः ।
वास्तुहोमावसाने तु कुम्भं संसाध्य पूर्ववत् ॥ ३० ॥

स्नपनं शयनारोहं हौत्रशंसनमेव च ।
सर्वञ्च पूर्ववत्कृत्वा प्रधानाग्नौ तथाऽखिलम् ॥ ३१ ॥

तत्तत्प्रधानमन्त्रैश्च शतमष्टोत्तरं यजेत् ।
प्रातस्स्नात्वा विधानेन प्रविश्य मुखमण्डपम् ॥ ३२ ॥

वराहं दक्षिणे [3]रामं मत्स्यं संस्थाप्य दक्षिणे ।
नारसिंहं तथा वामे कृष्णं तस्य च वामतः ॥ ३३ ॥

---

1. पश्चिमोत्तरयोः, ख. 2 तत्तद्दिक्षु प्रकल्प्य च ख. 3. तस्य राघवं स्थाप्य, ख.

वाराहनारसिंहौ तु स्थापयित्वाऽग्रमण्डपे ।
अन्तरालेऽथवा कृष्णरामौ संस्थाप्य पूजयेत् ॥ ३४ ॥

दक्षिणे नारसिंहं वा वाराहरहितं यदि ।
एकबेरविमानस्य गर्भगेहेऽग्रमण्डपे ॥ ३५ ॥

औत्सवं स्थापनं कर्तुं यदि स्यात्स्थानसङ्कटः ।
अग्रमण्डपबाह्ये तु प्रतिमां मण्डपे कृते ॥ ३६ ॥

औत्सवस्योक्तदेशे तु तत्र संस्थाप्य पूजयेत् ।
परप्रधानबिम्बानां पूजा षोडशविग्रहैः ॥ ३७ ॥

(एष एव विशेषः स्यादन्यत्सर्वं हरेरिव ।
अथवा मत्स्यकूर्मौ तु गर्भगेहस्य मध्यमे ॥ ३८ ॥

प्रतिष्ठाप्य वराहादीन् दिक्ष्वष्टासु प्रकल्पयेत् ।
ध्रुवञ्च कौतुकञ्चैव कुर्यादग्रे पृथक्पृथक्) ॥ ३९ ॥

(एष एव विशेषः स्यादन्यत्सर्वञ्च पूर्ववत्)

पञ्चवीराणां स्थापनम्

स्थापनं पञ्चवीराणामर्चनञ्च तपोधनाः ।
प्रवक्ष्यामि समासेन शृणुध्वं मुनिसत्तमाः ॥ ४० ॥

वासुदेवादिदेवानां पञ्चानां विष्णुना सह ।
पञ्चवीरार्चनं प्रोक्तं ब्रह्मणा च सहार्चनम् ॥ ४१ ॥

अन्नप्रजापतियुतं रहितं वा तपोधनाः ।
पुष्टिदं सर्वलोकानां सर्वाध्वरफलावहम् ॥ ४२ ॥

पञ्चवीरार्चनं ह्येतद्वेदवैदिकवर्धनम् ।
सर्वैश्वर्यदप्रदं नृणां मुक्तिदं सर्वसिद्धिदम् ॥ ४३ ॥

[1]नदीविशालमष्टाङ्गं सोमच्छन्दं चतुःस्फुटम् ।
सर्वतोभद्रक्तं वाऽपि गोपुराकृतिकन्तु वा ॥ ४४ ॥

---

1. नन्दी. ख.

एकतलं द्वितलं वा कल्पयित्वा यथाविधि ।
आदिभूमिं घनं कुर्याद्द्वितीये स्थापयेत्तले ॥ ४५ ॥

गर्भव्यासाष्टभागैकहीनोच्चे वसुदेवजे ।
त्रयस्त्रिंशतिदण्डैकाधिकः सङ्कर्षणोदयः ॥ ४६ ॥

वासुदेवाधिकोत्सेधो बलभद्रो [1]नु दैविके ।
प्रद्युम्नो वासुदेवस्य कर्णसीमान्तकोदयः ॥ ४७ ॥

[2]नस्यस्तनावसानोच्चौ रुक्मिणी साम्ब एव च ।
वासुदेवस्य हिक्कान्तस्त्वनिरुद्ध उदाहृतः ॥ ४८ ॥

वासुदेवसमोत्सेधं कल्पयेत्कमलासनम् ।
समष्टिरूपमेतेषां मध्ये विष्णुं प्रकल्पयेत् ॥ ४९ ॥

स्थावरं जङ्गमञ्चापि तथा स्थावरजङ्गमम् ।
श्रीभूमिसहितं कुर्याद्रहितं वा यथाविधि ॥ ५० ॥

स्थापयेद्वासुदेवादीन् पञ्च वै मानुषे पदे ।
स्थापयेद्वासुदेवन्तं ब्रह्मसूत्रात्तथोत्तरे ॥ ५१ ॥

श्यामलं द्विभुजं देवं शङ्खचक्रसमन्वितम् ।
पद्मपत्रायतदृशं प्रसन्नेन्दुनिभाननम् ॥ ५२ ॥

पीताम्बरधरं देवं सर्वाभरणभूषितम् ।
दक्षिणे रुक्मिणीं देवीं श्यामां रक्ताम्बरोज्ज्वलाम् ॥ ५३ ॥

मीनकुण्डलताटङ्कां यज्ञसूत्रविराजिताम् ।
ताटङ्कं दक्षिणे कर्णे वामे मकरकुण्डलम् ॥ ५४ ॥

कुञ्चितं दक्षिणं पादं वामपादञ्च सुस्थितम् ।
करं प्रसारितं वामं दक्षिणं वरदं तथा ॥ ५५ ॥

---

1. अधिकोदयः. ख.　2. तस्य नासावसानौ च. ख.

अथवा दक्षिणेनैव दिव्यपङ्कजधारिणीम् ।
तस्याश्च दक्षिणे भागे बलदेवं प्रकल्पयेत् ॥ ५६ ॥

श्वेताभं द्विभुजं कुर्याद्दक्षिणेनाभयप्रदम् ।
उद्देशवामहस्तञ्च सर्वाभरणभूषितम् ॥ ५७ ॥

दक्षिणे भित्तिपार्श्वे तु ब्रह्माणं कनकप्रभम् ।
द्विभुजं कटिकं वामं दक्षिणेनाभयप्रदम् ॥ ५८ ॥

उदङ्मुखं स्थितं कुर्यात्सर्वाभरणभूषितम् ।
उत्तरे वासुदेवस्य प्रद्युम्नं द्विभुजं स्थितम् ॥ ५९ ॥

सस्यश्यामनिभं कुर्यात्सर्वाभरणभूषितम् ।
अभयं दक्षिणं हस्तं वामं कट्यवलम्बितम् ॥ ६० ॥

उत्तरां भित्तिमाश्रित्य साम्बञ्च द्विभुजं स्थितम् ।
दक्षिणाभिमुखं श्यामं सर्वाभरणभूषितम् ॥ ६१ ॥

वरदं दक्षिणं हस्तं वामं कट्यवलम्बितम् ।
तत्प्राच्यामनिरुद्धञ्च प्रवालाभं प्रकल्पयेत् ॥ ६२ ॥

अभयं दक्षिणं हस्तं वामं कट्यवलम्बितम् ।
[1]दक्षिणाभिमुखं तस्य हस्तौ साम्बवदेव हि ॥ ६३ ॥

कल्पयेद्दशतालेन वासुदेवं हलायुधम् ।
ब्रह्माणञ्चान्यदेवांस्त्रीनध्यर्धनवतालतः ॥ ६४ ॥

दशतालोत्तमेनैव मध्ये विष्णुं प्रकल्पयेत् ।
स्थावरं दैविके भागे पदे ब्राह्मे तु जङ्गमम् ॥ ६५ ॥

वासुदेवसमोत्सेधं स्थावरं समुदाहृतम् ।
सर्वानुकूलमानेन केवलं जङ्गमं यदि ॥ ६६ ॥

---

1. दक्षिणाभिमुखञ्चैव सर्वाभरणभूषितम्. ख.

कौतुकं पञ्चवीराणां स्थापयेत्तत्तदग्रतः ।
यदाकारं ध्रुवाकारं तदाकारञ्च कौतुकम् ॥ ६७ ॥

सर्वेषां कौतुकं मध्ये विष्णुमेकं तथापि वा ।
औत्सवं स्नापनञ्चैव विष्णुमेव चतुर्भुजम् ॥ ६८ ॥

अन्नप्रजापतिं कुर्यात्प्राच्यामेवानिरुद्धतः ।
भूताकारं प्रकुर्वीत द्विभुजं वा चतुर्भुजम् ॥ ६९ ॥

परितस्तु त्रयस्त्रिंशद्देवान् गर्भगृहेऽर्चयेत् ।
प्राग्भित्तौ द्वादशादित्यान् रुद्रान् दक्षिणभित्तिकान् ॥ ७० ॥

प्रतीच्याञ्च वसूनष्टौ नासत्यावुत्तरे क्रमात् ।
द्वारस्य दक्षिणे भागे खड्गशक्तिशरारिणः ॥ ७१ ॥

गदाञ्च कल्पयेद्वामे शङ्खं शार्ङ्गञ्च खेटकम् ।
अङ्कुशं पद्ममित्येवमर्चयेच्च दशायुधान् ॥ ७२ ॥

परितो लोकपालांश्च प्रह्लादं ज्ञानमूर्तिकम् ।
पूजयेद्द्वादशादित्यान् रुद्रानेकादश क्रमात् ॥ ७३ ॥

वसूनष्टौ च नासत्यौ चतुर्ज्योतींषि च क्रमात् ।
प्राग्भित्तौ पाण्डवान् कुर्यात्तलेऽधस्ताद्बहिर्मुखान् ॥ ७४ ॥

उत्तरे दक्षिणाद्यञ्च तत्तच्चिह्नसमायुतान् ।
प्राग्भित्तौ दैविकान्पञ्चवीरान् सङ्कल्पयेद्बुधः ॥ ७५ ॥

एष एव विशेषः स्यादन्यत्सर्वं हरेरिव ।
सुमासपक्षनक्षत्रमुहूर्तकरणादिषु ॥ ७६ ॥

अङ्कुराण्यर्पयित्वैव द्रव्याण्यपि समाहरेत् ।
यागशालाञ्च पञ्चाग्नीन् पौण्डरीकञ्च कल्पयेत् ॥ ७७ ॥

औपासनविहीनञ्च दक्षिणाग्नेस्तु दक्षिणे ।
आवसथ्योत्तरे कुर्यादन्नमूर्तेस्तथैव च ॥ ७८ ॥

अक्ष्युन्मेषाधिवासादीन् सर्वं पूर्ववदाचरेत् ।
अधिवासगतान् देवान् समुद्धृत्याभिषेचयेत् ॥ ७९ ॥

अलङ्कृत्य यथान्यायं कुर्याद्ग्रामप्रदक्षिणम् ।
स्थापयेद्यागशालायां नैर्ऋते विष्टरोपरि ॥ ८० ॥

संसाध्य पूर्ववत्कुम्भं सर्वेषाञ्च पृथक्पृथक् ।
अलङ्कृत्य समभ्यर्च्य बद्ध्वा प्रतिसरामपि ॥ ८१ ॥

शयने शाययित्वैव वेदानध्यापयेत्क्रमात् ।
वासुदेवस्य विष्णोश्च मध्ये हौत्रं प्रशंस्य च ॥ ८२ ॥

रामस्याहवनीयाग्नौ प्रद्युम्नस्य च दक्षिणे ।
साम्बस्य गार्हपत्याग्नावावसथ्ये तथैव च ॥ ८३ ॥

हौत्रं स्यादनिरुद्धस्य ब्रह्मणश्च प्रजापतेः ।
हौत्रमौपासनाग्नौ च प्रशंस्याऽवाह्य पूर्ववत् ॥ ८४ ॥

निरुप्याज्याहुतीर्हुत्वा सर्वान् देवान् समर्च्य च ।
वासुदेवस्य सभ्याग्निं परिस्तीर्य यथाविधि ॥ ८५ ॥

वैष्णवं विष्णुसूक्तञ्च पौरुषं सूक्तमेव च ।
श्रीसूक्तञ्च महीसूक्तं पञ्चवारुणसंयुतम् ॥ ८६ ॥

मूलहोमसमायुक्तं यद्देवादिसमन्वितम् ।
आहुतीनां सहस्रञ्च देवं ध्यायन् जुहोति च ॥ ८७ ॥

यजेद्देवं पुनश्चापि विष्णुमुद्दिश्य तत्र वै ।
हुत्वा तु सर्वदैवत्यं वैष्णवं त्रिः पुनर्यजेत् ॥ ८८ ॥

मिन्द्राहुती च विच्छिन्नं हुत्वा कृत्वा प्रवाहणम् ।
रामस्याहवनीयाग्नौ पौरुषं सूक्तमेव च ॥ ८९ ॥

विष्णुसूक्तं ततो ब्राह्मं प्रद्युम्नस्य च दक्षिणे ।
वैष्णवं गार्हपत्याग्नौ साम्बस्य जुहुयात्पुनः ॥ ९० ॥

आवसथ्येऽनिरुद्धस्य यजेदेकाक्षरादिकम् ।
रुद्रमन्त्रद्वयेनापि भक्त्या देवमनुस्मरन् ॥ ९१ ॥

ऋत्विगष्टार्कऋत्वस्तु जुहुयादुत्तमादिषु ।
यजेदाहवनीयाग्नौ जयादींश्च सकृत्सकृत् ॥ ९२ ॥

ततश्च पौण्डरीकाग्निं परिषिच्य यथाविधि ।
विष्णुगायत्रिया पद्मं घृते गव्ये समाप्लुतम् ॥ ९३ ॥

अष्टोत्तरशतं हुत्वा जुहुयात्पारमात्मिकम् ।
सभ्याग्निं पौण्डरीकाग्निं विनाऽन्याग्नीन् विसृज्य च ॥ ९४ ॥

नृत्तैर्गेयैश्च वाद्यैश्च रात्रिशेषं नयेद्गुरुः ।
प्रातः स्नात्वाऽथ सावित्रीं जप्त्वा सन्ध्यामुपास्य च ॥ ९५ ॥

रत्नन्यासं ततः कुर्यादर्चापीठे तु पूर्ववत् ।
विसृज्य शान्तिहोमान्ते पौण्डरीकं विधानतः ॥ ९६ ॥

दद्यादाचार्यपूर्वेभ्यो दक्षिणां देवसन्निधौ ।
सभ्यमग्निं परिस्तीर्य विष्णुगायत्रिया यजेत् ॥ ९७ ॥

हुत्वाऽऽदधीत सभ्याग्निं नित्यहोमाय दक्षिणे ।
प्रधानकुम्भमाचार्यः पुरतः शिरसा वहन् ॥ ९८ ॥

गच्छेत्तदर्चकाः कुम्भान् वहन्तोऽनुनयन्ति च ।
शाकुनं सूक्तमुच्चार्य कुर्याद्ग्रामप्रदक्षिणम् ॥ ९९ ॥

पश्चादन्तः प्रविश्यैव जीवस्थाने निवेश्य च ।
जप्त्वाऽऽत्मसूक्तमाचार्यो मनसा भावयन् हरिम् ॥ १०० ॥

मन्त्रन्यासाक्षरन्यासौ कृत्वा बिम्बे च पूर्ववत् ।
रामादीनाञ्च सर्वेषां तन्नामाद्यक्षरान्वितम् ॥ १०१ ॥

प्रत्यक्प्रवृत्तिं मनसा ध्यायन् विष्णुं परात्परम् ।
वासुदेवं समारभ्य रुक्मिण्यन्तमनुक्रमात् ॥ १०२ ॥

मध्ये विष्णुं समावाह्य श्रीभूमिभ्यां समन्वितम् ।
ततः सङ्कर्षणादींस्तान् क्रमेणाऽवाहयेत्सुधीः ॥ १०३ ॥

गर्भालयगतान् देवान् द्वारेशान् द्वारपालकान् ।
विमानलोकपालांश्च परिवारांस्तथोत्तरान् ॥ १०४ ॥

आवाह्य वासुदेवस्य कुम्भादेव यथाक्रमम् ।
एककुम्भे तथा ध्यायेत्सर्वांस्तान् विष्णुना विना ॥ १०५ ॥

वासुदेवं समावाह्य तस्मादावाहयेत्क्रमात् ।
स्थापकैः सह पुण्याहं वाचयित्वा तु पूर्ववत् ॥ १०६ ॥

हवींषि पायसादीनि रामादीनां निवेदयेत् ।
मौद्गिकं ब्रह्मणे दद्यात् शुद्धान्नन्तु प्रजापतेः ॥ १०७ ॥

नित्याग्निकुण्डे जुहुयान्मूर्तिहोमं यथाविधि ।
कृत्वा बल्युत्सवान्तानि रात्रौ स्नपनमाचरेत् ॥ १०८ ॥

आरभेदुत्सवं पश्चादुत्सवोक्तक्रमेण वै ।
हिरण्यपशुभूम्यादीन् गुरवे दक्षिणां ददेत् ॥ १०९ ॥

एष एव विशेषः स्यादन्यत्सर्वं हरेरिव ।
पञ्चवीराणां स्थापने स्थाननिर्देशः ग्रामान्ते नगरान्ते वा पर्वतान्ते वनान्तरे ॥ ११० ॥

नदीसमुद्रतीरेषु विविक्तेऽन्यत्र कुत्रचित् ।
पञ्चवीरविधानेन प्रतिष्ठाप्य समर्चयेत् ॥ १११ ॥

पञ्चवीरार्चनप्रकारः
अतः परं प्रवक्ष्यामि पञ्चवीरसमर्चनम् ।
अर्चकः प्रातरुत्थाय स्नात्वा सन्ध्यामुपास्य च ॥ ११२ ॥

देवादींस्तर्पयित्वाऽद्भिः जप्त्वा जप्यानि पूर्ववत् ।
देवालयं प्रविश्याथ परीत्य च यथाविधि ॥ ११३ ॥

कवाटोद्घाटनादीनि कृत्वा सर्वाणि पूर्ववत् ।
सम्भारानपि सम्भृत्य निर्माल्यमपहाय च ॥ ११४ ॥

हवींषि चोपदंशांश्च पाचयित्वा यथाविधि ।
स्नापयेद्वासुदेवन्त 'मिषे त्वा'दि जपन् पुनः ॥ ११५ ॥

विष्णुं पुरुषसूक्तेन स्नापयित्वा यथाविधि ।
स्नापयेद्बलभद्रन्त 'मापो हि ष्ठा'दिभिः त्रिभिः ॥ ११६ ॥

प्रद्युम्नं विष्णुसूक्तेन साम्बं संस्नाप्य वैष्णवैः ।
स्नापयेदनिरुद्धन्तं सूक्तेनैकाक्षरादिना ॥ ११७ ॥

ब्राह्ममन्त्रद्वयेनैव ब्रह्माणञ्च प्रजापतिम् ।
( स्नापयित्वा क्रमेणैतान् जीवस्थाने निवेशयेत् )
वासुदेवस्य विष्णोश्चावरणत्रयनामभिः ॥ ११८ ॥

अन्येषामपि देवानां न्यसेत्पुष्पाणि मूर्तिभिः ।
अभ्यर्च्य द्वारदेवादीन् पुनरन्तः प्रविश्य च ॥ ११९ ॥

उदङ्मुखस्समासीनो विष्टरे चैकजानुना ।
[1]मन्त्रन्यासं ततः कृत्वा आवाह्य च तथा ध्रुवात् ॥ १२० ॥

केवले जङ्गमे [2]विष्णोर्नावाहनविसर्जने ।
एकबेरे तथा विष्णोर्विशेषस्तत्र वक्ष्यते ॥ १२१ ॥

बिम्बाभिषेचनात्पूर्वमर्चयित्वाऽष्टविग्रहैः ।
तैलाभ्यङ्गं तथा कृत्वा संस्नाप्य च यथा पुनः ॥ १२२ ॥

अलङ्कृत्य प्रतिष्ठाप्य पूजयेदष्टविग्रहैः[3] ।
विशेषं सम्प्रवक्ष्यामि बलभद्रादिपूजने ॥ १२३ ॥

रामस्याचमनं दद्या 'दापो हि ष्ठा'दिभिः त्रिभिः ।
'हिरण्यगर्भ' इत्युक्त्वा दद्यादर्घ्यं हविस्तथा ॥ १२४ ॥

'योगे योग' इत्याचमनं प्रद्युम्नस्याभिधीयते ।
'इदमापः शिवा' अर्घ्यं '[4]मिह पुष्टि' मिति ब्रुवन् ॥ १२५ ॥

---

1. मन्त्रन्यासाक्षरन्यासौ कृत्वाऽऽवाह्य. ख. 2. विष्णौ. ख. 3. पूजयेच्छेषविग्रहैः ख
4. इहपुष्टिरिह. ख.

हविर्निवेदनं कुर्यात्ततः साम्बसमर्चने ।
'समाने वृक्ष' इत्युक्त्वा दद्यादाचमनं पुनः ॥ १२६ ॥

विष्णुगायत्रिया चार्घ्यं 'समा ववर्ती' ति वै हविः ।
हविराचमनार्घ्याणि अनिरुद्धस्य पूर्ववत् ॥ १२७ ॥

पूजयेन्मुखवासान्तं सङ्कर्षणपुरस्सरान् ।
ब्राह्ममन्त्रद्वयेनैव ब्रह्माणञ्च प्रजापतिम् ॥ १२८ ॥

द्वात्रिंशद्भिर्ग्रहैर्विष्णुं वासुदेवञ्च पूजयेत् ।
मूर्तयः पूर्वमेवोक्ताः सर्वेषाञ्च मया **खिले** ॥ १२९ ॥

येषां न मूर्तयः सन्ति तेषां नामभिरर्चनम् ।
कौतुकं पञ्चवीराणामेकमेव[1] यदा भवेत् ॥ १३० ॥

तदा तु वासुदेवञ्च सङ्कर्षणमिति ब्रुवन् ।
प्रद्युम्नं साम्बमित्युक्त्वा अनिरुद्धमिति ब्रुवन् ॥ १३१ ॥

ततः पञ्चभिरावाह्य समभ्यर्च्य यथाविधि ।
पञ्चस्वारोपयेद्देवान् पूजनान्ते यथाविधि ॥ १२२ ॥

इति सङ्क्षेपतः प्रोक्तं पञ्चवीरसमर्चनम् ।
अनुक्तान्यत्र सर्वाणि विष्णोरिव समाचरेत् ॥ १३३ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
दशावतार पञ्चवीरप्रतिष्ठादिविधिर्नाम त्रिंशोऽध्यायः ।

---

1. एवमेव, ख.

# एकात्रिंशोऽध्यायः

सामान्य॰ प्रायश्चित्तम्

अतः परं प्रवक्ष्यामि सर्वसामान्यनिष्कृतिम् ।
अशक्यं विधिवत्कर्तुं ब्रह्माद्यैरपि पूजनम् ॥ १ ॥

किं वा तत्र मनुष्याणामव्यवस्थितचेतसाम् ।
विषयासक्तचित्तानामिन्द्रियाहृतचेतसाम् ॥ २ ॥

अज्ञातानाञ्च दोषाणामर्चनादिषु कर्मसु ।
ज्ञात्वा चानादृतानाञ्च मोहाल्लोभात्प्रमादतः ॥ ३ ॥

तत्तद्दोषोपशान्त्यर्थं कुर्यात्सामान्यनिष्कृतिम् ।
तत्तत्सन्ध्यावसाने च विष्णुसूक्तेन वैष्णवैः ॥ ४ ॥

सूक्तेन पौरुषेणापि विष्णुगायत्रिया तथा ।
द्वादशाष्टाक्षराभ्याञ्च 'नमो ब्रह्मण' इत्यपि ॥ ५ ॥

पुष्पाणि पादयोर्दत्वा 'क्षम' स्वेति प्रसादयेत् ।
रात्रिपूजावसाने तु सूक्तेनैकाक्षरादिना ॥ ६ ॥

नारायणानुवाकेन स्तुत्वा पुष्पाञ्जलिं ददेत् ।
मासावसाने कुर्याच्चेद्द्वादश्यां श्रवणे तथा ॥ ७ ॥

तस्मात्तु दिवसात्पूर्वमङ्कुरार्पणमाचरेत् ।
देवेशं पूर्वरात्रौ तु समभ्यर्च्य विशेषतः ॥ ८ ॥

हविर्निवेदयित्वा तु बद्ध्वा प्रतिसरं तथा ।
शाययित्वाऽथ देवेशं प्रातः स्नात्वा यथाविधि ॥ ९ ॥

प्रातसन्ध्यावसाने तु कृत्वा ग्रामप्रदक्षिणम् ।
स्थापयित्वा तु देवेशं ततः स्नपनमण्डपे ॥ १० ॥

स्नापयित्वा तु कलशैश्चत्वारिंशद्भिरष्टभिः ।
पङ्कजं शालिभिः कुर्यात्साष्टपण सकर्णिकम् ॥ ११ ॥

तस्मिन् देवं समारोप्य पूजयेदासनादिभिः ।
महाहविः प्रभूतं वा यथाशक्ति निवेदयेत् ॥ १२ ॥

पानीयाचमनं दत्वा मुखवासं निवेदयेत् ।
तत्काले चैव मूर्त्यर्चां पूर्ववत्कारयेद्बुधः ॥ १३ ॥

परिषिच्य च नित्याग्निमतो देवादिवैष्णवैः ।
पौरुषेण च सूक्तेन तथा विष्णोर्नुकादिना ॥ १४ ॥

जयादिभिश्च कूष्माण्डैः परिषन्मूर्तिभिस्तथा ।
आज्येन साज्यचरुणा व्याहृत्यन्तं ततो यजेत् ॥ १५ ॥

द्वादशाष्टाक्षराभ्याञ्च शतमष्टोत्तरं यजेत् ।
पूर्वोक्तैरेवमन्त्रैस्तु दत्वा पुष्पाञ्जलिं तथा ॥ १६ ॥

जीवस्थाने प्रतिष्ठाप्य 'क्षम' स्वेति प्रणम्य च ।
दद्यादाचार्यपूर्वेभ्यो दक्षिणां देवसन्निधौ ॥ १७ ॥

संवत्सरे तु यन्न्यूनं नित्ये नैमित्तिकेऽर्चने ।
तत्सर्वदोषशान्त्यर्थं मार्गशीर्षे तु मासि वै ॥ १८ ॥

द्वादश्यां शुक्लपक्षे तु कुर्यात्पूर्वोक्तमर्चनम् ।
संवत्सरात्तदोषाणां शान्तये चाथ वौजसे ॥ १९ ॥

श्रवणद्वादशीयोगे मासि भाद्रपदे तथा ।
पवित्रारोपणं केचिदिच्छन्ति मुनिसत्तमाः ॥ २० ॥

पवित्रारोपण-निमित्तम्

अथातः सम्प्रवक्ष्यामि पवित्रारोपणं हरेः ।
नित्ये नैमित्तिके वाऽपि तथा संवत्सरार्चने । २१ ॥

ज्ञानतोऽज्ञानतो वाऽपि ये दोषास्सम्भवन्ति वै ।
पवित्रारोपणेनैव ते शाम्यन्ति न संशयः ॥ २२ ॥

सर्वदोषोपशमनं सर्वकामसमृद्धिदम् ।
आयुरारोग्यदं कर्तुः सर्वाध्वरफलावहम् ॥ २३ ॥

पवित्रारोपणं विष्णोः कारयेत्सर्वशान्तये ।
मार्गशीर्षाख्यमासे तु शुक्लपक्षे विशेषतः ॥ २४ ॥

कालः

द्वादश्यां कृष्णपक्षे वा नक्षत्रे श्रवणेऽथवा ।
दक्षिणायनमासेषु [1]विष्णुपञ्चदिने तथा ॥ २५ ॥

कवेराश्वयुजे मासि चाश्वयुज्यां समाचरेत् ।
कृष्णाष्टमीचतुर्दश्योः शम्भोर्मासेषु षट्सु च ॥ २६ ॥

द्वादश्यां भास्करस्योक्तं षष्ठ्यां स्कन्दस्य कीर्त्यते ।
कार्तिके मासि दुर्गायाः नवम्यां कृत्तिकासु च ॥ २७ ॥

पूर्वपक्षेऽथवा कृष्णे श्रीदेव्याः पञ्चमीतिथौ ।
अथवोत्तरफल्गुन्योः पवित्रारोपणं चरेत् ॥ २८ ॥

तस्मात्तु दिवसात्पूर्वं नवमे वाऽथ सप्तमे ।
पञ्चमेऽहनि वा कुर्यात्तृतीये वाऽङ्कुरार्पणम् ॥ २९ ॥

अङ्कुरार्पणकादूर्ध्वं द्रव्याण्यपि समाहरेत् ।

पवित्रमण्डपम्

पवित्रमण्डपं कुर्याद्देवाग्रे वाऽथ दक्षिणे ॥ ३० ॥

स्नपनालयेऽथवा तत्र स्थानं कृत्वा यथाविधि ।
तोरणैः पूर्णकुम्भैश्च कदलीक्रमुकध्वजैः ॥ ३१ ॥

चतुर्द्वारेष्वलङ्कृत्य स्तम्भयोरुभयोरपि ।
वितानैश्च पताकाभिस्तरङ्गैः स्तम्भवेष्टनैः ॥ ३२ ॥

मुक्तादामावलम्बैश्च पुष्पैर्वा दर्भमालया ।
किङ्किणीजालकैर्हैमैः कल्पवृक्षैस्सरत्नकैः ॥ ३३ ॥

अलङ्कृत्यान्तरं सर्वं दीपानारोपयेद्बहून् ।
गोमयेनोपलिप्यैव पञ्चवर्णैरलङ्कृतम् ॥ ३४ ॥

---

1. द्वादश्यां श्रवणेऽथवा, आ.

चतुर्दिशं चतुर्हस्तं त्रिहस्तं वाऽस्य मध्यमे ।
गृहीत्वा प्रागुदक्सूत्रैरुपपीठपदे कृते ॥ ३५ ॥

मेर्वादिकल्पनम्

तन्मध्ये मेरुरेकस्स्याद्धस्तमात्रसमुच्छ्रयः ।
तत्तुरीयांशहीनास्तत्परितोऽष्टौ कुलाचलाः ॥ ३६ ॥

तत्त्रिभागैकहीनास्तु परितस्तस्य षोडश ।
इन्द्रादीनां तथाऽष्टानां शिवादीनां पदानि वै ॥ ३७ ॥

चतुर्भिर्दशभिः सूत्रैः बहिः पङ्क्तिं चतुर्दिशम् ।
सागराः सप्त चैतेषु द्वीपाः शाकादयश्च षट् ॥ ३८ ॥

तत्र मेरुः सुवर्णाभः सितपीतासितारुणः ।
हिमाचलादयो द्वन्द्वास्तथाऽष्टौ कुलपर्वताः ॥ ३९ ॥

श्वेतपीतासितश्यामरक्तनीलसितारुणाः ।
तद्बहिः षोडशपदे कल्पनीयाः प्रयत्नतः ॥ ४० ॥

जम्बूद्वीपादिकं ध्यात्वा तद्बहिर्लवणार्णवम् ।
सस्यश्यामनिभं कुर्याच्छाकद्वीपं बहिस्तथा ४१ ॥

श्वेतं क्षीरार्णवं बाह्ये कुशद्वीपं ततो बहिः ।
बहिर्घृतार्णवं नीलं क्रौञ्चद्वीपं तथैव च ॥ ४२ ॥

दधितोयनिधिश्शुक्लः शाल्मलीद्वीपसंयुतः ।
मध्वर्णवः पिशङ्गाऽभो गोमेदद्वीपसंयुतः ॥ ४३ ॥

इक्षुसारार्णवः केचिच्छ्वेतः पुष्करसंयुतः ।
शुद्धतोयार्णवो रक्तो लोकालोकाचलस्तथा ॥ ४४ ॥

एवं भूमण्डलं कृत्वा वर्णैर्धातुविकारजैः ।
पौष्पैः परागैरथवा पत्रचूर्णैरथापि वा ॥ ४५ ॥

तत्तद्वर्णयुतान् कृत्वा सर्वानेतानसङ्करम् ।
जपेदुपोष्य पूर्वेद्युर्वेदान् त्रिषवणाप्लुतः ॥ ४६ ॥

पवित्रद्रव्यम्

निष्काहीनसुवर्णेन ध्रुवादीनां पृथक्पृथक् ।
देव्योस्तदर्धमानेन तथा परिषदामपि ॥ ४७ ॥

छन्नगुल्फतलश्चैकं सूत्रं विष्णोः प्रकल्पयेत् ।
तद्ब्रह्म(?)सूत्रमित्युक्तं तदसाधारणं हरेः ॥ ४८ ॥

अशक्तस्तान्तवं वाऽथ सूत्रं कृत्वा समाचरेत् ।
तान्तवं यदि कुर्वीत त्रिगुणीकृत्य तत्पुनः ॥ ४९ ॥

पवित्रानिर्माण-प्रकारः

प्राङ्मुखौ द्वौ तु तिष्ठन्तावेकस्त्वभिमुखस्तयोः ।
जपन्वै विष्णुगायत्रीं दक्षिणोर्ध्वन्तु वर्धयेत् ॥ ५० ॥

तत्पुनस्त्रिगुणीकृत्य वामोर्ध्वं वर्धयेत्पुनः ।
शुचौ देशे च सन्न्यस्य तस्योपरि मृदं तथा ॥ ५१ ॥

सन्न्यस्य हस्तौ सन्ताड्य त्रिगुणीकृत्य कल्पयेत् ।
यज्ञोपवीतमित्युक्तं ग्रन्थिसूत्रमथोच्यते ॥ ५२ ॥

अष्टोत्तरसहस्रेण तदर्धेन शतेन च ।
मूर्तीनां पुरुषादीनां तदर्धेनैव कल्पयेत् ॥ ५३ ॥

देव्योश्च परिवाराणां तदर्धेनैव कल्पयेत् ।
गुल्फान्तं वाऽथ जान्वन्तमूर्वन्तञ्चोत्तमादिषु ॥ ५४ ॥

अयुग्मां कलयेद्ग्रन्थिं पञ्चवर्णोक्ततन्तुभिः ।
एतत्सर्वं दिवा कृत्वा सायं सन्ध्यामुपास्य च ॥ ५५ ॥

द्रव्यन्यासः

त्रिलोकीमण्डपं कृत्वा तद्द्रव्यन्यासमाचरेत् ।
पवित्राणि च सर्वाणि मेरुशृङ्गोपरि न्यसेत् ॥ ५६ ॥

अष्टोपचारद्रव्याणि न्यसेदष्टकुलाचले ।
मङ्गलानि न्यसेदष्टलोकपालपदाष्टके ॥ ५७ ॥

धौतवस्त्रोत्तरीयादीन् धातूनाभरणान्यपि ।
हविः पानीय ॥ ५८ ॥

मित्रादीनां पदाष्टके ।
पुरुषादिपवित्राणि प्रागादिषु कुलाद्रिषु ॥ ५९ ॥

कोणेषु कपिलादीनामाग्नेयादिषु विन्यसेत ।
तद्बहिः षोडशांशेषु सूत्रं परिषदामपि ॥ ६० ॥

तत्तदुक्तेषु शैलेषु नववस्त्रोपरि न्यसेत् ।
सागरेषु च सर्वेषु तत्तद्द्रव्यसुपूरितान् ॥ ६१ ॥

प्रत्येकमष्टौ कलशान् सन्न्यसेत्सूत्रवेष्टितान् ।
आढकाहीनधान्येषु पृथग्वस्त्रोत्तरच्छदान् ॥ ६२ ॥

तदुपस्नानकलशान् बहिर्द्वीपेषु सन्न्यसेत ।
चक्रवालाचलाद्बाह्ये प्राच्यां वीशं समर्चयेत् ॥ ६३ ॥

दक्षिणे चक्रखड्गौ च शरञ्चैव समर्चयेत् ।
पङ्क्तीशं पश्चिमेऽभ्यर्च्य वामे चैव विशेषतः ॥ ६४ ॥

शङ्खखेटकशार्ङ्गाणि तथा कौमोदकीमपि ।
छत्रचामरयुग्मञ्च दर्पणञ्च ध्वजं तथा ॥ ६५ ॥

ऐशान्यादिषु कोणेषु सन्न्यसेत्तानसङ्करम् ।
उत्सवोपक्रमः रात्रिपूजावसाने तु स्नापनञ्चोत्सवन्तु वा ॥ ६६ ॥

'परं रं' हेति मन्त्रेण पीठादादाय चात्वरः ।
स्वस्तिसूक्तं जपित्वा तु सर्वालङ्कारसंयुतम् ॥ ६७ ॥

मण्डलात्पश्चिमे पीठे स्थापयित्वाऽष्टविग्रहैः ।
समभ्यर्च्य निवेद्यैव बद्ध्वा प्रतिसरं तथा ॥ ६८ ॥

पूर्ववच्छाययेद्देवं वेदानध्यापयेत्क्रमात् ।
द्रव्याधिदेवानभ्यर्च्य विधानैश्च विधायकः ॥ ६९ ॥

कल्पयेन्मण्डलात्प्राच्यां पौण्डरीकं सलक्षणम् ।
होमप्रकारः तत्र नित्याग्निमाधाय परिषिच्य च पावकम् ॥ ७० ॥

जुहुयाद्वैष्णवैर्मन्त्रैराज्येन चरुणा तथा ।
हौत्रं प्रशंस्य चाऽवाह्य देवानभ्यर्च्य पूर्ववत् ॥ ७१ ॥

निरुप्याज्याहुतीर्हुत्वा परितस्तान्समर्चयेत् ।
वैष्णवं विष्णुसूक्तञ्च पौरुषं सूक्तमेव च ॥ ७२ ॥

जुहुयाच्छ्रीमहीसूक्तं पञ्चवारुणसंयुतम् ।
जयाद्यैरपि हुत्वा तु यद्देवादींस्तथैव च ॥ ७३ ॥

सहस्रमाहुतीनाञ्च सर्वदैवत्यमेव च ।
मिन्दाहुती च विच्छिन्नं पद्महोमं ततः परम् ॥ ७४ ॥

पारमात्मिकसंयुक्तमीङ्कारादींस्तथैव च ।
रात्रिसूक्तञ्च जुहुयात्सूक्तं सारस्वतं तथा ॥ ७५ ॥

'हिरण्यगर्भ' इत्यादि ब्रह्मसूक्तं तथैव च ।
रुद्रमन्त्रद्वयेनापि विश्वजित्सूक्तसंयुतम् ॥ ७६ ॥

'नमो वाचे' समुच्चार्य 'शन्नो वात' इतीर्य च ।
देवदेवं स्मरन्नेव रात्रौ होमं समाप्य च ॥ ७७ ॥

प्रातः स्नात्वाऽथ कृत्यानि यथाविधि समाचरेत् ।
देवदेवं समुद्धृत्य निर्माल्यमपि शोधयेत् ॥ ७८ ॥

ऐशान्यां मण्डलाच्छुभ्रे देवं संस्थाप्य पूर्ववत् ।
स्नपनम् अष्टोपचारैरभ्यर्च्य स्नापयेल्लवणादिभिः (?) ॥ ७९ ॥

'इषे त्वोर्जे' त्वेति जपन् स्नापयेत्सर्ववस्तुभिः ।
पुरुषसूक्तं समुच्चार्य शुद्धोदैरभिषेचयेत् ॥ ८० ॥

पुनः प्लोतेन मृज्याथ स्थापयेत्पूर्वविष्टरे ।
अन्तः स्नानादिकं सर्वमेकबेरे समाचरेत् ॥ ८१ ॥

वस्त्रोत्तरीयाभरणैः धातुभिश्च यथोचितम् ।
पूर्वमन्त्रैरलङ्कृत्य पूजयित्वाऽष्टविग्रहैः ॥ ८२ ॥

नारायणानुवाकेन कृत्वा सूत्राभिमर्शनम् ।
पवित्रारोपणम् कर्पूराद्यैश्च गन्धैश्च वासितञ्च परीमलम् ॥ ८३ ॥

पूर्वोक्तेनैव मन्त्रेण दद्याद्देवस्य भक्तितः ।
मूर्तीनां पुरुषादीनां पृथक् दद्यात्तदुत्तमम् ॥ ८४ ॥

पवित्रसङ्ख्या विष्णोरेकं तथा तेषामेकमेकन्तु मध्यमम् ।
सर्वेषामेकसूत्रञ्चेदधमं परिचक्षते ॥ ८५ ॥

ग्रन्थिसूत्रं निवीतञ्च दद्याद्देवस्य भक्तितः ।
ध्रुवादीनाञ्च सर्वेषामेवं सूत्रञ्च सन्ददेत ॥ ८६ ॥

स्त्रीदेवतानां सर्वासां दद्यात्सूत्रं निवीतकम् ।
एवं देयन्तु सर्वेषां शङ्खवाद्यपुरस्सरम् ॥ ८७ ॥

अष्टोपचारैर्देवेशं समभ्यर्च्य यथाविधि ।
हवींषि पायसादीनि प्रभूतञ्च निवेदयेत् ॥ ८८ ॥

पानीयाचमनं दत्वा ताम्बूलं घनसंयुतम् ।
कुर्यात्पुष्पाञ्जलिं स्तोत्रैर्नमेत्पञ्चाङ्गकं गुरुः ॥ ८९ ॥

सर्वालङ्कारसंयुक्तं ग्राममालयमेव वा ।
प्रदक्षिणं शनैः कृत्वा जीवस्थाने निवेशयेत् ॥ ९० ॥

दद्यादाचार्यपूर्वेभ्यो दक्षिणां देवसन्निधौ ।
मध्यमे तु प्रकुर्वीत त्रिलोकीमण्डलं विना ॥ ९१ ॥

धान्यपीठे पवित्राणि नववस्त्रोपरि न्यसेत् ।
नित्याग्निकुण्डे जुहुयात्पौण्डरीकं विनाऽनलम् ॥ ९२ ॥

पवित्रारोपण-फलश्रुतिः स्नपनं शुद्धतोयेन केवलन्त्वधमे भवेत् ।
एवं यः कुरुते भक्त्या पवित्रारोपणं हरेः ॥ ९३ ॥

सर्वाभीष्टमवाप्नोति सर्वदानफलं लभेत् ।
सर्वपापविनिर्मुक्तः कीर्तिमान् लभते श्रियम् ॥ ९४ ॥

संवत्सरार्चनफलं लब्ध्वा सायुज्यमाप्नुयात् ।
देवदेवोपयुक्तं तत्सूत्रं मर्त्यो बिभर्ति यः ॥ ९५ ॥

अश्वमेधायुतफलं सम्प्राप्नोति न शंसयः ।
गृहार्चना यदि भवेद्विशेषो होमकर्मणि ॥ ९६ ॥

विनैव सर्वदैवत्यं पारमात्मिकमेव च ।
ईङ्कारादीन्विना सर्वान् यजेदौपासनानले ॥ ९७ ॥

ब्रह्मादीनान्तु देवानां तत्तन्मन्त्रं शताष्टकम् ।
जयादींश्चैव कूष्माण्डान् पञ्चवारुणमेव च ॥ ९८ ॥

मिन्दाहुती च विच्छिन्नं जुहुयाद्व्याहृतीरपि ।
एतदेव विधानं स्यादन्यत्सर्वञ्च पूर्ववत् ॥ ९९ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
पवित्रारोपणविधिर्नाम एकत्रिंशोऽध्यायः ।

# द्वात्रिंशोऽध्यायः



शमीपूजाविधिः

अतः परं प्रवक्ष्यामि शमीपूजाक्रमं बुधाः ।
मासि प्रोष्ठपदे शुक्लपक्षे च दशमीतिथौ ॥ १ ॥

देवालयं प्रविश्यैव देवेशं सम्प्रणम्य च ।
स्नपनोक्तक्रमेणैव स्नपनञ्चैव कारयेत् ॥ २ ॥

देवेशं समलङ्कृत्य नानावस्त्रविभूषणैः ।
तुरगे च समारोप्य सर्वशस्त्रास्त्रसंयुतम् ॥ ३ ॥

छत्रचामरसंयुक्तं सर्ववाद्यसमन्वितम् ।
सम्प्राप्ते चैव सायाह्ने देवेशं निनयेद्बुधः ॥ ४ ॥

यत्र देशे शमी तिष्ठेद्देवस्तत्रैव गच्छति ।
शमीवृक्षस्य परितश्चालङ्कृत्य यथाविधि ॥ ५ ॥

पुण्याहं वाचयेद्विद्वान् प्रोक्षणञ्चैव कारयेत् ।
देवस्याग्रस्थले चाऽपि गोमयेनोपलिप्य च ॥ ६ ॥

रङ्गवल्ल्याद्यलङ्कृत्य प्रोक्षयेत्पूतवारिणा ।
तत्र देशे प्रतिष्ठाप्य शार्ङ्गं बाणं तथैव च ॥ ७ ॥

शार्ङ्गस्य चाधिदैवत्यं (?) वक्ष्यामि मुनिसत्तमाः ।
विष्णुं रुद्रं समावाह्य ब्रह्माणं वरुणं तथा ॥ ८ ॥

शराणामधिदैवत्यं चक्रं शङ्खं तथैव च ।
गदां खड्गञ्च शार्ङ्गञ्च अधिदेवांत्समर्चयेत् ॥ ९ ॥

शमीवृक्षस्याधिदेवं वह्निं तत्र समर्चयेत् ।
वृक्षस्य पूर्वे यक्षांश्च दक्षिणे राक्षसांस्तथा ॥ १० ॥

पिशाचान् पश्चिमे चैव उत्तरे मधुकैटभौ ।
एतान् देवान् समावाह्य क्रमेणैवार्चयेद्बुधः ॥ ११ ॥

अष्टोपचारैरभ्यर्च्य फलादीनि निवेदयेत् ।
अर्चकः सुप्रसन्नात्मा धनुरादाय वीर्यवान् ॥ १२ ॥

'धन्वना' गेति मन्त्रेण ज्यास्वनं कारयेद्बुधः ।
'यात इषुः शि' वेति मन्त्रेण सन्दध्याद्धनुषि त्विषुम् ॥ १३ ॥

चक्रेण पूर्वे यक्षादींश्छिन्द्याद्रक्षांसि दक्षिणे ।
पिशाचान् गदया हन्ति पश्चिमाशास्थितांस्तथा ॥ १४ ॥

असिना चोत्तरे हन्ति मधुं कैटभमेव च ।
वृक्षस्य च चतुर्दिक्षु चतुर्बाणान् प्रयोजयेत् ॥ १५ ॥

शार्ङ्गाख्येन च बाणेन वृक्षस्याग्रे प्रयोजयेत् ।
पुनश्शरान्गृहीत्वैव प्रोक्षयेत्पूतवारिणा ॥ १६ ॥

देवस्याग्रे प्रतिष्ठाप्य प्रणामञ्चैव कारयेत् ।
ततो देवं समादाय ग्रामस्याभिमुखं नयेत् ॥ १७ ॥

सद्मप्रदक्षिणं कृत्वा नीराजनमथाचरेत् ।
उष्णोदकेन संस्नाप्य आस्थाने सन्निवेश्य च ॥ १८ ॥

महाहविर्निवेद्यैव ताम्बूलञ्च निवेदयेत् ।
एवं यः कुरुते भक्त्या सर्वपापैः प्रमुच्यते ॥ १९ ॥

सर्वान् कामानवाप्नोति विष्णुसायुज्यमाप्नुयात् ।
कृत्तिकादीपक्रमः अतः परं प्रवक्ष्यामि कृत्तिकादीपलक्षणम् ॥ २० ॥

कार्तिक्यां पूर्णिमायान्तु दीपैराराधनं चरेत् ।
देवालयं प्रविश्यैव देवेशं सम्प्रणम्य च ॥ २१ ॥

देवीभ्यां सहितं देवं स्नापयित्वा यथाविधि ।
देवेशं समलङ्कृत्य नानावस्त्रविभूषणैः ॥ २२ ॥

मुद्गान्नं पायसञ्चैव अपूपं लाजमेव च ।
विशेषेण निवेद्यैव मुखवासं समर्पयेत् ॥ २३ ॥

याने देवं समारोप्य देवीभ्यां सहितं तथा ।
छत्रचामरसंयुक्तं सर्ववाद्यसमन्वितम् ॥ २४ ॥

सन्ध्यापूजावसाने तु वीथीञ्चापि नयेद्बुधः ।
प्रथमावरणे वाऽपि तृतीयावरणेऽपि वा ॥ २५ ॥

पञ्चमावरणे वाऽपि सप्तमावरणे तथा ।
वीथीमध्ये सुसंस्थाप्य तालवृक्षं तथैव च ॥ २६ ॥

नालिकेरं तथा वाऽपि कैतकं क्रमुकं तथा ।
वेणुञ्चापि तथा चैव आगस्त्यमिति केचन ॥ २७ ॥

दारूण्येतानि संस्थाप्य दृढीकृत्य प्रयत्नतः ।
विमानस्य समं वाऽपि पादाधिकमथापि वा ॥ २८ ॥

अर्धाधिकमथो वाऽपि त्रिपादाधिकमेव वा ।
पादहीनं तथा वाऽपि अर्धहीनं तथैव च ॥ २९ ॥

त्रिपादहीनमधमं दीपस्तम्भप्रमाणकम् ।
दीपदण्डस्य परितः दशहस्तप्रमाणतः ॥ ३० ॥

वृत्तैश्चावरणं कृत्वा गोपुराकृतिभिश्चरेत् ।
आच्छादयेत्तालपत्रैर्मूलादग्रान्तमेव च ॥ ३१ ॥

तरङ्गैः दर्भमालाभिस्तोरणैश्चापि वेष्टयेत् ।
पुष्पैर्गन्धैरलङ्कृत्य नववस्त्रेण वेष्टयेत् ॥ ३२ ॥

पुण्याहं विधिवत्कृत्वा प्रोक्षणञ्चैव कारयेत् ।
महादीपाधिदेवांश्च वक्ष्यामि मुनिपुङ्गवाः ॥ ३३ ॥

बडबामुखं कालाग्निं प्रलयानलमेव च ।
महादीपञ्च नामानि नामभिस्तैरथाऽह्वयेत् ॥ ३४ ॥

अष्टोपचारैरभ्यर्च्य लाजानपि निवेदयेत् ।
सौवर्णं राजितं वाऽपि ताम्रं मृण्मयमेव च ॥ ३५ ॥

पात्रं सम्यक्समापूर्य गव्येनैव घृतादिना ।
मध्यमादिचतुर्दिक्षु पञ्चवर्तीर्विनिक्षिपेत् ॥ ३६ ॥

कौतुकस्यापि दीपस्य अधिदेवक्रमं शृणु ।
बडबामुखं कालाग्निं प्रलयानलमेव च ॥ ३७ ॥

जातवेदसं महादीपं पञ्च चाऽवाह्य पञ्चसु ।
अष्टोपचारैरभ्यर्च्य लाजानपि निवेदयेत् ॥ ३८ ॥

अर्चकः सुप्रसन्नात्मा सर्वाभरणभूषितः ।
'विष्णुस्त्वा' मिति मन्त्रेण कराभ्यां दीपमुद्धरेत् ॥ ३९ ॥

सर्वलोकहितार्थञ्च मूर्ध्नः पादान्तमेव च ।
तद्ग्रामस्य समृद्ध्यर्थं ललाटाद्यन्तमेव च ॥ ४० ॥

नेत्रादिपादपर्यन्तं राजराष्ट्रविवृद्धये ।
सर्वेषां मङ्गलार्थञ्च भ्रामयित्वा त्रिधा त्रिधा ॥ ४१ ॥

ततो दीपं गृहीत्वैव मन्दं मन्दञ्च गच्छति ।
प्रदक्षिणत्रयं कृत्वा दण्डाग्रे च सुसन्न्यसेत् ॥ ४२ ॥

चतुर्वर्तीर्गृहीत्वैव चतुर्दिक्षु विनिक्षिपेत् ।
'अयन्ते योनि' रिति च महादीपे विनिक्षिपेत् ॥ ४३ ॥

महादीपे प्रज्वलिते देवेशं प्रणमेन्मुहुः ।
दीपदर्शनफलम्　सर्वपापानि नश्यन्ति आयुः कीर्तिश्च वर्धते ॥ ४४ ॥

तद्दीपदर्शनात्सद्यः सर्वान् कामानवाप्नुयात् ।
तद्दीपस्योपशमने देवेशं नाययेद्बुधः ॥ ४५ ॥

ग्रामं प्रदक्षिणीकृत्य नीराजनमथाऽचरेत् ।
जीवस्थाने प्रतिष्ठाप्य पूजयेत्पुरुषोत्तमम् ॥ ४६ ॥

प्रभूतञ्च निवेद्यैव मुखवासं निवेदयेत् ।
एवं यः कुरुते भक्त्या कृत्तिकादीपमुत्तमम् ॥ ४७ ॥

राज्यकामो लभेद्राज्यं धनकामो लभेद्धनम् ।
श्रीकाम आप्नुयात्सम्पदायुः कीर्तिं समश्नुते ॥ ४८ ॥

सर्वैश्वर्यमवाप्नोति विष्णोस्सायुज्यमाप्नुयात् ।
सुगन्थतैल समर्पणोत्सवः
अतः परं प्रवक्ष्यामि ज्येष्ठायामुत्सवक्रमम् ॥ ४९ ॥

ज्येष्ठे मासि सुसम्प्राप्ते दिने ज्येष्ठर्क्षसंयुते ।
विष्णवे तु विशेषेण गन्धवत्तैलमाहरेत् ॥ ५० ॥

तत्क्रमं सम्प्रवक्ष्यामि शृणुध्वं मुनिसत्तमाः ।
यागशालां प्रकल्प्यैव सर्वालङ्कारसंयुताम् ॥ ५१ ॥

सभ्यञ्च पौण्डरीकञ्च कारयित्वा सलक्षणम् ।
तद्दिनस्य तु पूर्वेद्युः तृतीये पञ्चमेऽपि वा ॥ ५२ ॥

सप्तमे नवमे वाऽपि अङ्कुरार्पणमारभेत् ।
आघारं विधिवत्कृत्वा सर्वं कार्यमतः परम् ॥ ५३ ॥

वेद्या उत्तरपार्श्वे तु भूम्यामवटमाचरेत् ।
चतुस्तालप्रमाणेन विस्तृतं निम्नमेव च ॥ ५४ ॥

निम्ने तु विन्यसेद्भाण्डं द्विद्रोणपरिमाणकम् ।
'भूः प्रतिष्ठित्यै' मन्त्रेण निम्ने भाण्डं सुनिक्षिपेत् ॥ ५५ ॥

मलयागुरुदारूणि देवदारुतरूद्भवम् ।
यानि वासितदारूणि देवयोग्यानि तानि वै ॥ ५६ ॥

गुग्गुलुञ्च समाहृत्य मर्दयित्वा पृथक् पृथक् ।
विष्णुगायत्रिमन्त्रेण भाण्डे द्रव्याणि निक्षिपेत् ॥ ५७ ॥

शरावेणापिधायाथ मृदा च परिलेपयेत् ।
गोकरीषाणि काष्ठानि तस्योपरि विनिक्षिपेत् ॥ ५८ ॥

मन्दाग्निना च सुपचेद्यावत्तैलागमो भवेत् ।
पक्त्वा युक्त्या च यत्नेन तैलमाहृत्य तत्क्षणात् ॥ ५९ ॥

वासितक्वाथवस्तूनि यानि तानि बहिः क्षिपेत् ।
उत्पूय तैलं तद्भाण्डं धान्यपीठे सुसन्न्यसेत् ॥ ६० ॥

यथोक्तेनैव मन्त्रेण तन्तुना परिवेष्टयेत् ।
पितॄन् सोमं तथाऽभ्यर्च्य वनस्पतिमतः परम् ॥ ६१ ॥

समावाह्य च तैले तानर्घ्यान्तमभिपूजयेत् ।
वैष्णवं विष्णुसूक्तञ्च नरसूक्तं तथैव च ॥ ६२ ॥

जप्त्वा तु विष्णुगायत्रीमष्टोत्तरसहस्रकम् ।
आचार्यस्त्वरितो गत्वा सभ्याग्नेश्च समीपतः ॥ ६३ ॥

द्वितालविस्तृतं वृत्तं चतुरङ्गुलमुन्नतम् ।
कूर्माकृतिवदाकारं बिल्वाद्यैः परिकल्पितम् ॥ ६४ ॥

प्रतिष्ठायामुत्सवे च जपहोमार्चनादिषु ।
सर्वकार्येषु विहितं कूर्मपीठं समास्थितः ॥ ६५ ॥

समाहितः प्रसन्नात्मा सभ्याग्नौ जुहुयात्ततः ।
कूर्मपीठविहीनन्तु कर्म तन्निष्फलं भवेत् ॥ ६६ ॥

वैष्णवं विष्णुसूक्तञ्च नरसूक्तं तथैव च ।
जुहुयात्सर्वदैवत्यं पारमात्मिकमेव च ॥ ६७ ॥

महाव्याहृतिभिर्हुत्वा अन्तहोमं समाचरेत् ।
परिषिच्य ततोऽब्जाग्निं महाशान्तिं हुनेत्क्रमात् ॥ ६८ ॥

पूर्णाहुतिं ततो हुत्वा अन्तहोमं समाचरेत् ।
प्रणिध्यां शङ्खपात्रे वा अग्निमारोप्य बुद्धिमान् ॥ ६९ ॥

तैलस्यालेपनात्पूर्वं ध्रुवेऽग्निमवरोपयेत् ।
स्रग्वस्त्रकुण्डलाद्यैश्च पूजयेत्परिचारकम् ॥ ७० ॥

संवेष्ट्य नववस्त्रेण शिरश्च मुनिपुङ्गवाः ।
तन्मूर्ध्नि तैलभाण्डन्तं विनिक्षिप्य च यत्नतः ॥ ७१ ॥

शनैश्शनैस्समागत्य सर्ववाद्यसमन्वितम् ।
सर्वालङ्कारसंयुक्तं ब्रह्मघोषसमन्वितम् ॥ ७२ ॥

वीथीं प्रदक्षणीकृत्य देवस्याग्रे विनिक्षिपेत् ।
अर्घ्यान्तमभिपूज्यैव देवेशं सम्प्रणम्य च ॥ ७३ ॥

वैष्णवं विष्णुसूक्तञ्च नरसूक्तं जपेत्क्रमात् ।
तैलेन लेपयेद्देवमाचार्यस्त्वरितस्तदा ॥ ७४ ॥

उभे देव्यौ तथैवात्र तत्तन्मन्त्रेण लेपयेत् ।
सर्वेषां परिवाराणां तत्तन्मन्त्रेण लेपयेत् ॥ ७५ ॥

आचार्यस्त्वरितो गत्वा औत्सवस्य समीपतः ।
'परिलिखित' मित्युक्त्वा कवचं परिशोधयेत् ॥ ७६ ॥

जीर्णे भिन्ने च कवचे सन्धानं शिल्पिना चरेत् ।
प्रक्षाल्य पञ्चगव्येन जलेन परिशोधयेत् ॥ ७७ ॥

'विष्णोर्नुक' मिति प्रोच्य सन्दध्यात्कवचं पुनः ।
दृढीकृत्य यथापूर्वं यत्नेन परिशोधयेत् ॥ ७८ ॥

सहस्रकलशैर्देवं स्नापयित्वा यथाविधि ।
नित्यपूजाविधानेन देवमाराध्य पूर्ववत् ॥ ७९ ॥

महाहविः प्रभूतं वा पायसञ्च निवेदयेत् ।
'क्षम' स्वेति च मन्त्रेण प्रणमेत्पुरुषोत्तमम् ॥ ८० ॥

ब्रह्मघोषञ्च कृत्वा तु दद्यादाचार्यदक्षिणाम् ।
दिने पक्षे च मासे च तथा संवत्सरे चरेत् ॥ ८१ ॥

यद्यद्रूपं तथा ध्यायेतत्तद्बिम्बेषु योजयेत् ।
तस्मात्सर्वप्रयत्नेन बिम्बरक्षान्तु कारयेत् ॥ ८२ ॥

कार्तिक्यामुत्सवे चैव ज्येष्ठायामुत्सवे तथा ।
आषाढ्यामुत्सवे चैव श्रावण्यामुत्सवे तथा ॥ ८३ ॥

चैत्र्यामप्युत्सवे चैव उपरागयुते तथा ।
अयुतश्चोत्सवं प्रोक्तं विष्णोरमिततेजसः ॥ ८४ ॥

उत्सवे देवदेवस्य उपरागो न दोषकृत ।
उपरागे भये चैव प्रतिष्ठान्तु न कारयेत् ॥ ८५ ॥

एवं यः कुरुते भक्त्या कार्यं रोगप्रणाशनम् ।
सर्वान् कामानवाप्यैव विष्णोस्सायुज्यमाप्नुयात् ॥ ८६ ॥

गृहार्चादोषनिष्कृतिः अतः परं प्रवक्ष्यामि गृहार्चादोषनिष्कृतिम् ।
प्रातःकालार्चने हीने सायं द्विगुणमर्चनम् ॥ ८७ ॥

सायं हीने तथा प्रातराद्वादशदिनावधि ।
एवमेव क्रमेणैव वर्धयेद्द्विगुणं सुधीः ॥ ८८ ॥

समभ्यर्च्य निवेद्यैव ब्राह्मणानपि भोजयेत् ।
द्वादशाहार्चने हीने सूक्तैः पौरुषवैष्णवैः ॥ ८९ ॥

हुत्वा पूर्ववदभ्यर्च्य द्विगुणञ्च निवेदयेत् ।
मासहीनं यदि भवेन्मूलहोमसमन्वितम् ॥ ९० ॥

स्नपनं सप्तकलशैः कुर्यात्संवत्सरावधि ।
संवत्सरार्चने हीने प्रतिष्ठां पुनराचरेत् ॥ ९१ ॥

पर्यग्निपञ्चगव्याभ्यां शुद्धिं कृत्वा यथाविधि ।
औपासनाग्निमाधाय सर्वदैवत्यवर्जितम् ॥ ९२ ॥

महाशान्तिं सकृद्धुत्वा प्रतिष्ठां पुनराचरेत् ।
स्पृष्टे च प्रतिलोमाद्यैः पतितैर्वेददूषकैः ॥ ९३ ॥

पारमात्मिकवर्जञ्च हुत्वा स्नपनमाचरेत ।
दीक्षितैरनुलोमैश्च द्विजैराशौचसंयुतैः ॥ ९४ ॥

शूद्रैः स्पृष्टे प्रविष्टेऽन्तः पूर्वोक्तैरन्त्यजातिभिः ।
संस्नाप्य सप्तकलशैः विष्णुसूक्तञ्च पौरुषम् ॥ ९५ ॥

धातादिमूलहोमञ्च 'यद्देवा' दींस्तथैव च ।
हुत्वाऽभ्यर्च्य निवेद्यैव ब्राह्मणानपि भोजयेत् ॥ ९६ ॥

सर्वेषामपि देवानां गृहार्चादोषनिष्कृतौ ।
कल्पस्साधारणस्तेषां मन्त्र एव विशिष्यते ॥ ९७ ॥

प्रायश्चित्तक्रियायान्तु कालापेक्षा न विद्यते ।
तस्मात्सर्वप्रयत्नेन निष्कृतिं शीघ्रमाचरेत् ॥ ९८ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे शमीपूजाप्रकार कृत्तिकादीपप्रयोग सुगन्धितैलहरणोद्वर्तनविधानं नाम द्वात्रिंशोऽध्यायः ।

---

# त्रयस्त्रिंशोऽध्यायः

पञ्चामृत-
स्नपनविधिः

अथ पञ्चामृतस्नानं देवदेवस्य तु प्रियम् ।
विष्णुपञ्चदिनेष्वेवमयने विषुवद्वये ॥ १ ॥

चन्द्रसूर्योपरागे च व्यतीपाते विशेषतः ।
प्रतिष्ठान्ते चोत्सवान्ते सर्वशान्त्यर्थमेव च ॥ २ ॥

पञ्चामृताभिषेकस्तु देवदेवप्रियङ्करः ।
देवस्य पुरतः सम्यक् गोमयेनोपलिप्य च ॥ ३ ॥

यवैर्वा तण्डुलैर्वाऽत्र द्विहस्तायतविस्तृतम् ।
स्थण्डिलं कल्पयित्वाऽष्टदलं पद्मञ्च कल्पयेत् ॥ ४ ॥

पद्मस्योर्ध्वे तु पुष्पाणि प्रक्षिपेत्तुलसीन्तु वा ।
पद्माकारस्य मध्ये तु प्रणवं विलिखेद्बुधः ॥ ५ ॥

प्रागादीशानपर्यन्तं दलेष्वष्टाक्षरं लिखेत् ।
कलशांश्च समाहृत्य तन्तुना वेष्टयेद्गुरुः ॥ ६ ॥

पञ्चामृतद्रव्यम्

गुडं क्षीरं दधि घृतं मधु सर्वं समन्वितम् ।
पञ्चामृतन्तु विज्ञेयं स्नानार्थं शार्ङ्गिणः प्रियम् ॥ ७ ॥

पञ्चाभिषेककलशान् पूरयेदमृतेन वै ।
गुडसम्मिश्रितं तोयं पद्ममध्ये सुविन्यसेत् ॥ ८ ॥

क्षीरसम्पूर्णकलशं प्राच्यां पद्मदले न्यसेत् ।
दधिसम्पूर्णकलशं विन्यसेद्दक्षिणे दले ॥ ९ ॥

पश्चिमे दधिपात्रन्तु उत्तरे च मधु न्यसेत् ।
आग्नेयादिदलेष्वेवमुपस्नानानि विन्यसेत् ॥ १० ॥

मध्ये चैकमुपस्नानं विन्यसेत्तु विचक्षणः ।
चन्द्रश्चाथर्ववेदश्च यजुस्साम ऋचं तथा ॥ ११ ॥

मध्यादीशानपर्यन्तमुपस्थाने तथैव च ।
आदित्यमश्विनौ चैव रुद्रश्चैव तु वत्सरान् ॥ १२ ॥

प्रागादि पञ्चवायूंश्च मध्यादिषु समाह्वयेत् ।
देवदेवं समादाय स्थापयेदथ पश्चिमे ॥ १३ ॥

पाद्याद्यैरर्चयेद्विद्वान् स्नपनोक्तविधानतः ।
'सोमं राजान' मित्युक्त्वा 'शन्नो देवी' रिति क्रमात् ॥ १४ ॥

'इषे त्वोर्जे' त्वेति जपन् 'अग्न आयाहिवी' ति च ।
'अग्निमील' इति प्रोच्य देवेशं स्नापयेद्बुधः ॥ १५ ॥

'वारीश्चतस्र' इत्युक्त्वा सर्वोपस्नानमाचरेत् ।
एवं पञ्चामृतस्नानं सर्वशान्तिकरं परम् ॥ १६ ॥

राजराष्ट्रर्द्धिजननं सर्वाभीष्टफलप्रदम् ।
पञ्चगव्यविधिः
अतः परं प्रवक्ष्यामि पञ्चगव्यविधिं हरेः ॥ १७ ॥

तण्डुलोपरि देवाग्रे स्थण्डिले चतुरश्रके ।
पद्ममष्टदलं कृत्वा तन्मध्ये प्रणवं न्यसेत् ॥ १८ ॥

प्रागादीशानपर्यन्तं दलेष्वष्टाक्षरं न्यसेत् ।
तत्पद्मं कुशपुष्पाद्यैरलङ्कृत्य तथोपरि ॥ १९ ॥

पञ्चगव्यलक्षणम्
कपिलाया वरं क्षीरं श्वेताया दधि शस्यते ।
रक्तायाश्च घृतं ग्राह्यं कृष्णाया गोमयं तथा ॥ २० ॥

गोमूत्रं नीलवर्णायाः पञ्चगव्यं शुभप्रदम् ।
प्रस्थपादं घृतञ्चैव दधि तद्द्विगुणं स्मृतम् ॥ २१ ॥

त्रिगुणं क्षीरमित्युक्तं गोमयन्तु चतुर्गुणम् ।
षड्गुणञ्चैव गोमूत्रं पञ्चगव्यं सुयोजयेत् ॥ २२ ॥

पतितं गोमयं श्रेष्ठं गोमूत्रञ्चाप्यपातितम् ।
धारोष्णं क्षीरमादेयं सद्यस्तप्तं घृतं तथा ॥ २३ ॥

दधि चाप्यनतीताहमेतद्द्रव्यस्य लक्षणम् ।
मध्ये पदे तु गोमूत्रं दधि पूर्वं यमे घृतम् ॥ २४ ॥

क्षीरञ्च पश्चिमे सौम्ये गोमयं स्थापयेत्क्रमात् ।
आग्नेय्यां गन्धतोयञ्च नैर्ऋत्यामाम्लकं तथा ॥ २५ ॥

वायव्यामपि हारिद्रमैशान्याञ्च कुशोदकम् ।
एवं क्रमेण विन्यस्य अधिदेवांस्समर्च्चयेत् ॥ २६ ॥

अधिदेवाः

गोमूत्रे जाह्नवी प्रोक्ता यजुर्वेदश्च दध्नि वै ।
सामवेदो घृते प्रोक्तः क्षीरे ऋग्वेद एव च ॥ २७ ॥

अथर्वा गोमये चैव अभ्यर्च्या अष्टविग्रहैः ।

संयोजनम्

गायत्र्या चैव गोमूत्रं 'दधि क्रा' व्णेति वै दधि ॥ २८ ॥

आज्यं 'शुक्रम' सीत्युक्त्वा 'आप्याय' स्वेति वै पयः ।
गोमयं 'गन्धद्वा' रेति 'देवस्य त्वा' कुशोदकम् ॥ २९ ॥

एवं क्रमेण संयोज्य चतुर्वेदादिमन्त्रकैः ।

स्नपनप्रकारः

स्नापयेत्पञ्चगव्येन आम्लेन च सुशोधयेत् ॥ ३० ॥

'सिनीवा' लीति हारिद्रैः गन्धैः 'भूरानिले' ति च ।
स्वादुशीतलतोयेन नरसूक्तेन वै हरिम् ॥ ३१ ॥

संस्नाप्य वस्त्राभरणैरलङ्कृत्य निवेदयेत् ।
अभिषिक्तावशिष्टं तदमृतं गव्यमेव वा ॥ ३२ ॥

प्राशयित्वा महापापैरुपपापैः प्रमुच्यते ।
ऐहिकान् सकलान् भोगान् भुक्त्वा सायुज्यमाप्नुयात् ॥ ३३ ॥

शुध्यर्थं पञ्चगव्यसाधनम्

अतः परं प्रवक्ष्यामि पञ्चगव्यस्य लक्षणम् ।
देहबेरालयादीनां शुद्ध्यर्थं यत्प्रयुज्यते ॥ ३४ ॥

सूतसात्त्वतचण्डालसूतिकादिप्रवेशने ।
पञ्चगव्यन्तु संयोज्यं प्रोक्षयेत्तेन मन्दिरम् ॥ ३५ ॥

पञ्चगव्यानि सङ्गृह्य पञ्चपात्रेषु पूरयेत् ।
देवाग्रे मण्डपे चैव यज्ञवाटे तथैव च ॥ ३६ ॥

स्वगृहस्याङ्गणे चैव गोमयेनोपलिप्य च ।
तन्मध्ये षोडशदलं रङ्गवल्लीञ्च कारयेत् ॥ ३७ ॥

द्रोणार्धतण्डुलैः पूर्णं कांस्यपात्रं प्रगृह्य च ।
तन्मध्ये विलिखेत्पद्मं दलपञ्चकसंयुतम् ॥ ३८ ॥

पात्राणि पञ्चगव्यानां विन्यसेत्तद्दलेषु च ।
मध्य आज्यं प्रतिष्ठाप्य पूर्वस्मिन् दधि निक्षिपेत् ॥ ३९ ॥

क्षीरन्तु दक्षिणे चैव गोमयं पश्चिमे तथा ।
उत्तरे चैव गोमूत्रं क्रमेण स्थापयेद्बुधः ॥ ४० ॥

घृते तु सामवेदञ्च दध्नि ऋग्वेदमेव च ।
क्षीरे अथर्ववेदञ्च गोमये स्कन्दमेव च ॥ ४१ ॥

शर्वं देवञ्च गोमूत्रे अधिदेवान् समर्चयेत् ।
आज्यं 'शुक्रम' सीत्युक्त्वा षोडशांशं प्रगृह्य च ॥ ४२ ॥

'दधिक्राव्ण्ण' इत्युक्त्वा क्षिप्त्वा तद्द्विगुणं दधि ।
'आप्याय' स्वेति मन्त्रेण त्रिगुणं क्षीरमाहरेत् ॥ ४३ ॥

'गन्धद्वा' रेति मन्त्रेण गोमयञ्च चतुर्गुणम् ।
षड्गुणञ्चैव गोमूत्रं गायत्र्या तत्र निक्षिपेत् ॥ ४४ ॥

'वसोः पवित्र' मित्युक्त्वा एकीकुर्यात्तु पञ्चकम् ।
पञ्चगव्याधिदेवस्य मूर्तिमन्त्रं वदाम्यहम् ॥ ४५ ॥

'पञ्चगव्यं शिवञ्चेशमव्यक्त' मिति पूजयेत् ।
जपित्वा विष्णुसूक्तञ्च 'रुद्रमन्यं—त्र्यम्बकम्' ॥ ४६ ॥

प्रोक्षणम् 'अणोरणीया' नित्युक्त्वा 'आपो हि ष्ठा' दिभिस्तथा ।
प्रोक्षणैरनुवाकैश्च प्रोक्षयेत्सर्वमन्दिरम् ॥ ४७ ॥

प्राशनम्

'शन्नो देवी ' रिति प्रोच्य पञ्चगव्यञ्च त्रिः पिबेत् ।
पञ्चगव्यं तथा पीत्वा पूतो भवति निश्चयः ॥ ४८ ॥

आचार्यकरदत्तं तत्पञ्चगव्यं पिबेद्बुधः ।
प्रतिष्ठार्थञ्चोत्सवार्थमन्यकार्यार्थमेव च ॥ ४९ ॥

वैखानसकुले जातं निषेकादिक्रियान्वितम् ।
उक्तलक्षणसम्पन्नं श्रेष्ठं ज्ञानसमन्वितम् ॥ ५० ॥

गृहस्थं कर्मकुशलं ब्रह्मचारिणमेव वा ।
वानप्रस्थमथो वाऽपि वरयेद्गुरुमुत्तमम् ॥ ५१ ॥

रक्षाबन्धनकार्यादीन् कारयेदिति शासनम् ।
आचार्यमृत्विजः कुर्याद्वनस्थब्रह्मचारिणौ ॥ ५२ ॥

तयोरपि न दोषः स्यादिति पूर्वजशासनम् ।
आचार्यकरदत्तन्तु त्रिः पिबेत्पञ्चगव्यकम् ॥ ५३ ॥

फलश्रुतिः

पञ्चगव्यं तथा पीत्वा सर्वपापैः प्रमुच्यते ।
अङ्कुरार्पणकादूर्ध्वमारम्भदिवसादधः ॥ ५४ ॥

दीक्षितानामाशौचाभावकथनम्

आचार्यस्यर्त्विजाञ्चैव सूतकं प्रेतकं तथा ।
आशौचं यदि सम्प्राप्तं कर्ममध्ये विशेषतः ॥ ५५ ॥

स्नानेनैव विशुद्धिः स्यात्स्नात्वा कर्म समाचरेत् ।
दीक्षितानां व्रतस्थानां यतीनां ब्रह्मचारिणाम् ॥ ५६ ॥

आशौचं न भवेत्तेषामुदके पद्मपत्र वत् ।
दीक्षितोऽप्येकपुत्रस्तु मातापित्रोर्गुरोर्मृतौ ॥ ५७ ॥

संस्कृत्य शालामागत्य देवकार्यं समाचरेत् ।
देवकार्यसमाप्तौ तु प्रेतकार्यं समाचरेत् ॥ ५८ ॥

प्रेतकार्यसमाप्तौ तु देवकार्यं समाचरेत् ।
पूर्वन्तु देवकार्यं स्यात्प्रेतकार्यमनन्तरम् ॥ ५९ ॥

दिने दिने च कर्तव्यमिति शातातपोऽब्रवीत् ।
देवकार्यस्य मध्ये चेदाचार्यमरणं यदि ॥ ६० ॥

प्राणोत्क्रमणकाले तु रक्षाबन्धं विसृज्य च ।
तत्पुत्रादिषु तद्बद्ध्वा शीघ्रं कर्म प्रवर्तयेत् ॥ ६१ ॥

तत्पुत्रादिष्वलब्धेषु देवहस्ते तु बन्धयेत् ।
अन्यमाचार्यमाहूय कार्यशेषं समापयेत् ॥ ६२ ॥

बन्धनन्तु न कर्तव्य सर्वकर्म समाचरेत् ।
अज्ञानादन्यहस्ते तु बन्धयेद्यदि मूढधीः ॥ ६३ ॥

तत्कर्म निष्फलं प्रोक्तं राजराष्ट्रविनाशनम् ।
शुद्धस्नपनविधिः अतः परं प्रवक्ष्यामि शुद्धस्नानविधिं हरेः ॥ ६४ ॥

मण्डले त्वभिषेकार्थं बहिः सोपानमण्डपे ।
संस्थापयेद्देवदेवं स्नपनालय एव वा ॥ ६५ ॥

आस्थानमण्डपे वाऽथ कुर्याच्छुद्धाभिषेचनम् ।
गोमयेनोपलिप्यैव मण्डपं चतुरश्रकम् ॥ ६६ ॥

पञ्चवर्णैरलङ्कृत्य वितानस्तम्भवेष्टनैः ।
मुक्तादामावलम्बैश्च पुष्पदामावलम्बनैः ॥ ६७ ॥

पताकाभिर्ध्वजैश्चैव अलङ्कृत्य च सर्वतः ।
सर्वत्र दीपानारोप्य तन्मध्ये सोत्तरच्छदम् ॥ ६८ ॥

विष्टरं सुस्थिरं न्यस्य पूजकस्सुसमाहितः ।
'भूः प्रपद्य' इति देवेशं प्रणम्यैवानुमान्य च ॥ ६९ ॥

'परं रं' हेति मन्त्रेण पीठादादाय चात्वरः ।
स्वस्तिसूक्तं समुच्चार्य शाकुनं सूक्तमेव च ॥ ७० ॥

शङ्खघोषयुतं नीत्वा स्थापयेदत्र विष्टरे ।
'प्रतद्विष्णुःस्तवत' इति स्थापयित्वा समाहितः ॥ ७१ ॥

स्नपनाङ्गोपचाराः

'नारायणाय वि' द्मेति पादपुष्पाणि विन्यसेत् ।
पाद्यमाचमनं दत्वा पूर्वोक्तविधिना ततः ॥ ७२ ॥

'अन्नाद्या' येति मन्त्रेण दन्तधावनमाचरेत् ।
तेनैव जिह्वाशुद्धिञ्च मुखप्रक्षालनं तथा ॥ ७३ ॥

पुनराचमनं दत्वा प्लोतेन परिमृज्य च ।
मुखवासं निवेद्यैव प्रणम्यैवानुमान्य च ॥ ७४ ॥

देवस्यापरभागं तदाच्छाद्यैव गलादधः ।
देवस्य पश्चिमे स्थित्वा गुरुस्तद्भावभावितः ॥ ७५ ॥

'अतो देवा' दि मन्त्रांश्च 'सोमं राजान' मुच्चरन् ।
तैलेनाभ्यञ्जनं कृत्वा केशानाबद्ध्य वै पुनः ॥ ७६ ॥

सुगन्धिमाल्याऽऽवेष्ट्य पाणी प्रक्षाल्य वै ततः ।
ललाटात्पादपर्यन्तं तैलेनाभ्यज्य मर्दयेत् ॥ ७७ ॥

शालिपिष्टेन देवाङ्गं विमृजेच्चन्दनेन वा ।

तैलसमर्पणवर्ज्यकालाः

अष्टम्याञ्च नवम्याञ्च चतुर्दश्याञ्च पर्वणि ॥ ७८ ॥

अभ्यञ्जनञ्च दन्तानां धावनं वर्जयेत्तथा ।
ततो देवं समासाद्य स्नानवेद्यान्तु पूर्ववत् ॥ ७९ ॥

प्राङ्मुखं स्थापयेत्सम्यक् तमिन्दुमुखमेव वा ।
पाद्यमाचमनं दत्वा प्रणम्यैवानुमान्य च ॥ ८० ॥

'परिलिखित' मिति मन्त्रेण आम्लेन परिशोधयेत् ।
तेनैव केशशुद्धिञ्च कुर्यादामलकादिभिः ॥ ८१ ॥

'वारीश्चतस्र' इत्युक्त्वा वारिणा स्नापयेत्पुनः ।
'नमो वरुण' इत्युक्त्वा स्नापयेत्पुष्पवारिणा ॥ ८२ ॥

'सिनीवा' लीति देवाङ्गमालिप्य च हरिद्रया ।
'भूरानिलय' इत्युक्त्वा स्नापयेद्गन्धवारिणा ॥ ८३ ॥

पुनराचमनं दत्वा वस्त्रञ्चैवोत्तरीयकम् ।
दद्याद्यज्ञोपवीतञ्च तत्तन्मन्त्रमुदीरयन् ॥ ८४ ॥

दत्वा चानामिकाङ्गुल्योः पवित्रे परहस्तयोः ।
अष्टोपचारैरभ्यर्च्य वेदैः संस्तूय च क्रमात् ॥ ८५ ॥

सहस्रधारास्नापनक्रमः

शङ्खपद्माङ्कपात्राभ्यामावर्जितजलेन च ।
सहस्रधारापात्रेण पौरुषं सूक्तमुच्चरन् ॥ ८६ ॥

नारायणानुवाकेन स्नापयित्वा ततः परम् ।
देव्योश्च तत्तन्मन्त्राभ्यां तत्तन्मन्त्रैरथापि वा ॥ ८७ ॥

संस्नाप्य चन्दनं दत्वा प्लोतेन परिमृज्य च ।
वस्त्रखण्डेन धौतेन सूक्ष्मेनाच्छाद्य मन्त्रवित् ॥ ८८ ॥

कल्पयित्वोत्तरासङ्गमलकानपि शोधयेत् ।
पुनराचमनं दत्वा दद्यात्पुष्पाणि पादयोः ॥ ८९ ॥

ततो देवं समादाय स्थापयेत्पूर्वविष्टरे ।

अलङ्करणप्रकारः

सूक्ष्मकौशेयवस्त्रेण चित्रकक्ष्यायुतेन च ॥ ९० ॥

अलङ्कृत्य च देवेशं यथा चक्षुर्मनःप्रियम् ।
विसृज्यालकबन्धञ्च धूपं दत्वा यथोचितम् ॥ ९१ ॥

उत्तरीयोपवीताभ्यां भूषणैरपि भूषयेत् ।
आसनादिभिरभ्यर्च्य दीपान्ताचमनान्तकैः ॥ ९२ ॥

नित्यार्चनोक्तविधिना दर्पणादीन् यथाविधि ।
राजवद्विग्रहांश्चापि तत्तन्मन्त्रैः प्रयोजयेत् ॥ ९३ ॥

मालादानञ्च कृत्वा तु मधुपर्कं निवेद्य च ।
'अथावनीद' मन्त्रेण मण्डलं चतुरश्रकम् ॥ ९४ ॥

कृत्वाऽत्रास्तीर्य धौतञ्च पत्रं प्रागुत्तराग्रकम् (?) ।
प्रागग्रमुत्तराग्रं वा सन्न्यसेत्कदलीभवम् ॥ ९५ ॥

'आ मा वाजस्य' मन्त्रेण क्षालयेत्प्रोक्षयेत्तु वा ।
हविःपात्राधिपं सूर्यं तस्य पार्श्वे समर्चयेत् ॥ ९६ ॥

'देवस्य' त्वेति मन्त्रेण घृतेनाप्यभिघार्य च ।
'अमृतोपस्तरणम' सीति हविः प्रक्षिप्य तत्र वै ॥ ९७ ॥

फलं गुडोपदंशादीन् दधि क्षीरमथापि वा ।
तत्र निक्षिप्य गायत्र्या देवेशायेति संस्मरन् ॥ ९८ ॥

तस्यैव परितो दिक्षु प्रागादिषु यथाक्रमम् ।
पायसान्नेन चत्वारि शुद्धान्नेन हवींषि च ॥ ९९ ॥

पात्रैः पञ्चभिरादाय त्रिपादोपरि विन्यसेत् ।
'यत्ते सुसीम' इत्युक्त्वा घृतमास्राव्य तत्र वै ॥ १०० ॥

अभिमृश्यान्नसूक्तेन दद्यादाचमनं पुनः ।
'तदस्य प्रिय' मित्युक्त्वा 'सुभूः स्वय' मुदीर्य च ॥ १०१ ॥

हविर्निवेदयेद्विष्णोः प्रभूतं भक्तिसंयुतम् ।
अमन्त्रकं द्वितीयञ्च तृतीयञ्च निवेदयेत् ॥ १०२ ॥

अर्चकस्य मनस्तृप्तिर्यावता सन्निवेदयेत् ।
चतुर्दिक्षु त्रिपादोर्ध्वे न्यस्तान्यपि हवींषि च ॥ १०३ ॥

मूर्तीनां पुरुषादीनां तत्तन्मन्त्रैर्निवेदयेत् ।
आज्येन साज्यचरुणा होमं हुत्वा यथाविधि ॥ १०४ ॥

'इदं विष्णु' रिति प्रोच्य पानीयं स्वादु शीतलम् ।
प्रस्थपूर्णेन पात्रेण पञ्चधैव निवेदयेत् ॥ १०५ ॥

पुनराचमनं दत्वा मुखवासं निवेदयेत् ।
अपूपान् पृथुकान् लाजान् कदल्यादिफलानि च ॥ १०६ ॥

निवेद्याष्टाक्षरेणैव नारिकेलफलानि च ।
पुनराचमनं दत्वा मुखवासं निवेदयेत् ॥ १०७ ॥

परीत्य मन्दिरं पश्चात्सर्वालङ्कारसंयुतम् ।
स्थापयेज्जीवस्थाने तु 'भूरसि भू' रिति ब्रुवन् ॥ १०८ ॥

विना राजोपचारैश्च प्रभूतहविषा तथा ।
स्थापयित्वा समभ्यर्च्य दत्वा पञ्चविधं हविः ॥ १०९ ॥

अर्चापीठे न्यसद्देवमिदं मध्यममीरितम् ।
नित्याभिषेचनान्ते च देवान् संस्थाप्य तत्र च ॥ ११० ॥

पाद्यमाचमनं दत्वा कृत्वा वै दन्तधावनम् ।
दर्पणं दर्शयित्वा तु मुखवासं निवेद्य च ॥ १११ ॥

तैलेनाभ्यज्य चाम्लाद्यैः शोधयित्वाऽभिषिच्य च ।
हरिद्रयाऽङ्गमालिप्य गन्धोदैरभिषिच्य च ॥ ११२ ॥

अष्टोपचारैरभ्यर्च्य स्नापयित्वा च पूर्ववत् ।
जीवस्थाने प्रतिष्ठाप्य वस्त्रेणाच्छाद्य पूर्ववत् ॥ ११३ ॥

आसनादिभिरभ्यर्च्य दीपान्ताचमनान्तकैः ।
शुद्धान्नमेव देवाय हविर्दद्यात्समन्त्रकम् ॥ ११४ ॥

पानीयाचमनं दत्वा मुखवासं निवेदयेत् ।
एष एव विशेषः स्यादन्यत्सर्वञ्च पूर्ववत् ॥ ११५ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
पञ्चामृतस्नान पञ्चगव्यविधि शुद्धस्नानविधि कथनं नाम
त्रयस्त्रिंशोऽध्यायः ।

# चतुस्त्रिंशोऽध्यायः



गोदाप्रतिष्ठा

अतः परं प्रवक्ष्यामि गोदायाः स्थापनं परम् ।
विष्णोः प्रीतिकरं पुण्यं सर्वकामफलप्रदम् ॥ १ ॥

पुरा बृन्दावने पुण्ये भूमिदेव्यंशसम्भवा ।
विष्णुभक्तिसमायुक्ता विष्णुभोगाभिलाषिणी ॥ २ ॥

द्विभुजा मानुषी भूत्वा हरिं प्राप्तवती स्वयम् ।
गोदेति नाम्ना विख्याता भूमिलोके विशेषतः ॥ ३ ॥

सायुज्यं प्राप्तवत्यन्ते विष्णुना सहचारिणी ।
तत्प्रतिष्ठाक्रमं वक्ष्ये शृणुध्वं मुनिसत्तमाः ॥ ४ ॥

मासर्क्षतिथिवारादिः पूर्वमेव मयोदितः ।
यथोक्तदिवसे कुर्यादङ्कुरार्पणपूर्वकम् ॥ ५ ॥

सम्भाराहरणादीनि कृत्वा चैव प्रयत्नतः ।
भूमिदेवीप्रतिष्ठोक्तं विधिना सर्वमाचरेत् ॥ ६ ॥

अक्ष्युन्मेषं द्वितीयेऽह्नि वास्तुहोमादिकं तथा ।
अधिवासत्रयञ्चापि बिम्बशुद्ध्यर्थमाचरेत् ॥ ७ ॥

पौण्डरीकः प्रधानाग्निः शेषं पूर्ववदाचरेत् ।
कुम्भान् वेद्यां समारोप्य धान्यराशौ तु पूर्ववत् ॥ ८ ॥

पञ्चनिष्कप्रमाणेन प्रतिमास्तेषु निक्षिपेत् ।
नवरत्नानि निक्षिप्य वस्त्रैरावेष्ट्य यत्नतः ॥ ९ ॥

ततो ध्यानसमायुक्तः कुम्भेष्वावाहनं चरेत् ।
जयाद्यप्सरसोऽष्टौ च समभ्यर्च्य निवेदयेत् ॥ १० ॥

कौतुकं पूर्ववद्बद्ध्वा शयने शाययेच्च ताम् ।
सर्वदेवार्चनं कृत्वा वेदानध्यापयेत्ततः ॥ ११ ॥

पौण्डरीकं परिस्तीर्य हौत्रशंसनमाचरेत् ।
हौत्रशंसनवेलायां समाह्वानञ्च मूर्तिभिः ॥ १२ ॥

'गोदां वसुमतीं लक्ष्मीसखीं विष्णुसतीं' विदुः ।
पूर्वोक्तेन विधानेन सर्वकुण्डेषु होमयेत् ॥ १३ ॥

भूमिमन्त्रद्वयेनैव हुनेदष्टोत्तरं शतम् ।
एष एव विशेषस्स्यात्सर्वं पूर्वोक्तवच्चरेत् ॥ १४ ॥

नृत्तगीतादिवाद्यैश्च रात्रिशेषं नयेद्गुरुः ।
ततः प्रभाते धर्मात्मा देवीमुद्धाप्य मन्त्रतः ॥ १५ ॥

कलशैः स्नाप्य पूर्वोक्तैरलङ्कृत्याम्बरादिभिः ।
रत्नन्यासादिकं कृत्वा पीठे संयोज्य मन्त्रवित् ॥ १६ ॥

सुधया वा दृढीकृत्य यजमानयुतो गुरुः ।
शिरसा कुम्भमादाय ग्राममालयमेव वा ॥ १७ ॥

प्रदक्षिणवशान्नीत्वा देवागारं प्रवेशयेत् ।
गुरुं सम्पूज्य विधिना वस्त्राभरणकुण्डलैः ॥ १८ ॥

यथोक्तदक्षिणां दद्याद्देवीप्रीतिकरं भवेत् ।
मुहूर्ते समनुप्राप्ते सम्यगावाहनं चरेत् ॥ १९ ॥

भूमिमन्त्रद्वयेनैव सर्वं पूर्ववदाचरेत् ।
उपचारैस्समभ्यर्च्य प्रभूतं वा महाहविः ॥ २० ॥

निवेदयित्वा विधिना ब्रह्मघोषञ्च कारयेत् ।
सहस्रविप्रभुक्तिञ्च दशदानञ्च कारयेत् ॥ २१ ॥

एवं यः कुरुते भक्त्या गोदास्थापनमत्वरः ।
सर्वान् कामानवाप्यैव विष्णुसायुज्यमाप्नुयात् ॥ २२ ॥

पादुकाप्रतिष्ठा

अतः परं प्रवक्ष्यामि पादुकास्थापनं परम् ।
हेमराजिततात्राम्रादिद्रव्यैः कृत्वा सलक्षणम् ॥ २३ ॥

पादुकां देवदेवस्य पादयोग्यां सरत्नकाम् ।
सर्वलक्षणसंयुक्तां कारयित्वाऽतिसुन्दरम् ॥ २४ ॥

यजमानो विशेषेण पादुकास्थापनं क्रमात् ।
कारयित्वा यथाशास्त्रं देवदेवस्य पादयोः ॥ २५ ॥

योजयेत्सर्वकामांश्च लभेत्कर्ता न शंसयः ।
अन्यथा देवदेवस्य प्रीणनं न भवेद्ध्रुवम् ॥ २६ ॥

तस्मात्कर्ता यथाशक्ति कारयित्वा ददेन्मुदा ।
कृत्वाऽङ्कुरार्पणं पूर्वमाचार्यवरणादिकम् ॥ २७ ॥

ऋत्विजां वरणं सर्वं प्रतिष्ठोक्तवदाचरेत् ।
वास्तुहोमं ततो हुत्वा निष्कत्रयसुवर्णकैः ॥ २८ ॥

वास्तुपुरुषं समावाह्य शुद्धिं कृत्वा तु तस्य च ।
अधिवासञ्च कृत्वा तु पूर्वोक्तविधिना ततः ॥ २९ ॥

कुम्भं संसाध्य विधिना निष्कहेम्ना पृथक्पृथक् ।
अष्टमङ्गलसंयुक्तं पञ्चायुधयुतं पृथक् ॥ ३० ॥

पादुकायाः स्वरूपञ्च कृत्वा निष्कत्रयेण च ।
वैष्णवेन विनिक्षिप्य कुम्भमध्ये विचक्षणः ॥ ३१ ॥

कलशैस्सप्तभिस्स्नानं सम्यक्कृत्वा सलक्षणम् ।
आघारं विधिवत्कृत्वा हौत्रं तत्र प्रशंस्य च ॥ ३२ ॥

शेषं तदधिदेवञ्च समावाह्यैव मूर्तिभिः ।
निरुप्याऽज्याहुतीर्हुत्वा शयनञ्च प्रकल्प्य च ॥ ३३ ॥

वैष्णवं विष्णुसूक्तञ्च पौरुषं सूक्तमेव च ।
शेषमन्त्रद्वयेनैव शतमष्टोत्तरं यजेत् ॥ ३४ ॥

दिक्पालानां मनूंश्चैवमष्टाविंशतिसङ्ख्यया ।
जयादीनपि हुत्वा तु यद्देवादिपुरस्सरम् ॥ ३५ ॥

हुत्वा होमं समाप्यैव रात्रिशेषं व्यपोह्य च ।
प्रातस्स्नानादि कृत्वैव मुहूर्ते च समावहेत् ॥ ३६ ॥

ततो देवस्य पद्योः वैष्णवेन ददेन्मुदा ।
महाहविः प्रभूतं वा देवेशाय निवेदयेत् ॥ ३७ ॥

एवं यः कुरुते भक्त्या पादुकास्थापनं नरः ।
सर्वैश्वर्यमवाप्यैव सर्वं पापं व्यपोह्य च ॥ ३८ ॥

सर्वदानफलं लब्ध्वा सामीप्यफलमश्नुते ।
नवीकरणमुद्दिश्य शक्त्याकर्षणपूर्वकम् ॥ ३९ ॥

जीर्णबेरविधानेन सर्वं कर्म समाचरेत् ।
भक्तप्रतिष्ठा अतः परं प्रवक्ष्यामि भक्तानां स्थापने विधिम् ॥ ४० ॥

जटिनं शिखिनं वापि ब्राह्मणं परिकल्पयेत् ।
प्राञ्जलिं भावनायुक्तं नासान्ताहितलोचनम् ॥ ४१ ॥

क्षत्रियं मकुटोपेतं वैश्यमुद्बद्धकुन्तलम् ।
कुर्याच्छूद्रानुलोमादीन् रोमचूडासमन्वितान् ॥ ४२ ॥

अथवा मुण्डितान्वाऽपि भगवद्ध्यानतत्परान् ।
यदाकारेण देवेशं पश्येयुस्तत्तदाकृतीन् ॥ ४३ ॥

अष्टतालोक्तमार्गेण द्विजातीन् परिकल्पयेत् ।
मध्यमेनैव शूद्रादीन् कारयित्वा यथाविधि ॥ ४४ ॥

भक्तानां ध्रुवबेरस्य देव्योश्चैव तथैव च ।
प्रमाणं पूर्वमेवोक्तं ध्रुवबेरवशात्तथा ॥ ४५ ॥

कृत्वैवं भक्तबिम्बन्तु प्रतिष्ठामाचरेत्पुनः ।
असुरा राक्षसा भूता गरुडा नागकिन्नराः ॥ ४६ ॥

यक्षा विद्यधराः पूज्या ऋषयो मानवास्तथा ।
ब्राह्मणैः क्षत्रियै वैश्यैश्शूद्रैरप्यन्त्यजातिभिः ॥ ४७ ॥

( तत्तद्भक्तिसमायुक्तैः तच्चिह्नैस्तत्परायणैः ।
कर्तव्यं भक्तबिम्बानां भजनं विष्णुमन्दिरे ) ॥

उत्तरायणकाले तु दक्षिणे वा त्वरान्वितः ।
पुण्यर्क्षे मासनक्षत्रे पूर्ववक्षे विशेषतः ॥ ४८ ॥

स्थिरराशिं प्रगृह्यैव उभये वा शुभोदये ।
तस्मात्तु दिवसात्पूर्वमङ्कुरानर्पयेत्क्रमात् ॥ ४९ ॥

तृतीये दिवसे कुर्याच्छिल्पिना चाक्षिमोचनम् ।
पूर्वोक्तलक्षणैर्युक्तमाचार्यं वरयेत्क्रमात् ॥ ५० ॥

प्रमुखे दक्षिणे वाऽपि उत्तरे वा मनोरमे ।
मण्डपं वाऽथ कूटं वा प्रपां वाऽपि विधानतः ॥ ५१ ॥

औपासनाग्निकुण्डञ्च कृत्वा आघारमाचरेत् ।
अङ्गहोमञ्च हुत्वा तु पाञ्चभौतिकसंयुतम् ॥ ५२ ॥

नयनोन्मीलनं कृत्वा पुण्याहं वाचयेत्ततः ।
नद्यां वाऽथ तटाके वा वाप्यां वाऽथ कटाहके ॥ ५३ ॥

अधिवास्यैव तद्बिम्बं बेरशुद्धिं समाचरेत् ।
पूर्वोक्तलक्षणैर्युक्तां यागशालां प्रकल्पयेत् ॥ ५४ ॥

वितानाद्यैरलङ्कृत्य सर्वालङ्कारशोभिताम् ।
तन्मध्ये स्थण्डिलं कृत्वा बिम्बाध्यर्धप्रमाणतः ॥ ५५ ॥

प्राच्यामाहवनीयञ्च श्वभ्रं पूर्ववदाचरेत् ।
उत्तरे वास्तुहोमार्थं पूर्वोक्तेन विधानतः ॥ ५६ ॥

पर्यग्निञ्चैव कृत्वा तु प्रोक्षणैः प्रोक्षणं चरेत् ।
आघारं पूर्ववद्धुत्वा वैष्णवेन समन्वितम् ॥ ५७ ॥

अधिवासगतं बेरं यागशालां प्रवेशयेत् ।
पूर्वोक्तेन विधानेन कुम्भपूजां समाचरेत् ॥ ५८ ॥

तत्तद्रूपं तथा ध्यायेत्कुम्भमध्ये विशेषतः ।
पञ्चभिः कलशैस्स्नाप्य बिम्बं यत्नेन शोधयेत् ॥ ५९ ॥

वस्त्रपञ्चकमास्तीर्य स्थापयेत्कुम्भसंयुतम् ।
अलङ्कृत्य च वस्त्राद्यैरर्चयेदष्टविग्रहैः ॥ ६० ॥

पुण्याहं वाचयेत्तत्र बद्ध्वा प्रतिसरं ततः ।
शयने शाययेद्बेरं यतो द्वारं ततश्शिरः ॥ ६१ ॥

उत्तराच्छादनं कुर्याद्दीपान्तञ्च समर्चयेत् ।
अग्निं सम्परिषिच्यैव मूलहोमश्च हूयते ॥ ६२ ॥

अष्टाशीतिं ततो हुत्वा महाव्याहृतिसंयुतम् ।
अष्टाक्षरेण मन्त्रेण शतमष्टोत्तरं यजेत् ॥ ६३ ॥

तत्तन्मूर्तीः स्वमन्त्रेण अष्टोत्तरसहस्रकम् ।
नृत्तैर्गीतैश्च वाद्यैश्च रात्रिशेषं नयेत्क्रमात् ॥ ६४ ॥

पुनः प्रभाते धर्मात्मा स्नात्वा स्नानविधानतः ।
शयितं बेरमुत्थाप्य प्रणम्यैवानुमान्य च ॥ ६५ ॥

पूर्वमाल्यैरलङ्कृत्य पूजयेदष्टविग्रहैः ।
अन्तहोमं ततः कृत्वा गर्भागारं प्रवेशयेत् ॥ ६६ ॥

पञ्चरत्नं सुवर्णञ्च पीठस्थाने विनिक्षिपेत् ।
आचार्यदक्षिणां शिष्यो दत्वोदकपुरस्सरम् ॥ ६७ ॥

मुहूर्ते समनुप्राप्ते यजमानयुतो गुरुः ।
कुम्भं बेरं समादाय आलयं सम्परीत्य च ॥ ६८ ॥

जीवस्थाने निवेश्यैव स्थापयित्वोक्तविष्टरे ।
आत्मसूक्तं जपित्वा तु तत्तद्बीजञ्च विन्यसेत् ॥ ६९ ॥

तन्नामाद्यक्षरं बीजं न्यसेदोङ्कारवेष्टितम् ।
तन्मूर्तिमन्त्रे संयोज्य मूलमन्त्रावसानके ॥ ७० ॥

घटाच्छक्तिं समावाह्य बेरमूर्धनि चाह्वयेत् ।
पुण्याहं वाचयेत्तत्र स्वस्तिघोषणमाचरेत् ॥ ७१ ॥

पूर्वोक्तविग्रहैः सर्वैरर्चयित्वा निवेद्य च ।
तन्निवेदितशेषन्तु तद्भक्तानां प्रदापयेत् ॥ ७२ ॥

अनुक्तानि च सर्वाणि मूर्तिमन्त्रेण कारयेत् ।
प्रतिष्ठायामुत्सवे च नित्यहोमे तथैव च ॥ ७३ ॥

परिवारप्रतिष्ठासु भक्तानां स्थापने तथा ।
भक्तानां परिवाराणां स्वाहान्ते च वदेद्गुरुः ॥ ७४ ॥

विष्णवे नम इत्युक्त्वा सर्वेषामाहुतीर्यजेत् ।
(तदन्तर्यामिणं विष्णुं सर्वहूतिषु संयजेत्) ॥ ७५ ॥

विष्ण्वालयगताश्चैव परिवारास्तथैव च ।
भक्ता भृत्याश्च सर्वे च विष्णुरूपाश्च भाविताः ॥ ७६ ॥

इत्यूचे भगवान् ब्रह्मा पुरा सर्वान् मुनीन् प्रति ।
तच्छ्रुत्वा मुनयस्सर्वे पर्यपृच्छन् पितामहम् ॥ ७७ ॥

ब्रह्मन् विष्णुस्वरूपाः स्युः परिवाराः कथं प्रभो ।
इत्युक्तस्सर्वलोकानां स्रष्टा प्रोवाच तान्मुनीन् ॥ ७८ ॥

शृणुध्वं मुनयस्सर्वे यद्यूयं परिपृच्छथ ।
विश्वव्यापनशीलत्वाद्विष्णुरित्यभिधीयते ॥ ७९ ॥

तस्माद्विष्णुस्वरूपांश्च परिवारान् विभावयेत् ।
परिवारस्य मन्त्रान्ते तत्तन्नाम वदेत्सुधीः ॥ ८० ॥

तत्तन्नाम्ना न कुर्याच्चेत्क्रुद्धः स्याद्भगवान् हरिः ।
( तच्छिष्याश्च प्रशिष्याश्च तत्तत्पादाश्च? देवताः )
तस्माच्छास्त्रं समालक्ष्य विष्णवे सम्प्रदापयेत् ॥ ८१ ॥

कर्षणे भूपरीक्षायां गोगणानां निवेदने ।
शिलादार्वोश्च ग्रहणे मधूच्छिष्टविधावपि ॥ ८२ ॥

लोहस्रावे तथा नैत्ये देव्योश्च स्थापने तथा ।
तयोस्तु पाणिग्रहणे भक्तानां स्थापने तथा ॥ ८३ ॥

जयन्त्यां स्नपने चैव मधुवल्मीकसम्भवे ।
कलहादिसमुद्भूतौ वास्तुहोमाङ्गहोमयोः ॥ ८४ ॥

नयनोन्मीलने चैव अधिवासत्रयेऽपि च ।
कर्मस्वेतेषु विंशत्सु कार्यः श्रामणकानलः ॥ ८५ ॥

अथवाऽऽहवनीयाग्नौ हुत्वा कर्म पृथक्चरेत् ।
श्रामणाहवनीयौ च पर्यायाविति केचन ॥ ८६ ॥

एवं यः कुरुते भक्त्या भक्तानां पूजनं बुधाः ।
ग्रामशान्तिकरञ्चैव भक्तानामभिवृद्धिदम् ॥ ८७ ॥

इह लोके सुखं भुङ्क्त्वा पत्नीपुत्रसमन्वितः ।
सर्वपापविशुद्धात्मा विष्णुलोकमवाप्नुयात् ॥ ८८ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
गोदाप्रतिष्ठा पादुकास्थापन भक्तबिम्बप्रतिष्ठाविधिर्नाम
चतुस्त्रिंशोऽध्यायः ।

---

# पञ्चत्रिंशोऽध्यायः



अष्टबन्धप्रकारः

अतः परं प्रवक्ष्यामि अष्टबन्धनलक्षणम् ।
अष्टबन्धनहीने तु पूर्वस्मिन् राष्ट्रनाशकृत् ॥ १ ॥

आग्नेय्यामग्निना दाहो याम्ये स्याद्व्याधिपीडनम् ।
नैर्ऋत्यां सस्यनाशः स्याद्वारुण्यां वृष्टिनाशनम् ॥ २ ॥

वायव्यां श्रीविनाशः स्यात्कौबेर्यामर्थनाशनम् ।
ऐशान्यां ग्रामनाशश्च सर्वतो राष्ट्रनाशनम् ॥ ३ ॥

बिन्दुकाकृतिभिर्भिन्ने ज्वरमारीप्रबाधनम् ।
अष्टबन्धनहानौ तु पुनस्सन्धानमाचरेत् ॥ ४ ॥

अष्टबन्धनसन्धानं कुम्भावाहनपूर्वकम् ।
सर्वलक्षणसम्पन्नमाहूयाचार्यमादरात् ॥ ५ ॥

कारयेदष्टबन्धन्तु यजमानस्समाहितः ।
सौवर्णं राजितं ताम्रं मृण्मयं वा समाहरेत् ॥ ६ ॥

कालहीनं नवं कुम्भं द्रोणद्वयसुपूरणम् ।
सम्यग्दग्धं नवं कुम्भं पक्वबिम्बफलाकृतिम् ॥ ७ ॥

आचार्यो घटमादाय तन्तुना परिवेष्ट्य च ।
प्रक्षाल्य विधिना कुम्भं धूपयेदगुरुं ततः ॥ ८ ॥

नादेयं जलमापूर्य उशीराद्यैश्च वासयेत् ।
वस्त्रयुग्मेन संवेष्ट्य दुकूलेन च भूषयेत् ॥ ९ ॥

तत्तद्देवाकृतिञ्चैव तत्तल्लक्षणसंयुतम् ।
सुवर्णेनैव कृत्वा तु दशनिष्कप्रमाणतः ॥ १० ॥

प्रतिमां कारयित्वैव चतुरङ्गुलमायताम् ।
श्रीभूम्योश्च पृथक्कृत्वा पञ्चनिष्कप्रमाणतः ॥ ११ ॥

कूर्मञ्च गरुडं शेषं सोमसूर्याग्निमण्डलम् ।
एकनिष्कप्रमाणेन कृत्वा शास्त्रोक्तलक्षणम् ॥ १२ ॥

कुम्भे निक्षिप्य तान् ध्यात्वा प्राणायामं चरेद्बुधः ।
पूर्वोक्तविधिना सम्यक्पूजयित्वा विशेषतः ॥ १३ ॥

पश्चादावाह्य विधिवद्विम्बाच्छक्तिं समाहरेत् ।
तत्कुम्भे शक्तिमावाह्य पश्चाद्ध्यानसमाधिना ॥ १४ ॥

यागशालामलङ्कृत्य षोडशस्तम्भसंयुताम् ।
चतुर्हस्तप्रमाणेन वेदिं कृत्वा सलक्षणम् ॥ १५ ॥

सभ्यमौपासनञ्चैव पौण्डरीकञ्च कारयेत् ।
पञ्चाग्नींश्च तथा कुर्याद्यथोक्तं होममाचरेत् ॥ १६ ॥

यागशालामलङ्कृत्य वितानस्तम्भवेष्टनैः ।
यथोक्तेन विधानेन मुक्ताद्यैस्तोरणैस्तथा ॥ १७ ॥

तरङ्गैर्ज्वलदङ्गैश्च चामरैर्दर्पणैरपि ।
कुसुमैर्दर्भमालाभिर्मुक्तावद्भिश्च मङ्गलैः ॥ १८ ॥

वेदिमध्ये तु तत्कुम्भं प्रतिष्ठाप्यार्चयेद्बुधः ।
सायं सन्ध्यामुपास्यैव चाङ्कुरानर्पयेद्बुधः ॥ १९ ॥

प्रतिष्ठोक्तविधानेन सर्वमेवात्र कारयेत् ।
प्रातः स्नात्वा विधानेन ब्रह्मयज्ञान्तमाचरेत् ॥ २० ॥

अष्टबन्धद्रव्याणि देवालयमलङ्कृत्य चित्रकार्यञ्च कारयेत् ।
शङ्खचूर्णं मधूच्छिष्टं लाक्षा त्रिफलमेवच ॥ २१ ॥

कासीसं गुग्गुलुञ्चैव चूर्णं रक्तशिलाकृतम् ।
माहिषं नवनीतञ्चेत्यष्टबन्ध इति स्मृतः ॥ २२ ॥

माहिषं नवनीतञ्च लाक्षाचूर्णञ्च शर्कराः ।
कार्पासं गुग्गुलुश्चैव पञ्चबन्ध इहेष्यते ॥ २३ ॥

माहिषं नवनीतञ्च लाक्षाचूर्णञ्च शर्कराः ।
एतं लिबन्धमित्याहुः विपरीतं न कारयेत् ॥ २४ ॥

शङ्खचूर्णे तु चन्द्रः स्यान्मधूच्छिष्टे तु रोहिणी ।
हरीतक्यां हरिश्चैव लाक्षायामग्निरेव च ॥ २५ ॥

कार्पासे वायुरावाह्यो गुग्गुलौ चण्डदीधितिः ।
शिलाचूर्णे स्कन्ददेवो नवनीते यमः स्मृतः ॥ २६ ॥

द्रव्येष्वेषु समावाह्य क्रमाद्द्रव्याधिदेवताः ।
अष्टोपचारैरभ्यर्च्य देवानुद्वासयेत्सुधीः ॥ २७ ॥

शङ्खचूर्णं तथा प्रस्थमर्धप्रस्थञ्च गुग्गुलुम् ।
लाक्षाचूर्णञ्च तावन्तं कार्पासं पादमेव च ॥ २८ ॥

हरीतकीं मधूच्छिष्टं शिलाजं पादमेव च ।
एकीकृत्य ततस्सर्वं प्रस्थाद्येन च मानयेत् ॥ २९ ॥

चूर्णस्यैकीकृतस्यार्धं नवनीतञ्च माहिषम् ।
( चूर्णं कृत्वा तु तत्सर्वं तत्तच्चूर्णसमायुतम् )
पेषयित्वा तु तद्द्रव्यं निक्षिप्योलूखले गुरुः ॥ ३० ॥

मुसलञ्च समादाय चार्चयित्वा विधानतः ।
उलूखलेऽर्चयेत्सोमं मुसले च सुदर्शनम् ॥ ३१ ॥

वैष्णवं विष्णुसूक्तञ्च नरसूक्तं तथैव च ।
' सोमं राजान ' मित्युक्त्वा ' सोमो धेनु ' मिति ब्रुवन् ॥ ३२ ॥

' नन्दिन्या मूलव ' त्यादिमन्त्रांश्चैव चतुर्दश ।
' इदं विष्णु ' रिति प्रोच्य ' अग्निन्दूत ' मिति ब्रुवन् ॥ ३३ ॥

' मरुतः परमा ' त्मेति ' मरुतो गणनां ' जपन् ।
' उदुत्यं चित्र ' मित्युक्त्वा ' जगद्भुव ' मिति ब्रुवन् ॥ ३४ ॥

'यमो दाधार' इत्युक्त्वा 'नमस्ते निऋत' इति ।
एतान् मन्त्रान् जपित्वा तु अवघातं समाचरेत ॥ ३५ ॥

विष्णुञ्च चक्रराजञ्च रोहिणीञ्च समर्चयेत् ।
तद्द्रव्यं पूजयित्वा तु शूर्पे वायुं समर्चयेत् ॥ ३६ ॥

ब्राह्मणांश्च समाहूय यथार्हमवघातयेत् ।
ब्राह्मणानामलाभे तु शूद्रांश्चकाङ्क्षितांस्तथा ॥ ३७ ॥

शुचीन् स्नातांत्समाहूय अवघातञ्च कारयेत् ।
बिम्बपीठस्य रन्ध्रे तु योजवेदष्टबन्धनम् ॥ ३८ ॥

यदि चेद्द्रव्यलोभेन अन्यदेवालयार्जितम् ।
रुद्रकाल्यादिबन्धार्थमाचितञ्चाष्टबन्धनम् ॥ ३९ ॥

तन्नेष्टमष्टबन्धं तद्विष्ण्वर्थं नैव कारयेत् ।
अज्ञानादर्थलोभाद्वा येन केनापि हेतुना ॥ ४० ॥

शिष्टद्रव्येण कुर्याच्चेद्विनश्यति न संशयः ।
प्राणयामं ततः कृत्वा शास्त्रोक्तविधिना ततः ॥ ४१ ॥

कुम्भपूजां तथा कृत्वा प्रतिष्ठोक्तविधानतः ।
परिवारसमायुक्तं सप्तावरणसंयतम् ॥ ४२ ॥

पूजनं सर्वदेवानां पूर्वोक्तविधिना ततः ।
सभ्याग्निं साधयित्वा तु आघारं विधिवद्यजेत् ॥ ४३ ॥

मूर्त्यावाहनपूर्वन्तु निरुप्याज्याहुतीर्यजेत् ।
विष्णुसूक्तं ततो हुत्वा वैष्णवं सूक्तमेव च ॥ ४४ ॥

नरसूक्तसमायुक्तं श्रीभूसूक्तसमन्वितम् ।
दौर्गं सारस्वतञ्चैव ब्राह्मं रौद्रं तथैव च ॥ ४५ ॥

सर्वदैवत्यसंयुक्तं सकृदाज्याहुतीर्यजेत् ।
विष्णुगायत्रिमुच्चार्य शतमष्टोत्तरं यजेत् ॥ ४६ ॥

सक्तुलाजतिलापूपैर्द्वादशाष्टाक्षरेण च ।
लक्ष्मीलक्ष्मीशमन्त्राभ्यां समिदाज्यञ्च होमयेत् ॥ ४७ ॥

वैष्वक्सेनं गारुडञ्च वैघ्नं शैषिकमेव च ।
एतैर्मन्त्रैस्ततो हुत्वा हविषाऽऽज्येन वै गुरुः ॥ ४८ ॥

दिग्दैवत्यं ततो हुत्वा पश्चाद्वैष्णवसंयुतम् ।
विष्णुसूक्तं ततो हुत्वा महाव्याहृतिसंयुतम् ॥ ४९ ॥

गायत्रीञ्चैव सावित्रीं श्रीभूसूक्ते च होमयेत् ।
परिषेकं ततः कृत्वा पौण्डरीकञ्च साधयेत् ॥ ५० ॥

आघारं विधिवत्कृत्वा हौत्रशंसनमाचरेत् ।
वैष्णवं विष्णुसूक्तञ्च पौरुषं सूक्तमेव च ॥ ५१ ॥

तत्तन्मूर्तिसमायुक्तं तत्तद्गायत्रिसंयुतम् ।
पद्मपत्रसमायुक्तं बिल्वपत्रसमन्वितम् ॥ ५२ ॥

अष्टाक्षरेण मन्त्रेण जुहुयाद्गुरुरत्वरः ।
परिषेकं ततः कृत्वा स्नापयेत्स्नपनोक्तवत् ॥ ५३ ॥

द्वात्रिंशत्स्नपनं कृत्वा पञ्चामृतसमन्वितम् ।
पञ्चगव्येन संस्नाप्य चोष्णोदैरभिषेचयेत् ॥ ५४ ॥

प्लोतवस्त्रोपवीताद्यैरुपवीतेन (?) भूषणैः ।
पुष्पाद्यैश्चार्चयेत्सम्यक् द्वात्रिंशदुपचारकैः ॥ ५५ ॥

पूजयित्वा विधानोक्तं कुर्यान्नित्यार्चनोक्तवत् ।
पञ्चाग्निषु ततो हुत्वा प्रतिष्ठोक्तवदाचरेत् ॥ ५६ ॥

व्यपोह्य रात्रिशेषञ्च प्रातस्स्नात्वा विधानतः ।
स्नापयेत्स्नपनोक्तेन क्षीरेणैवाभिषेचयेत् ॥ ५७ ॥

शुद्धोदैरभिषिच्यैव प्लोतादीनपि चाऽचरेत् ।
सभ्यमग्निं समासाद्य पञ्चसूक्तैर्जुहोति च ॥ ५८ ॥

पञ्चमन्त्रं ततो हुत्वा परिषिच्य च पावकम् ।
प्रायश्चितञ्च पञ्चाग्नौ शान्तिहोमञ्च कारयेत् ॥ ५९ ॥

विष्णुगायत्रिया हुत्वा परिषेकं समाचरेत् ।
अन्तहोमं ततो हुत्वा पौंडरीकं समापयेत् ॥ ६० ॥

कुम्भपूजां ततः कृत्वा आराद्ध्य विधिवद्धरिम् ।
कुम्भमादाय विधिवदुद्धृत्य शिरसा वहन् ॥ ६१ ॥

आचार्यः पूजितः सम्यग्वस्त्राभरणकुण्डलैः ।
पञ्चाङ्गभूषणैश्चैव हेमसूत्रेण वै पुनः ॥ ६२ ॥

स्वस्तिसूक्तं ततो जप्त्वा शकुनसूक्तसमन्वितम् ।
धामप्रदक्षिणं कृत्वा आलयं सम्प्रविश्य च ॥ ६३ ॥

प्रतिष्ठोक्तविधानेन चाऽवाह्य विधिवद्धरिम् ।
अर्चयित्वा विधानेन यथाशक्ति निवेदयेत् ॥ ६४ ॥

महाहविः प्रभूतं वा देवेशाय यथोदितम् ।
यजमानो गुरुश्चापि पूजयित्वा च मन्त्रवत् ॥ ६५ ॥

दशनिष्कसुवर्णन्तु सोदकं देवसन्निधौ ।
दद्याद्गोभूहिरण्यादीनाचार्याय विशेषतः ॥ ६६ ॥

दक्षिणायाः प्रदानेन सुप्रीतो भगवान् हरिः ।
भूरिदानं ततः कृत्वा ब्राह्मणानपि भोजयेत् ॥ ६७ ॥

इत्यष्टबन्धनं प्रोक्तं तद्ग्रामस्याभिवर्धनम् ।
फलश्रुतिः तेनात्र सस्यवृद्धिः स्यात्प्रजापशुविवर्धनम् ॥ ६८ ॥

यजमानस्य सौभाग्यं ज्ञानवृद्धिश्च जायते ।
सोऽत्रैव सकलान् भोगान् सर्वान् कामानवाप्नुयात् ॥ ६९ ॥

एवं यः कुरुते भक्त्या विष्णुलोके महीयते ।
तद्ग्रामवासिनः सर्वे भाग्यवन्तो भवन्ति हि ॥ ७० ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
अष्टबन्धनविधिर्नाम पञ्चत्रिंशोऽध्यायः ॥

## षट्त्रिंशोऽध्यायः

वैदिकाराधन-महिमा

अतः परं प्रवक्ष्यामि विष्णोराराधनक्रमम् ।
त्रिविधश्चार्चनं प्रोक्तं केशवेन परात्मना ॥ १ ॥

वैखानसं पाञ्चरात्रमाग्नेयमिति तत्त्रिधा ।
कल्पादौ भगवान् विष्णुः क्षीराब्धौ शयितः प्रभुः ॥ २ ॥

योगनिद्रां गते तस्मिन्नमून्नाभ्यान्तु पङ्कजम् ।
तस्मिंस्तु कमले ब्रह्मा जातः परमसुन्दरः ॥ ३ ॥

जातमात्रश्चतुर्वक्त्रो दध्यौ देवं परात्परम् ।
ध्यानेन तेन सुप्रीतो भगवानाह पद्मजम् ॥ ४ ॥

सर्वेषामपि भूतानां जङ्गमस्थावरात्मनाम् ।
लोकानामपि सर्वेषां सृष्टिं कुरु मदाज्ञया ॥ ५ ॥

इत्युक्त्वा भगवांस्तस्मै वेदानुपदिदेश ह ।

जगत्सृष्टिः

तेनोपदिष्टमात्रः स सर्वान् लोकान् ससर्ज ह ॥ ६ ॥

रुद्रादीनखिलान् देवान् स्थावराणि चराणि च ।
निखिलं ससृजे ब्रह्मा हृष्टः पुष्टिसमन्वितः ॥ ७ ॥

चतुर्वेदोद्भवैर्मन्त्रैरानर्च पुरुषोत्तमम् ।
अर्चयंश्च क्रमेणैवमवलिप्तोऽभवद्विधिः ॥ ८ ॥

ब्रह्माणं गर्वितं दृष्ट्वा तदा नारायणः प्रभुः ।
गर्वभङ्गार्थमेवास्य ससर्ज मधुकैटभौ ॥ ९ ॥

असुरौ तौ समागत्य चतुरास्यं बबाधिरे ।
बलात्कृत्य गृहीत्वा तौ वेदानब्धिञ्च जग्मतुः ॥ १० ॥

ततं परं प्रभुर्ब्रह्मा व्यसनेन प्रपीडितः ।
पितुरन्तिकमागत्य दुःखितो वाक्यमब्रवीत् ॥ ११ ॥

'भगवन्! केन मार्गेण त्वमर्च्योऽसि मयाऽधुना'।
इत्युक्तो देवदेवेशो भगवान् प्रत्युवाच तम् ॥ १२ ॥

पाञ्चरात्र-शास्त्रोत्पत्तिः

'अद्यप्रभृति वै पञ्च दिनानि त्वं प्रजापते ।
द्वादशाष्टाक्षराभ्यां मां मन्त्राभ्यामर्चय स्वयम् ॥ १३ ॥

तच्च नामार्चनमिति पाञ्चरात्रमितीर्यते'।
इत्युक्त्वा देवदेवेशो मत्स्यरूपी महानभूत् ॥ १४ ॥

मत्स्यरूपी महाविष्णुः शङ्खचक्रगदाधरः ।
अब्धिं प्रविश्य भगवानवधीन्मधुकैटभौ ॥ १५ ॥

वेदानाहृत्य देवेशः प्रादात्तांश्च स्वयंभुवे ।
उपदिश्य तथा वेदान् शास्त्राण्यन्यानि चोक्तवान् ॥ १६ ॥

तेनोपदेशमात्रेण तेजिष्ठः कमलोद्भवः ।
अपूजयद्यथापूर्वं वैखानसविधानतः ॥ १७ ॥

अर्चयन्तन्तु ब्रह्माणं पुनर्मानः समाविशत् ।
गर्वितन्तु विधिं दृष्ट्वा पुनर्लोकपितामहः ॥ १८ ॥

ब्रह्मणो गर्वभङ्गार्थमसृजत्सोमकासुरम् ।
सोमकस्त्वरितो गत्वा हठाद्विधिमपीडयत् ॥ १९ ॥

अपहृत्य तथा वेदान् पातालं समुपाविशत् ।
ब्रह्मा सुदुःखितो भूत्वा देवेशं शरणं ययौ ॥ २० ॥

अब्रवीच्च 'कथं देव! पूजनीयोऽसि मेऽधुना'।
इत्युक्तो ब्रह्मणा विष्णुस्तमुवाच हसन्निव ॥ २१ ॥

'अद्यप्रभृति सप्तैव दिनानि त्वं प्रजापते ।
तन्त्रप्रोक्तेन विधिना मन्त्रहीनं समर्चय ॥ २२ ॥

अमन्त्रार्चनमित्युक्तमाग्नेयं तत्प्रशस्यते'।
इत्युक्त्वा भगवान् विष्णुर्वाराहं रूपमास्थितः ॥ २३ ॥

अब्धिं प्रविश्य सहसा भीमरूपो महाबलः ।
आसाद्य सोमकं घोरं दंष्ट्राग्रेणाच्छिनत्प्रभुः ॥ २४ ॥

वेदान् गृहीत्वा देवेशः ब्रह्मणे प्रददौ पुनः ।
प्राप्योपदेशं देवेशान्मुदितः कमलोद्भवः ॥ २५ ॥

पूजयामास विधिवत्पुनर्वेदोदिताध्वना ।
यद्वेदमन्त्रैः क्रियते तद्वैखानसमीरितम् ॥ २६ ॥

तस्माद्वैखानसं श्रेष्ठमिति पूर्वजशासनम् ।
वैखानसेन सूत्रेण संस्कृता मुनिसत्तमाः ॥ २७ ॥

निसर्गवैष्णवाः शुद्धा जन्मनाऽऽचार्यसंज्ञिताः ।
विखना इति वै विष्णुः तज्जा वैखानसाः स्मृताः ॥ २८ ॥

विष्ण्वंशजश्च विखना मुनीनां प्रथमो मुनिः ।
तेनोपदिष्टं यत्सूत्रं तत्सूत्रेषूत्तमं स्मृतम् ॥ २९ ॥

तत्सूत्रसंस्कृता विप्राः सर्वेषामुत्तमोत्तमाः ।
देवब्रह्मर्षिसङ्घानां गुरुर्वैखानसो मुनिः ॥ ३० ॥

तत्सूत्राचरणा ये तु त आचार्याः प्रकीर्तिताः ।
अन्यसूत्रक्रियासक्तास्तादृशा न भवन्ति हि ॥ ३१ ॥

( अन्यसूत्रक्रियासक्ता दासाः शिष्याश्च सम्मताः ।
तस्मात्सदस्सु सर्वत्र आदौ वैखानसं नमेत् ॥

वैखानसो विष्णुमयो न नमेदन्यसूत्रिणः ।
यदि कुर्यान्नमस्कारं तेषामायुःक्षयो भवेत् ॥ )

देवलककथनम्

न शैवदीक्षिता विप्रा न वैखानससूत्रिणः ।
न दीक्षिताः पाञ्चरात्रे परार्थं वित्तकाङ्क्षया ॥ ३२ ॥

शिवकेशवयोः पूजामेकाहमपि वा चरेत् ।
दूषिताः सर्वकार्येषु ते वै देवलकाः स्मृताः ॥ ३३ ॥

वैखानसेन शास्त्रेण अर्चनं क्रियते यदि ।
लोके सर्वत्र शान्तिः स्याद्राजराष्ट्रप्रवर्धनम् ॥ ३४ ॥

अन्यसूत्रिकृता पूजा न भवेत्फलदा क्वचित् ।
शास्त्रसङ्करपूजायां राजराष्ट्रविनाशनम् ॥ ३५ ॥

मद्भक्तो वैष्णवो लोके गुरुर्भागवतोत्तमः ।
वैखानसो द्विजः कुर्यात्सर्वकर्माणि पूजितः ॥ ३६ ॥

अश्वत्थः कपिला गावः तुलसी विखनोद्विजः ।
हरिप्रियास्तु चत्वारः तेषु वैखनसो वरः ॥ ३७ ॥

विष्णुं वैखानसं वेदं यो दूषयति पातकी ।
आचन्द्रार्कं महाघोरं निरयं याति रौरवम् ॥ ३८ ॥

विष्णुप्रीतिकरं दानमणुमात्रन्तु सादरम् ।
भवेत्तन्मेरुणा तुल्यं वर्धते वटबीजवत् ॥ ३९ ॥

शताधिक्यं शताधिक्यं शताधिक्यं महर्षयः ।
विद्धि वैखानसे दत्तं दानं विष्णुकरे यथा ॥ ४० ॥

हविःपाकविधानार्थमाधावग्रहणाय च ।
वैखानसानेव वृणेदलाभे त्वन्यसूत्रिणः ॥ ४१ ॥

शङ्खचक्राङ्कितभुजान् वृणीयादन्यसूत्रिणः ।
गर्भे मास्यष्टमे विष्णुबलिं कुर्याद्यथाविधि ॥ ४२ ॥

नारायणः स्वयं गर्भे मुद्रां धारयते निजाम् ।
तत्करस्थेन चक्रेण शङ्खेन प्रथितौजसा ॥ ४३ ॥

करोति चक्रशङ्खाङ्कं शिशोर्वै बाहुमूलयोः ।
वैखानसेन सूत्रेण स्यादयं गर्भवैष्णवः ॥ ४४ ॥

वैष्णवं सूत्रमेतद्धि सर्वसिद्धिकरं परम् ।
वैखानसाश्च मत्पुत्रा दत्तपुत्राश्च दीक्षिताः ॥ ४५ ॥

मम वैखानसस्यापि न पश्यन्त्यन्तरं बुधाः ।
न मुद्राधारणं तेषां गर्भवैष्णवजन्मनाम् ॥ ४६ ॥
श्रौतस्मार्तक्रियार्हाणां मत्प्रसादैकजीविनाम् ।
मम वाक्यबलेनैव ते वै चक्राङ्किता मताः ॥ ४७ ॥
एतच्च वचनं गुह्यं शृणुध्वं मुनिसत्तमाः ।
मत्पुत्राणां न चिह्नानि दीक्षिताश्चिह्नधारिणः ॥ ४८ ॥
वैखानसा मम सुता गर्भवैष्णवलाञ्छनाः ।
मच्छरीततया चक्रचिह्नानि न पृथग्गुरुः ॥ ४९ ॥
मद्भक्तो वैष्णवो लोके गुरुर्भागवतोत्तमः ।
तेषां पृथङ् न चिह्नानि चक्रादीनां गुरुर्न च ॥ ५० ॥
अहमेव गुरुस्तेषां गर्भवैष्णवजन्मनाम् ।
तापादिपञ्चसंस्कारक्रिया नार्हन्ति मामकाः ॥ ५१ ॥
विहितानि च चिह्नानि बिभृयुस्त्वन्यसूत्रिणः ।
चक्रादिचिह्नधारी च अज्ञानात् ज्ञानतोऽपि वा ॥ ५२ ॥
वैखानसश्चतुर्वेदी सर्वकर्मबहिष्कृतः ।
अज्ञानाद्वा बलान्मोहात्तप्तमुद्रो भवेद्यदि ॥ ५३ ॥
वैखानसोऽपि वध्यः स्यात् स्प्रष्टुं नार्हति मामपि ।
( वैखानसा मम सुता गर्भवैष्णवजातकाः ।
तेषां बहिर्न तापो न पुनः करणमापदि )॥
मद्भक्तियुक्तस्य मदौरसस्य
निषेककर्मादिविराजितस्य ।
वैखानसस्यास्य न तप्तमुद्रा
न मन्त्रदीक्षा न गुरुर्मया विना ॥
सा मुद्रा त्रिविधा प्रोक्ता मनोवाक्कायकल्पिता ॥ ५४ ॥

भूतशुद्ध्यङ्गभूता या भावना मानसी तु सा ।
चक्राब्जमण्डले जप्या द्वितीया दीक्षितैः कृता ॥ ५५ ॥

तप्तमुद्रा तृतीया स्याद्वैखानससम्मता[1] ।
वैखानसश्च तुलसी तथा विष्णुपदी सरित् ॥ ५६ ॥

प्रकृत्या पावनाः प्रोक्ता नान्यतोऽर्हन्ति संस्कृतिम् ।
पातकान्युपपापानि महापापानि यानि च ॥ ५७ ॥

तानि सर्वाणि नश्यन्ति श्रीवैखानसदर्शनात् ।
वैखानसस्य माहात्म्यं वक्तुं कः शक्नुयाद्भुवि ॥ ५८ ॥

मुच्यन्ते सर्वपापेभ्यः श्रीवैखानससेविनः ।
रूपद्वयं हरेः प्रोक्तं बिम्बमर्चक एव च ॥ ५९ ॥

बिम्बे त्वावाहनादूर्ध्वं सदा सन्निहितोऽर्चके ।
अर्चकस्तु हरिः साक्षाच्चररूपी न संशयः ॥ ६० ॥

तस्मात्तमर्चकं दृष्ट्वा दण्डवत् प्रणमेद्भुवि ।
पुरे ग्रामे च नगरे नद्यास्तीरेऽब्धिसङ्गमे ॥ ६१ ॥

वैखानसेन विधिना केशवं सम्यगर्चयेत् ।
तदर्चनं प्रियकरं विष्णोः सर्वफलप्रदम् ॥ ६२ ॥

वैखानसार्चितं बिम्बं प्रणमेत्प्रयतः सदा ॥ ६२५ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
वैखानसमहिमावर्णनं नाम षट्त्रिंशोऽध्यायः ॥

---

1. बाह्यसेवकसङ्गता. क.

## सप्तविंशोऽध्यायः

अङ्कुरार्पणविस्तरः

अतः परं प्रवक्ष्यामि अङ्कुरार्पणलक्षणम् ।
भूपरीक्षादिकर्माणि देवकार्याणि यानि च ॥ १ ॥

तेषु तेषु प्रकुर्वीत विधिना चाङ्कुरार्पणम् ।
कर्मारम्भदिनात्पूर्वं नवमे वाऽथ सप्तमे ॥ २ ॥

पञ्चमे वा तृतीये वा सद्यो वाऽङ्कुरमिष्यते ।
पात्राणि पालिकाकुम्भशरावान् कारयेत्पृथक् ॥ ३ ॥

पालिकादीनां लक्षणम्

सौवर्णरौप्यताम्रान्वा कांस्यानथ मृदा कृतान् ।
ब्राह्मणो यजमानश्चेत् प्रत्येकं तांस्तु षोडश ॥ ४ ॥

क्षत्रियो द्वादशाऽष्टौ विट् चतुर्थश्चतुरः क्रमात् ।
चतुरश्चतुरो वाऽपि गृह्णीयुः सर्ववर्णिनः ॥ ५ ॥

एवं कर्तुमशक्तानां गौणः क्रम उदीर्यते ।
एकैकं पालिकादीनां पात्रं सम्पादयेत्क्रमात् ॥ ६ ॥

उत्सेधः पालिकादीनां चतुर्विंशाङ्गुलो भवेत् ।
कुम्भस्योदरविष्कम्भं षोडशाङ्गुलमिष्यते ॥ ७ ॥

भित्तिरर्धाङ्गुलञ्च स्यादोष्ठमेकाङ्गुलं भवेत् ।
नालस्योदरविष्कम्भं चतुरङ्गुलमीरितम् ॥ ८ ॥

भित्तिरर्धाङ्गुलं प्रोक्तमेवं नालमितिर्भवेत् ।
पादस्योदरविस्तारं दशाङ्गुलमुदाहृतम् ॥ ९ ॥

भित्तिरर्धाङ्गुलञ्च स्यात्पद्माकारन्तु कारयेत् ।
कुम्भस्योदरविस्तारं द्वादशाङ्गुलमात्रकम् ॥ १० ॥

भित्तिरर्धाङ्गुलं प्रोक्तं कुम्भाकारन्तु कारयेत् ।
मुखस्योदरविस्तारं पञ्चाङ्गुलमुदाहृतम् ॥ ११ ॥

भित्तिरर्धाङ्गुलं प्रोक्तं कुम्भोत्तुङ्गन्तु कारयेत् ।
कण्ठमेकाङ्गुलं प्रोक्तमोष्ठमेकाङ्गुलं भवेत् ॥ १२ ॥

कुम्भाकारं चतुर्दिक्षु भागविस्तारसंयुतम् ।
यवमात्रं द्वारमानं द्वन्द्वं द्वन्द्वन्तु कारयेत् ॥ १३ ॥

सर्वानन्यान् प्रकारांश्च पालिकावत्प्रकल्पयेत् ।
शरावस्य विशेषेण ओष्ठमेकाङ्गुलं भवेत् ॥ १४ ॥

सर्वानन्यान् प्रकारांश्च पालिकावत्प्रकल्पयेत् ।
यथालाभेन मानेन शक्तिलोपं न कारयेत् ॥ १५ ॥

अलाभे पालिकानान्तु शरावेष्वपि कारयेत् ।
अङ्कुरधान्यानि शालिर्माषः प्रियङ्गुश्च मुद्गगोधूमसर्षपाः ॥ १६ ॥

मसूरतिलचणका नवधान्यं प्रकीर्तितम् ।
प्रस्थमात्रं यथालाभमथवाऽऽदाय तानि वै ॥ १७ ॥

शोषितोत्पूतधान्यानि पूर्वाह्णे निक्षिपेज्जले ।
अङ्कुरवेदिका ततो देवगृहस्याग्र उत्तरे वा मनोरमे ॥ १८ ॥

ऐशान्यां मण्डपे वाऽथ गोमयेनोपलिप्य च ।
वितानदर्भमालाद्यैरलङ्कृत्य विशेषतः ॥ १९ ॥

पैष्ट्या भूमिमलङ्कृत्य दीपानुद्दीप्य सर्वतः ।
आचार्यो यजमानश्च सायं सन्ध्यामुपास्य च ॥ २० ॥

सम्भृत्य सर्वसम्भारान् यथार्हं तत्र मण्डले ।
देवदेवं प्रणम्यैव कार्यमावेद्य मन्त्रतः ॥ २१ ॥

अनुमान्य प्रभुं कुर्यादङ्कुरार्पणमत्वरः ।
दकल्पनम् प्रागग्रैरुत्तराग्रैश्च सूत्रैरष्टभिरष्टभिः ॥ २२ ॥

पद्मेकोनपञ्चाशद्भिरचय्य सलक्षणम् ।
मध्ये त्रिवेदिसहितं पीठं तालोन्नतं विधेः ॥ २३ ॥

देवतावाहनम् कृत्वा चतुर्मुखं तत्र ब्रह्माणं सम्यगर्चयेत् ।
प्रदक्षिणक्रमेणैव तत्र बाह्यपदेषु वै ॥ २४ ॥

ईशानादि चतुर्विंशद्देवानेतान् समर्चयेत् ।
ईशं पर्जन्यं जयन्तं महेन्द्रादित्यसत्यकान् ॥ २५ ॥

अग्निञ्च वितथञ्चैव ग्रहक्षतयमौ तथा ।
गन्धर्वं भृङ्गराजञ्च निर्ऋतिं दौवारिकं तथा ॥ २६ ॥

सुग्रीवञ्च सरिन्नाथमसुरं शोषणं तथा ।
जवनं नागमुख्यौ च क्रमात्सोमार्गलादितीन् ॥ २७ ॥

उपचारक्रमः आवाह्य तोयं पुष्पञ्च हविस्तोयं ददेत्ततः ।
पुष्पादीनपि संशोध्य मध्ये द्वारान् प्रकल्प्य च ॥ २८ ॥

द्वारेशार्चनम् द्वारेशानर्चयेदष्टौ तत्तद्दिग्द्वारपार्श्वयोः ।
जयन्ते शेषमभ्यर्च्य आदित्ये तु विनायकम् ॥ २९ ॥

ग्रहक्षते तु गरुडं गन्धर्वे तु सुदर्शनम् ।
सुग्रीवेऽपि च पङ्क्तीशं भूतेशमसुरेऽर्चयेत् ॥ ३० ॥

मुख्ये शङ्खं समावाह्य पूजयेच्छान्तमर्गले ।
जयाद्यर्चनम् ब्रह्मणः परितोऽष्टासु प्रागादीशान्तमर्चयेत् ॥ ३१ ॥

जयाञ्च विजयां विन्दां नन्दामप्यथ पुष्टिकाम् ।
कुमुद्वतीमुत्पलकामष्टावप्सरसः क्रमात् ॥ ३२ ॥

दिगीशार्चनम् तद्बाह्ये दिक्षु विदिशास्विन्द्रादींश्च समर्चयेत् ।
सोमकुम्भार्चनम् उत्तरे धान्यपीठन्तु चतुरङ्गुलमुन्नतम् ॥ ३३ ॥

सोमस्याभिमुखे कुर्यात्सुवृत्तं साध्वलङ्कृतम् ।
षोडशप्रस्थसम्पूर्णं कालहीनं नवं शुभम् ॥ ३४ ॥

कुम्भमादाय विधिना तन्तुना परिवेष्ट्य च ।
प्रक्षाल्य पूरयित्वाऽद्भिः वस्त्राभ्यां वेष्टनं चरेत् ॥ ३५ ॥

अभिमन्त्र्य च सौवर्णीं प्रतिमां तत्र निक्षिपेत् ।
तस्मिन् कुम्भे समावाह्य सोमं ध्यात्वा समर्चयेत् ॥ ३६ ॥

हविर्निवेदयेत्पश्चान्मुखवासञ्च दापयेत् ।
पालिका-यलङ्करणम् मृद्भिर्वा वालुकाभिर्वा गोकरीषैर्विशेषतः ॥ ३७ ॥

पालिकादीन् समापूर्य तन्तुना परिवेष्ट्य च ।
वस्त्रैरावेष्टयेत्पश्चात् पात्राणि च यथाक्रमम् ॥ ३८ ॥

पालिकादीनां न्यासः न्यसेदीशे पालिकाश्च कुम्भान् पर्जन्यके तथा ।
शरावान् सत्यके न्यस्य पुनरग्नौ च पालिकाः ॥ ३९ ॥

निदध्याद्वितथे कुम्भान् शरावान् भृङ्गराजके ।
नैर्ऋते पालिका न्यस्य कुम्भान् दौवारिके तथा ॥ ४० ॥

शरावान् शोषणे न्यस्य जवने पालिकाः पुनः ।
नागे कुम्भांस्तथा न्यस्य शरावानदितौ न्यसेत् ॥ ४१ ॥

जपन्वै विष्णुगायत्रीं यथोक्ते स्थापयेत्पदे ।
पालिकादिष्वर्चनम् पालिकासु महीं राकां छिद्रकुम्भेषु चार्चयेत् ॥ ४२ ॥

शरावेषु सिनीवालीमभ्यर्च्य विधिना गुरुः ।
पूर्वानीतानि धान्यानि गृहीत्वा कांस्यभाजने ॥ ४३ ॥

गव्येन पयसा सिक्त्वा सोमस्याभिमुखे न्यसेत् ।
तेषु सोमं समावाह्य समभ्यर्च्य निवेदयेत् ॥ ४४ ॥

वैष्णवं विष्णुसूक्तञ्च ओषधीसूक्तमेव च ।
'सोमं राजान' मिति च जपन् मङ्गलपूर्वकम् ॥ ४५ ॥

अङ्कुरार्पणम् अङ्कुराण्यभिमन्त्र्यैव तानि पात्रेषु निक्षिपेत् ।
मेदिनीमन्त्रमुच्चार्य पालिकासु विशेषतः ॥ ४६ ॥

'राकामहं' समुच्चार्य छिद्रकुम्भेषु वापयेत् ।
'सिनीवा' लीति मन्त्रेण शरावेषु विनिक्षिपेत् ॥ ४७ ॥

जलसेकः वारुणं मन्त्रमुच्चार्य जलसेकमथाऽचरेत् ।
पुण्याहम् पुण्याहं वाचयित्वा तु मुखवासं प्रदापयेत् ॥ ४८ ॥

आचार्याय यथार्थिभ्यो दक्षिणां विहितां ददेत् ।
अङ्कुररक्षणम् अङ्कुरान् सोमकुम्भञ्च गुप्ते देशे निधाय च ॥ ४९ ॥

पिदध्याच्च पिधानेन कर्मान्ते च निसर्जयेत् ।
सद्योऽङ्कुरम् एवं कर्तुमशक्तस्तु कुर्यात्सद्योऽङ्कुरं बुधः ॥ ५० ॥

अङ्कुरोक्तक्रियाः सर्वाः कुर्यादुक्तविधानतः ।
श्वेतैश्च तण्डुलैः पुष्पैरावापोऽङ्कुरवद्भवेत् ॥ ५१ ॥

अङ्कुरार्पणहीनन्तु कर्म निष्फलतामियात् ।
साङ्कुरन्तु कृतं कर्म कार्यसिद्धिं प्रयच्छति ॥ ५२ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
अङ्कुरार्पणविधिर्नाम सप्तत्रिंशोऽध्यायः

# अष्टात्रिंशोऽध्यायः

ऊर्ध्वपुण्ड्रविधिः

अत ऊर्ध्वं प्रवक्ष्यामि ऊर्ध्वपुण्ड्रस्य लक्षणम् ।
उषः काले समुत्थाय नित्यकर्माणि कारयेत् ॥ १ ॥

हृदि ध्यायन् हृषीकेशं प्राङ्मुखो वाऽप्युदङ्मुखः ।
कूर्मासने समासीनः स्मृत्वा गुरुपरम्पराम् ॥ २ ॥

'यन्मे व' चेति मन्त्रेण आदर्शनमवेक्ष्य च ।
'द्रुपदा' इति तु प्रोच्य भूदेवीं तत्र प्रार्थयेत् ॥ ३ ॥

'मृत्तिके हन मे' प्रोच्य आदाय श्वेतमृत्तिकाम् ।
'तद्विष्णो' रिति मन्त्रेण वामपाणौ तु घर्षयेत् ॥ ४ ॥

लिखित्वा प्रणवं तत्र हस्ते श्वेतमृदि क्रमात् ।
गायत्र्या तां सुसम्प्रोक्ष्य अनामाङ्गुलिना तथा ॥ ५ ॥

नृसिंहबीजं संलिख्य प्रणवेनैव वेष्टयेत् ।
'अलक्ष्मीर्मे नश्यता' मित्यादाय श्वेतमृत्तिकाम् ॥ ६ ॥

हस्तौ तु सम्पुटीकृत्य ध्यायंस्तत्रैव केशवम् ।
श्रीभूसूक्ते ततो जप्त्वा अष्टाक्षरमतः परम् ॥ ७ ॥

विष्णुसूक्तं ततो जप्त्वा द्वादशाक्षरसंयुतम् ।
केशवादींस्ततो ध्यात्वा ध्यायेल्लक्ष्मीपतिं हृदि ॥ ८ ॥

नासिकामूलमारभ्य कूर्चान्तं पादमालिखेत् ।
पादमङ्गुलिविस्तारमुन्नतञ्च तथैव च ॥ ९ ॥

कूर्चान्ते पट्टिकाकारमर्धचन्द्रवदाचरेत् ।
तिर्यगेवन्तु कृत्वैव विस्तारन्तु त्र्यङ्गुलम् ॥ १० ॥

'विष्णोर्नुकं' मिति प्रोच्य धारयेच्छ्वेतमृत्तिकाम् ।
'तदस्य प्रिय' मित्युक्त्वा पट्ट्यूर्ध्वे तु समालिखेत् ॥ ११ ॥

रेखामङ्गुलिविस्तारां चतुरङ्गुलमायताम् ।
'प्रतद्विष्णु' रिति प्रोच्य ललाटे दक्षिणे लिखेत् ॥ १२ ॥

'परो मात्रया' मन्त्रेण ललाटे वामके लिखेत् ।
नासिकामूलमारभ्य केशान्तं विलिखेद्बुधः ॥ १३ ॥

विष्णोः पादाकृतिं रम्यं सुपार्श्वं सुमनोहरम् ।
अनामिकाङ्गुल्यग्रेण द्वादशैतानि संलिखेत ॥ १४ ॥

'विचक्रमे—त्रिर्देव' इति पुनः कण्ठस्य पृष्ठतः ।
हृदि कुक्षौ च बाह्वोश्च पार्श्वयोश्च समालिखेत् ॥ १५ ॥

'मोक्षं दे' हीति शिरसि धारयच्छ्वेतमृत्तिकाम् ।
'सुमित्रान आप' इत्युक्त्वा हस्तौ प्रक्षालयेत्ततः ॥ १६ ॥

नारायणं प्रणम्यैव केशवादींस्तथा जपेत् ।
'या सा पद्माल' येत्युक्त्वा लक्ष्मीं देवीं प्रणम्य च ॥ १७ ॥

'श्रिये जात' इति प्रोच्य श्रीचूर्णं घर्षयेद्बुधः ।
चिन्तामणिं तथा बीजं लिखित्वा चाभिमन्त्रयेत् ॥ १८ ॥

श्रीगायत्रीं ततो जप्त्वा ललाटे धारयद्बुधः ।
ऊर्ध्वपुण्ड्रस्य मध्ये तु वेणुपत्राकृतिं लिखेत ॥ १९ ॥

निशाचूर्णेन चैतेषु स्थानेषु द्वादशस्वपि ।
(ऊर्ध्वपुण्ड्रस्य मध्ये तु श्रीचूर्णं धारयेद्बुधः)
'यन्मे वर्चे' इति मन्त्रेण आदर्शमभिवीक्षयेत् ॥ २० ॥

फलश्रुतिकथनम्

एवं कृते ब्राह्मणस्तु ब्रह्म विन्दति निश्चयः ।
स्वर्णस्तेयी महापापः अस्तेयी भवति ध्रुवम् ॥ २१ ॥

सुरापायी महापापः अपायी भवति ध्रुवम् ।
ब्रह्महत्यासमायुक्तः अघाती भवति ध्रुवम् ॥ २२ ॥

गुरुतल्पसमायुक्तस्त्वतल्पी भवति ध्रुवम् ।
सर्वपापैः प्रमुच्येत सर्वैश्वर्यमवाप्नुयात् ॥ २३ ॥

ऊर्ध्वपुण्ड्रस्य सार्वत्रिकता

सर्वदानफलं लब्ध्वा विष्णुलोकं स गच्छति ।
विग्रहे गोपुरे चापि मण्डपे चाङ्गणे तथा ॥ २४ ॥

गृहे तथैव तुरगे रथे याने परिच्छदे ।
एवमेव प्रकारेण कृत्वा चिह्नं सुलक्षणम् ॥ २५ ॥

वाद्यकोणेषु पात्रेषु चिह्नमेवं समालिखेत् ।
स्त्रीणामपि तथा प्रोक्तं श्रीचूर्णं श्वेतमृत्तिका ॥ २६ ॥

कूर्चमध्ये तथा कुर्यात्पुण्ड्रमर्धेन्दुसुन्दरम् ।
एवं यः कुरुते भक्त्या विष्णोः सायुज्यमाप्नुयात् ॥ २७ ॥

क्रियाः कृता अपि यदा क्रियन्ते मन्त्रवर्जिताः ।
अन्यहस्तेन वा पुण्ड्रं क्रियते यदि मोहतः ॥ २८ ॥

षाड्भिर्मासैश्च भ्रश्यन्ते ब्राह्मण्यात् ब्राह्मणा ध्रुवम् ।
राजानश्चत्तथा तेषां राजराष्ट्रविनाशनम् ॥ २९ ॥

अप्रसिद्धिस्ततस्तेषां यशोनाशो भविष्यति ।
यथोक्तं कुर्वते ये तु सर्वान् कामानवाप्नुयुः ॥ ३० ॥

सदाचारक्रमः

इदानीं वोऽत्र वक्ष्यामि सदाचारक्रमं बुधाः ।
शिष्टलक्षणम्
यथार्थवादिनः शिष्टाः शिष्टा विगतमत्सराः ॥ ३१ ॥

यथार्थदर्शिनः शिष्टाः शिष्टा वै वीतमत्सराः ।
ब्राह्मे मुहूर्ते चोत्थाय ध्यानं कुर्युश्च वैष्णवम् ॥ ३२ ॥

ब्रह्मक्षत्रविशां प्रोक्तं वेदैः स्तोत्रं महात्मनः ।
वेदमन्त्रैर्विना कुर्युः शूद्राः पौराणकीर्तनैः ॥ ३३ ॥

अनुलोमाश्च कुर्वन्ति प्रतिलोमाश्च भाषया ।
पुरीषस्यापि मूत्रस्य चोत्सर्गं विधिना चरेत् ॥ ३४ ॥

दन्तानां धावनं कुर्याच्छ्रौताचमनपूर्वकम् ।
सूत्रोक्तविधिना स्नात्वा शरीरं परिमार्जयेत् ॥ ३५ ॥

सन्ध्यामुपास्य देवर्षितर्पणञ्च समाचरेत् ।
स्नानवस्त्रं परित्यज्य धारयेद्धौतमम्बरम् ॥ ३६ ॥

शरीरमार्जनात्पश्चाद्धौतवस्त्रस्य धारणम् ।
तर्पणान्ते वदन्त्येके केचिदत्र महर्षयः ॥ ३७ ॥

वस्त्रधारणम्

वस्त्रस्य धारणं वक्ष्ये श्रृणुध्वं मुनिसत्तमाः ।
अर्कहस्तसमायामं दशहस्तायतं तथा ॥ ३८ ॥

अथवाऽप्यष्टहस्तञ्च श्रेष्ठमध्यमनीचतः ।
एवमायामसंयुक्तं श्रेष्ठमध्यमनीचतः ॥ ३९ ॥

षट्पञ्चयुगतालेन मानेनैव च विस्तृतम् ।
एवं लक्षणसंयुक्तं सदशं विमलं शुचि ॥ ४० ॥

श्वेतवर्णं पीतवर्णं वस्त्रद्वयमथाचरेत् ।
परिधानं परीधाप्य उत्तरीयं भुजद्वये ॥ ४१ ॥

कटिवस्त्रपरीधानमुत्तरीयं सवस्त्रकम् ।
सदशं वस्त्रमादाय परिधानं समाहितः ॥ ४२ ॥

कौपीनञ्चैव धृत्वा तु ब्रह्मचारी जितेन्द्रियः ।
वस्त्राग्रं दक्षिणे कट्यां वामकट्यां तथैव च ॥ ४३ ॥

कटिद्वयेन संस्थाप्य वस्त्रं निर्वेष्टयेद्बुधः ।
आद्यवेष्टनसंश्लिष्टं तदग्रं तत्र निक्षिपेत् ॥ ४४ ॥

पश्चात्कच्छविहीनन्तु वर्णिनां वस्त्रधारणम् ।
गृहाश्रमवताञ्चैव पश्चात्कच्छसमायुतम् ॥ ४५ ॥

स्नातकस्य वनस्थस्य गृहाश्रमवतामिव ।
वर्णिनां धारणं यद्वत्तद्वत्सन्न्यासिनामपि ॥ ४६ ॥

वैश्यानाञ्चैव शूद्राणां पश्चात्कच्छसमायुतम् ।
वैश्यशूद्रानुलोमानामेकं वा वेष्टनं स्मृतम् ॥ ४७ ॥

पश्चात्कच्छयुतं वस्त्रं धारयन्ति स्त्रियोऽखिलाः ।
वर्णिनां भिक्षुकानाञ्च पश्चात्कच्छविहीनकम् ॥ ४८ ॥

पूर्वकच्छसमायुक्तं वस्त्रधारणमिष्यते ।
गृहाश्रमवतामत्र विशेषः सम्प्रवक्ष्यते ॥ ४९ ॥

पुरःकच्छस्तिरःकच्छः पश्चात्कच्छश्च सम्मतः ।
पूर्वेद्युः धौतवस्त्रञ्च नित्यकर्मसु धारयेत् ॥ ५० ॥

सद्योधौतवस्त्र-धारणम्

देवकार्येषु सर्वेषु पूर्वेद्युः धौतमादृतम् ।
पितृकर्मणि सर्वत्र सद्योधौतं विधीयते ॥ ५१ ॥

आर्द्रवस्त्रधारणम्

आर्द्रवस्त्रं न धार्यन्तु दैवे पित्र्ये च कर्मणि ।
धारयेदार्द्रवस्त्रन्तु प्रेतकर्मणि सर्वदा ॥ ५२ ॥

एकोद्दिष्टे सपिण्डे च धौतमेवाभिधीयते ।
धृत्वा वस्त्रं यथोक्तन्तु धारयेदुत्तरीयकम् ॥ ५३ ॥

यज्ञोपवीतवद्धार्यं पूर्वपश्चिमलम्बनम् ।
वस्त्रमेवं सुसन्धार्य सर्वकर्माणि कारयेत् ॥ ५४ ॥

स्नानकाले विसृज्यैव पुनरेवञ्च धारयेत् ।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं वा वैष्णवं जनम् ॥ ५५ ॥

[पु]नःस्नान-[नि]मित्तानि

स्पृष्ट्वा सम्भाष्य वा तेन नैव स्नानं समाचरेत् ।
चण्डालं पतितं म्लेच्छमन्त्यजं रासभं तथा ॥ ५६ ॥

श्वानं शूद्रञ्च मार्जारमशुवं (?) कीकसं तथा ।
विण्मूत्रं वा मनुष्याणां मृगाणां पक्षिणामपि ॥ ५७ ॥

मृतं कृमिं वा कीटं वा स्पृष्ट्वा स्नानं समाचरेत् ।
मूषकं शलभं कीटं गोधां सर्पञ्च वृश्चिकम् ॥ ५८ ॥

जीवन्तं वा मृतं वाऽपि स्पृष्ट्वा स्नानं समाचरेत् ।
पिपीलिकां मक्षिकां वा जीवन्तीमथवा मृताम् ॥ ५९ ॥

अनुपेतं शिशुं कन्यामनूढां संस्कृतान्तु वा ।
यथोक्तकर्महीनञ्च ब्राह्मणं क्षत्रियं तथा ॥ ६० ॥

चण्डालपतितादींश्च दृष्ट्वा कर्मणि दूरतः ।
विष्णोश्च स्मरणं कृत्वा तत्तत्कर्म समाचरेत् ॥ ६१ ॥

मोहादज्ञानतो नैवं श्वानयोनौ प्रजायते ।
स्वधृतं वस्त्रमन्यत्र निक्षिप्य स्नाति यो नरः ॥ ६२ ॥

मोहादज्ञानतो वाऽपि काकयोनौ प्रजायते ।
जपादौ आसनानि बृसीं किलिञ्जकं वाऽपि तालपत्रादिनिर्मितम् ॥ ६३ ॥
कम्बलं वाऽप्यधिष्ठाय जपहोमादि कारयेत् ।
शयने विनियुक्तानि सर्वत्र परिवर्जयेत् ॥ ६४ ॥

तानि सर्वाणि सर्वत्र स्पृष्ट्वा स्नानं समाचरेत् ।
स्नानं कर्तुमशक्तश्चेदभिषेकविधानतः ॥ ६५ ॥

दिव्यं वायव्यमाग्नेयमेतेष्वेकं समाचरेत् ।
परार्थार्चनवेलायां स्नानहेतुसमुद्भवे ॥ ६६ ॥

विसृज्य वस्त्रयुगलमद्भिर्निर्णेजनं चरेत् ।
अन्यद्वस्त्रं परीधाय अर्चनं सम्यगाचरेत् ॥ ६७ ॥

आशौचिनं ब्राह्मणञ्च स्पृष्ट्वा स्नानं समाचरेत ।
स्नानं तत्र त्रिवारं स्यात् स्पृशेद्वैश्यमथेदृशम् ॥ ६८ ॥

शूद्रन्तु तादृशं स्पृष्ट्वा चतुर्वारं समाचरेत् ।
मूत्रं पुरीषमुत्सृज्य यत्र कुत्रापि निर्जले ॥ ६९ ॥

प्रयतो जलमासाद्य सचेलः स्नानमाचरेत् ।
स्नानकाले तु सर्वत्र वाससोः त्याग इष्यते ॥ ७० ॥

रेतः पुरीषं मूत्रं वा स्वकीयं स्वतनौ पतेत् ।
मृदा जलेन संशोध्य ततः शुद्धिमवाप्नुयात् ॥ ७१ ॥

परस्यैतानि संस्पृश्य सचेलः स्नानमाचरेत् ।
शास्त्रमेवं विचार्यैव वस्त्रधारणमाचरेत् ॥ ७२ ॥

एवं वस्त्रधरो भूत्वा पद्माक्षाद्यैरलङ्कृतः ।
पूर्वोक्तेन विधानेन ऊर्ध्वपुण्ड्रधरस्तथा ॥ ७३ ॥

आश्रमोक्तविधानेन नित्यकर्माणि कारयेत् ।
भगवदाराधनम् गृहाश्रमी तु सम्पूज्य शास्त्रोक्तविधिना हरिम् ॥ ७४ ॥

नैवेद्यानन्तरं विष्णोर्वैश्वदेवं विधाय च ।
विघसाशी भवेन्नित्यं वनस्थोऽपि तथा भवेत् ॥ ७५ ॥

यतीनां विधवानाञ्च नैष्ठिकब्रह्मचारिणाम् ।
प्राणाग्निहोत्रविधिना भोजनं समुदीरितम् ॥ ७६ ॥

भोजनविधिः गृहस्थानां वनस्थानामन्येषां ब्रह्मचारिणाम् ।
सायं प्रातश्च होमान्ते द्विकालं भोजनं मतम् ॥ ७७ ॥

स्वर्णादिपात्रं सन्न्यस्य चतुरश्रे च मण्डले ।
रम्भापत्रं पलाशं वाऽप्यनिन्द्यं पत्रभाजनम् ॥ ७८ ॥

शुद्धान्नं तत्र निक्षिप्य सूपशाकादिवर्जितम् ।
पूर्वाभिमुखमासीनः प्रत्यङ्मुखमथापि वा ॥ ७९ ॥

'ऋतन्त्वा सत्य' मन्त्रेण सायेऽह्नि परिषिच्य च ।
'सत्यं त्वर्तेन' मन्त्रेण प्रातश्च परिषेचयेत् ॥ ८० ॥

अन्नसूक्तेनाभिमर्शं केचिदाहुर्महर्षयः ।
केचिन्नेच्छन्ति तं तस्मात्पूर्वैराचरितं चरेत् ॥ ८१ ॥

'अमृतोपस्तरणम' सीत्याधावं प्राशयेद्बुधः ।
दक्षिणेनैव हस्तेन अङ्गुष्ठानाममध्यमैः ॥ ८२ ॥

वामहस्तेन तत्पात्रं स्पृशन् अन्नं प्रगृह्य च ।
प्राणाय चेत्यपानाय व्यानाय च ततः परम् ॥ ८३ ॥

उदानाय समानाय स्वाहेत्यास्ये विनिक्षिपेत् ।
सूत्रोक्तेन विधानेन मन्त्रेणाऽपः पुनः पिबेत् ॥ ८४ ॥

सूपादिव्यञ्जनं भक्ष्यमन्यपात्रे विनिक्षिपेत् ।
व्यञ्जनैः समुपस्कृत्य अन्नमद्यादतः परम् ॥ ८५ ॥

सूपादिव्यञ्जनैर्युक्तमन्नं यः परिषिञ्चति ।
मोहादज्ञानतो वाऽपि तमाहुर्ब्रह्मघातुकम् ॥ ८६ ॥

पञ्चग्रासे महामौनं प्राणाद्याप्यायनं मतम् ।
नावश्यं भोजने मौनं कुटुम्बाश्रमवासिनाम् ॥ ८७ ॥

वाचोपचारः कर्तव्यो भुञ्जतां सह भोजने ।
प्राणाहुतिषु सर्वासु हुतास्वेव त्यजेद्गृही ॥ ८८ ॥

प्राणाहुतौ हुतायां वा सन्त्यजेन्मौनधारणम् ।
'अमृतापिधानम' सीति पुनरन्ते जलं पिबेत् ॥ ८९ ॥

करप्रक्षालनं कृत्वा पुनराचमनं चरेत् ।
नैष्ठिकानां यतीनाञ्च उदरस्याभिमर्शनम् ॥ ९० ॥

एष एव विशेषः स्यादन्यत्सूत्रोक्तवच्चरेत् ।
स्वाध्यायकाल-कर्तव्यम् भोजनानन्तरं वेदान् वेदाङ्गान्यथ वा पठेत् ॥ ९१ ॥

विष्णुं सदा हृदि ध्यायेत्सगुणं निर्गुणं बुधः ।
भर्तृभुक्तावशिष्टं तत्पात्रे स्त्री स्वयमश्नुते ॥ ९२ ॥

ध्यायन्ती हृदि भर्तारं साक्षाद्विष्णुं जनार्दनम् ।
शूद्राणां योषिताञ्चापि मन्त्रवर्ज्यं हि भोजनम् ॥ ९३ ॥

पत्युच्छिष्टभुजो योषा अन्योच्छिष्टन्तु दूष्यते ।
परस्परञ्च शिशवो नान्योन्योच्छिष्टभोजिनः ॥ ९४ ॥

विष्ण्वर्पितन्तु ताम्बूलं भक्षयेत्तु गृहाश्रमी ।
सायं सन्ध्यामुपास्यैव तत्तत्कार्यं समाचरेत् ॥ ९५ ॥

सदाचारवतां सत्फलप्राप्तिः

गृहस्थः सह वै पत्न्या संविशेच्छास्त्रवद्बुधः ।
नित्यमेवं प्रकुर्वाणः श्रौतस्मार्तोदिताः क्रियाः ॥ ९६ ॥

विहितान्यन्यकर्माणि कुर्वन् ध्यायन् जनार्दनम् ।
द्विजः पापात्प्रमुच्येत प्राप्नुयाद्ब्रह्म शाश्वतम् ॥ ९७ ॥

नित्याचारविहीनस्य समस्ता निष्फलाः क्रियाः ।
विष्णुभक्तिविहीनस्य यथा सर्वं सुनिष्फलम् ॥ ९८ ॥

शिवेनापि कृतं कर्म भवेन्निष्फलमेव तु ।

सङ्कल्पकरणम्

कर्मणामपि सर्वेषामादौ सङ्कल्पितं वदेत् ॥ ९९ ॥

श्रीविष्णोराज्ञया सर्वं प्रवर्तितमिदं जगत् ।
वर्तमानेऽपि चैतस्मिन् वत्सरेऽप्ययने ऋतौ ॥ १०० ॥

मासे पक्षे च नक्षत्रे तिथौ वार इतीर्य च ।
भगवत्प्रीतय इदं करिष्ये कर्म इत्यपि ॥ १०१ ॥

समर्प्य विष्णौ कर्तृत्वं सर्वं कर्म समारभेत् ।
बहूनां कर्मणाञ्चापि कुर्यात्सङ्कल्पमेकदा ॥ १०२ ॥

असङ्कल्प्य कृतं कर्म अहं बुद्ध्या कृतञ्च यत् ।
तद्भवत्यासुरं कर्म असुरा गृह्णते फलम् ॥ १०३ ॥

नित्यार्चनस्य-प्राथम्यम्

पूर्वं नित्यार्चनं कुर्यात्पश्चान्नैमित्तिकार्चनम् ।
नैमित्तिकार्चनं प्रोक्तं विष्णुपञ्चदिनोदितम् ॥ १०४ ॥

विष्णुपञ्चदिनानि

विष्णुपञ्चदिनान्याहुरमावास्या च पूर्णिमा ।
द्वादश्यौ द्वे च श्रवणं श्रवणद्वादशी वरा ॥ १०५ ॥

कालस्वरूपी भगवानास्ते विष्णुरजोऽव्ययः ।
जगद्भर्ता जगत्पाता जगद्धर्ता स्वतेजसा ॥ १०६ ॥

काश्चित्कालान् विशेषेण स्वीचकार जगत्प्रभुः ।
मासेषु मार्गशीर्षञ्च तिथिषु द्वादशीमपि ॥ १०७ ॥

श्रवणञ्चैव तारासु वैखानसमिवर्षिषु ।
श्रवणद्वादशीयोगः सर्वदा सम्प्रशस्यते ॥ १०८ ॥

तत्रार्चनं विशेषेण सर्वकामफलप्रदम् ।
मार्गशीर्षशुक्ल-द्वादशीविशेषः
द्वादशी शुक्लपक्षे च मार्गशीर्षे यदा भवेत् ॥ १०९ ॥

तस्यामभ्यर्च्य देवेशं जगन्नाथं जगद्गुरुम् ।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ११० ॥

माघशुक्लद्वादशी श्रावणकृष्णाष्टमी
माघमासे शुक्लपक्षे द्वादश्यामर्चनं तथा ।
श्रावणासितपक्षे तु सिंहराशिं गते रवौ ॥ १११ ॥

अष्टम्यामर्चनं तद्वद्विष्णुलोकप्रदं नृणाम् ।
सर्वपापहरौ पुण्यौ वदन्ति मुनयो बुधाः ॥ ११२ ॥

जया
द्वादश्या पूर्वपक्षे तु माघमासे विशेषतः ।
पुनर्वस्वोर्यदा योगो जया स्यादितरा तथा ॥ ११३ ॥

जयन्ती
अष्टमी कृष्णपक्षे तु श्रावणे रोहिणीयुता ।
वियुक्ता वा जयन्तीति कीर्तिता वेदपारगैः ॥ ११४ ॥

अविद्धा अष्टमी
अविद्धायान्तु सप्तम्यां जातोऽष्टम्यां हरिः स्वयम् ।
सौम्याग्नेययुता वाऽपि तां जयन्तीं विदुर्बुधाः ॥ ११५ ॥

जयाजयन्ती तिथ्यृक्षप्रधाने इति केचन ।
जयार्चनकालः
जयार्चने च मध्याह्ने पूजयेद्राघवं बुधाः ॥ ११६ ॥

जयन्त्यर्चनकालः
चन्द्रोदये जयन्त्यां वै कृष्णं सम्पूजयेत्तथा ।
जयायाञ्च जयन्त्याञ्च पूजयेद्दोषशान्तये ॥ ११७ ॥

रामस्य राघवस्यैव जननन्तु जयेरिता ।
जयन्ती कृष्णदेवस्य जननं परिकीर्तिता ॥ ११८ ॥

पूर्वपक्षे पुनर्वस्वोः द्वादश्यां माघमासि वै ।
तत्र कर्कटके लग्ने मध्यन्दिनगते रवौ ॥ ११९ ॥

रामो दाशरथिर्भूत्वा सर्वकारणकारणः ।
आविरासीज्जगन्नाथो मध्याह्नसमये प्रभुः ॥ १२० ॥

अष्टम्यामपि रोहिण्यां निशीथे तु विधूदये ।
देवो यदुकुले जातः कृष्णविग्रहभृद्विभुः ॥ १२१ ॥

अवतारसहस्रेषु विग्रहेषु परात्मनः ।
दशावतारा मुख्याः स्युः द्वौ तु मुख्यतमौ स्मृतौ ॥ १२२ ॥

जयाजयन्त्योः प्राधान्यम्

तस्मात्तयोरर्चनन्तु मुख्यमाहुर्मनीषिणः ।
रामकृष्णालये वाऽपि अन्यस्मिन्नपि मन्दिरे ॥ १२३ ॥

जयाजयन्त्योः सर्वत्र रामकृष्णौ समर्चयेत् ।
अन्येषामपि देवानां देवीनाञ्च यथाविधि ॥ १२४ ॥

जन्मकाले तिथिं वाऽपि तथा नक्षत्रमेव वा ।
मुख्यं ज्ञात्वा विधानेन वर्षवर्धनमाचरेत् ॥ १२५ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
नित्यानुष्ठानविधिर्नामाष्टत्रिंशोऽध्यायः ॥

# एकोनचत्वारिंशोऽध्यायः



यागशालाकल्पनम् अतः परं प्रवक्ष्यामि सर्वाग्निस्थापनक्रमम् ।
सूत्रैश्चतुर्भिः षड्भिश्च अष्टभिश्च क्रमाद्बुधः ॥ १ ॥

प्रागग्रैरुत्तराग्रैश्च पदं सम्यक् प्रकल्पयेत् ।
क्रमाद्भवेन्नवपदं पञ्चविंशतिकं तथा ॥ २ ॥

एकोनपञ्चाशत्कञ्च यागशालाविधौ पदम् ।
षोडशस्तम्भसंयुक्तं भवेन्नवपदे गृहे ॥ ३ ॥

षट्त्रिंशत्स्तम्भसंयुक्तं पञ्चविंशत्पदे गृहे ।
चतुष्षष्टिस्तम्भयुतं तद्भवेदुत्तमं गृहम् ॥ ४ ॥

अथ वक्ष्ये विशेषेण पददेवान् पदत्रये ।
मध्ये तु ब्रह्मणः स्थानमिन्द्रादीनान्तु तद्बहिः ॥ ५ ॥

ईशानेन्द्रान्तरे स्थानं गरुडस्य प्रकीर्तितम् ।
इन्द्राग्न्योरन्तरे स्थानं चक्रस्य परिकीर्तितम् ॥ ६ ॥

यमाग्न्योरन्तरे स्थानं श्रीभूतस्य प्रकीर्तितम् ।
यमस्य दक्षिणे स्थानं ब्रह्मणः परिकीर्तितम् ॥ ७ ॥

नीलवारुणयोर्मध्ये पुण्यस्थानमुदीरितम् ।
वरुणोदानयोर्मध्ये यत्पदं तद्भृगोर्विदुः ॥ ८ ॥

धनदोदानयोर्मध्ये शङ्करस्य पदं भवेत् ।
कुबेरेशानयोर्मध्ये विष्वक्सेनपदं भवेत् ॥ ९ ॥

चतुर्थावरणेऽप्यूर्ध्वे देवताक्रम उच्यते ।
इशानोर्ध्वपदे धाता इन्द्रस्योर्ध्वपदेऽर्यमा ॥ १० ॥

अंशुर्मित्रस्तथाऽऽग्नेये अग्नेरूर्ध्वपदद्वये ।
याम्योर्ध्वे वरुणः प्रोक्तो भग इन्द्रश्च नैर्ऋते ॥ ११ ॥

विवस्वान् वारुणे पूषा पर्जन्यो मरुदूर्ध्वतः ।
त्वष्टा तु धनदस्थाने विष्णुः क्षत्तुरनन्तरम् ॥ १२ ॥

शेषितार्कपदञ्चैव द्वादशार्ककलापदम् ।
तत्पदेषु च तान् देवान् समावाह्य समर्चयेत् ॥ १३ ॥

सुदर्शनब्रह्मभृगुशान्तानामूर्ध्वके पदे ।
न्यक्षो विवस्वान् मित्रश्च क्षत्ता स्युः द्वारपालकाः ॥ १४ ॥

वीशोर्ध्वे प्रथमद्वारपाल्योः स्थानमीरितम् ।
श्रीभूतोर्ध्वे विखनसः तापसस्य च कीर्तितम् ॥ १५ ॥

किष्किन्धतीर्थयोः स्थानं पुण्यस्योर्ध्वे प्रकीर्तितम् ।
शङ्करस्य पदादूर्ध्वं नागराजगणेशयोः ॥ १६ ॥

नित्याक्षहन्तयोः पूर्वं द्वारदक्षिणवामयोः ।
नित्याक्षहन्तयो (?) रूर्ध्वं स्थानं स्याद्ध्वजशङ्खयोः ॥ १७ ॥

तत्तत् स्थाने समावाह्य समभ्यर्च्य निवेद्य च ।
औपासनाग्निकुण्डानि कुर्यात्तत्तत्पदेषु च ॥ १८ ॥

परिवारप्रतिष्ठायां तेषु कुण्डेषु होमयेत् ।
ग्रहसङ्ख्यापदं कूटं ब्रह्मदिक्पालदैवतम् ॥ १९ ॥

पञ्चविंशत्पदं कूटमधुना सम्प्रवक्ष्यते ।
पूर्वं नवपदस्योक्ता मण्डपस्याधिदेवताः ॥ २० ॥

ईशवीशेन्द्रचक्राग्निश्रीभूतयमपद्मजाः ।
नीलपुण्यसरिद्राजख्यातीशोदानशङ्कराः ॥ २१ ॥

कुबेरशान्तौ पतयः ऊर्ध्वे षोडश देवताः ।
तत्र एकोनपञ्चाशत्पदसञ्ज्ञाधिपा इमे ॥ २२ ॥

पूर्वोक्तपञ्चविंशादिपदानान्तु पुरोदितम् ।
कुम्भवेद्याः दक्षिणतः पदमारभ्य तत्क्रमात् ॥ २३ ॥

धात्रादिद्वादशादित्यानर्चयेदन्तरान्तरा ।
द्वादशार्ककलाश्चापि समावाह्य समर्चयेत् ॥ २४ ॥

चतुःषष्टिपदे कूटे शिष्टेषु च पदेष्वपि ।
ऐशान्यां कुम्भवेदिः स्यात्पौण्डरीकञ्च पावके ॥ २५ ॥

अङ्कुरारोपणार्थन्तु नैर्ऋत्यां वेदिका भवेत् ।
वास्तुपानाञ्च पूजार्थं वायव्ये चाऽपि वेदिका ॥ २६ ॥

पञ्चविंशद्गृहपदे चैवं नवपदात्मके ।
कुम्भवेदिः पौण्डरीकमङ्कुरार्पणवेदिका ॥ २७ ॥

वास्तुपानाञ्च पूजार्थं रचिता चापि वेदिका ।
तत्तत् स्थानेषु कर्तव्याः प्रयत्नेन मनीषिभिः ॥ २८ ॥

शिष्टानि तु पदानि स्युः सदस्यानामथर्त्विजाम् ।
सदस्या बहवः कार्याः विधिज्ञा दीर्घदर्शिनः ॥ २९ ॥

कर्मणान्तु समीपस्था उपद्रष्टार ईरिताः ।
सर्वार्त्विज्यमुपद्रष्टा सदस्येन सहार्हति ॥ ३० ॥

आचार्यस्यर्त्विजां होतुर्मन्त्रतन्त्रक्रियादिषु ।
अप्रज्ञातेषु विशये सर्वार्त्विज्यविधानतः ॥ ३१ ॥

उपद्रष्टा स्वयं कुर्यादथ चोपदिशेत्क्रियाः ।
सदस्याश्च तथा कुर्युर्न कुर्युरथवेच्छया ॥ ३२ ॥

परिवाराध्वर्यवश्च सप्ताग्न्यध्वर्यवस्तथा ।
ब्रह्मसोमावृत्विजौ द्वौ होता च कुशली युवा ॥ ३३ ॥

अक्ष्युन्मेषणवास्त्वग्निहोमार्थं द्वावथर्त्विजौ ।
स्नापनं सर्वदेवार्चा स्थापनञ्चेति कर्मसु ॥ ३४ ॥

ऋत्विजो वरणीयाः स्युर्यमादिगुणसंयुताः ।
आचार्यसदनं प्राप्य यजमानो मुदान्वितः ॥ ३५ ॥

वाद्यघोषसमायुक्तं स्वस्तिवाचनपूर्वकम् ।
ऋत्विग्भिः परिचारैश्च सहितं गुरुमत्वरः ॥ ३६ ॥

समाहूय समानीय यागशालामलङ्कृताम् ।
उपवेश्यासनेष्वर्चेन्मधुपर्केण शक्तितः ॥ ३७ ॥

अनुमान्य च देवेशं पुण्याहान्ते यथाक्रमम् ।
ऋत्विजो वरयेत्सर्वान् कार्यनिर्देशपूर्वकम् ॥ ३८ ॥

आदिमध्यावसानेषु सदस्यवरणं भवेत् ।
गुरुर्ब्रह्मा भृगुर्होता हरिर्वा समुदीर्यते ॥ ३९ ॥

परिवाराध्वर्यवश्च परिवारस्वरूपिणः ।
सप्ताग्न्यध्वर्यवश्चापि तत्तदग्निस्वरूपिणः ॥ ४० ॥

सर्वे देवाः सदस्याः स्युरुपद्रष्टा बृहस्पतिः ।
ब्रह्मेशहरयः प्रोक्ताः स्थापकस्नापकार्चकाः ॥ ४१ ॥

ब्रह्मसोमौ तु सम्प्रोक्तौ ब्रह्मसोमस्वरूपिणौ ।
अक्ष्युन्मेषणहोमर्त्विक् पञ्चभूतशरीरवान् ॥ ४२ ॥

वास्त्वग्न्यध्वर्युरुदितः साक्षाद्वै वास्तुपूरुषः ।
चक्रवीशामितानन्तरूपिणः परिचारकाः ॥ ४३ ॥

आचार्यादींस्तथारूपान् ध्यात्वाऽऽवाह्य समर्च्य च ।
'भवन्तः कर्म कुर्वन्तु ममेद' मिति याचयेत् ॥ ४४ ॥

वृताः सम्प्रार्थिताः सर्वे कर्म कुर्युः समाहिताः ।
प्रागग्रैरुत्तराग्रैश्च सूत्रैः स्यात्पदकल्पनम् ॥ ४५ ॥

विष्णुगायत्रिया कृत्वा पूजयेत्पददेवताः ।
गोमयालेपनं कुर्या 'दाशा' स्विति च मन्त्रतः ॥ ४६ ॥

श्वेततण्डुलचूर्णेन चक्रवालादिभिर्बहु ।
यथामनोनेत्ररुचि त्वलङ्कुर्यात्समन्ततः ॥ ४७ ॥

दर्भमालादिभिर्विष्वग्वितानैः स्तम्भवेष्टनैः ।
यागशालामलङ्कुर्यादङ्कुरैः पालिकादिभिः ॥ ४८ ॥

ब्रह्मसोमामितानन्तचक्रवीशध्वजानपि ।
आरोपयेद्यज्ञगुप्त्यै शालाया उपरि क्रमात् ॥ ४९ ॥

सचतुःस्त्रिद्व्यावृतिभिः शालास्त्वेधोत्तमाधमाः (?) ।
चतुःषष्टिस्तम्भयुतं षट्त्रिंशत्स्तम्भसंयुतम् ॥ ५० ॥

षोडशस्तम्भसंयुक्तं यज्ञसद्म त्रिधोदितम् ।
अष्टाविंशतिस्तम्भेषु बाह्यावरणगेषु च ॥ ५१ ॥

अष्टाविंशतिनक्षत्राण्यधिदेवान् समर्चयेत् ।
पङ्क्तिद्वितीयपादेषु शाखा विंशतिरीरिताः (?) ॥ ५२ ॥

अन्तरावरणस्तम्भा महाशाखाधिदेवताः ।
प्रोक्तास्तस्मादन्तरङ्गाः (?) द्वादशादित्यदेवताः ॥ ५३ ॥

धर्मं ज्ञानञ्च वैराग्यमैश्वर्यमिति च क्रमात् ।
अन्तः स्तम्भचतुष्केषु अर्चयेदधिदेवताः ॥ ५४ ॥

'भूर्भुवस्स्वर्महर्जन' इति व्याहृतिभिः क्रमात् ।
गार्हपत्यादिकुण्डानि निर्मितानि स्वयम्भुवा ॥ ५५ ॥

भूरादीनाञ्च लोकानामाकृतीनि तथा स्मरेत् ।
गार्हपत्यादिकुण्डानामाकारस्तद्वदीरितः ॥ ५६ ॥

तपः सत्यमिति प्रोच्य पञ्चाग्निः श्रामणानलः ।
ब्रह्मणा कल्पितौ कुण्डौ तथैतौ कुरुते गुरुः ॥ ५७ ॥

संस्थाप्य गार्हपत्येऽग्निमादौ 'भू'रिति सञ्जपन् ।
'भुव'रादिभिरन्येषु कुण्डेष्वग्निं निधापयेत् ॥ ५८ ॥

ब्रह्माऽग्निं पञ्चधा कृत्वा पञ्चलोकेष्वकल्पयत् ।
'पञ्चधाऽग्नीन् व्यक्राम' दित्येषा वैदिकी श्रुतिः ॥ ५९ ॥

वैकल्यमग्निहोत्राणां तपसाञ्चापि चालनम् ।
विचित्य श्रमणेनाग्निं स्वयम्भूरसृजत्पुरा ॥ ६० ॥

सोऽग्निः श्रामणकः प्रोक्तः सभ्यस्थानीय ईरितः ।
ब्रह्मणश्च विशेषेण हृदयाब्जे यतोऽजनि ॥ ६१ ॥

अब्जाग्निः स समाख्यातः तपोलोके प्रतिष्ठितः ।
तत्रान्योऽपि विधिः प्रोक्तो वह्नीनां वै निधापने ॥ ६२ ॥

जपन्वै विष्णुगायत्रीमन्ते विष्ण्वादिनामभिः ।
पञ्चभिः पञ्चकुण्डेषु सभ्यादिषु यथाक्रमम् ॥ ६३ ॥

नमः स्वाहा स्वधा स्वेकं चतुर्थ्यन्तं समुच्चरन् ।
अग्नीन् पञ्च समादध्याद्वासुदेवादि चोच्चरन् ॥ ६४ ॥

अग्निराधीयत्ते यत्र प्रतिष्ठादिषु कर्मसु ।
भूरादिभिर्व्याहृतिभिः क्रमाद्धोमो विधीयते ॥ ६५ ॥

सप्तस्वग्निषु सप्तैव व्याहृतीर्जुहुयादिति ।
'नयं प्रजां म' इत्याद्यैरुपतिष्ठेत पावकम् ॥ ६६ ॥

सप्ताग्निषु च तावद्भिः पञ्चभिः पञ्चवह्निषु ।
त्रिभिस्त्रिषु तथैकस्मिन् सभ्येन मनुना बुधः ॥ ६७ ॥

सभ्यादिस्थापने होमान् विष्ण्वादिक्रमतश्चरेत् ।
'विष्णोर्नुका' द्यैः सभ्यादीनुपतिष्ठेत भक्तितः ॥ ६८ ॥

वैष्णवैरुपतिष्ठेत मन्त्रैः श्रामणकानलम् ।
यावत्कर्मावसानन्तु तावत्पावकरक्षणम् ॥ ६९ ॥

नित्यहोमन्तु पुरतः प्रधानांश्च ततः परम् ।
कर्महोमं ततः कुर्यादुपस्थानमतः परम् ॥ ७० ॥

कार्यान्तेऽग्नीन् सुसङ्गृह्य समारोप्य च पूर्ववत् ।
नित्याग्नौ सर्वकर्माणि तत्रैव विधिना चरेत् ॥ ७१ ॥

आलयात्पुरतो वाऽपि याम्ये कौबेर एव वा ।
यागशालां प्रतिष्ठाप्य प्रतिष्ठाफलमाप्नुयात् ॥ ७२ ॥

महत्सु प्रायश्चित्तेषु महासम्प्रोक्षणादिषु ।
अरण्यां नित्यहोमाग्निमारोप्याऽऽदायचाऽऽचरेत् ॥ ७३ ॥

नित्यमग्निं धारयितुमशक्तः समिदादिषु ।
समारोप्याचरेत्कर्म सूत्रोक्तविधिना बुधः ॥ ७४ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे सर्वाग्निस्थापनक्रमो नाम एकोनचत्वारिंशोऽध्यायः ॥

श्रियै नमः

श्रीनिवासाय नमः

## क्रियाधिकारानुबन्धः (१)

# मातृकाग्रन्थपरिचयः-पाठभेदसङ्ग्रहश्च ।



येन वेदार्थविज्ञेन लोकानुग्रहकाम्यया ।
प्रणीतं सूत्रमौखेयं तस्मै विखनसे नमः ॥

अस्य श्री क्रियाधिकारग्रन्थस्य संस्करणे परामृष्टानां आदर्श मातृकाग्रन्थानां परिचयः तत्र तत्र परीक्षितपाठभेदानां सङ्ग्रहश्चाधः प्रदर्श्यते ॥

आदर्शमातृका ग्रन्था यथा —

१. श्री वेङ्कटेशप्राच्यलिखितपुस्तकभाण्डागारस्थः **क.** संज्ञितः । (Stock No. 2378). २५१ तालपत्रात्मकः । ग्रन्थाक्षरलिखितः । अत्र पुस्तके ४६ प्रभृति ६२ पत्रपर्यन्तानि पत्राणि नष्टानि, नोपलभ्यन्ते । तथा १५४ पत्रे १६१, १६२, १६३, १६४ पत्रेषु च पाश्चात्यमर्धं सर्वत्र त्रुटितम् । तथा, २०१, २०४, २०५, २०६ पत्राणि च त्रुटितानि । तथा, २३१, २३२ पत्रे नष्टे ॥

२. उत्तनूर्-अर्चकं **श्रीनरसिंहाचार्याणां** सम्बन्धी— **ख.** संज्ञितः २४२ तालपत्रात्मकः । ग्रन्थाक्षरलिखितः । ४० अध्यायात्मकः । अत्र पाश्चात्यपत्रद्वये मृत्सङ्ग्रहणस्थाननिर्णय महानवमीनिर्णयौ दृश्येते । 'अविरलकृतवर्णभ्रेषणं पुस्तकेऽस्मिन् लिखितमनवसाने लेखिनीदूषणं वा । अनुचितमथवा यद्वर्णतो वक्रितो वा करकृतमपराधं क्षन्तुमर्हन्ति सन्तः' ॥ 'विकारिवर्षे वैशाखे शतभिषानक्षत्रसंयुते । गुरुवारे तिथौ षष्ठ्यां तुलालग्ने तु पूर्तितम् (?) । श्री वैखानससूत्रेण पराङ्कुशनिवासिना । वेङ्कटेशस्यार्चकेन श्रीरामेण च लेखितम् ॥ श्री वेङ्कटेशपरिपूर्णाय मङ्गलम्' इति २४२ पत्रसमाप्तौ दृश्यते । ग्रन्थादौ सार्धपञ्चपत्रेषु विषयसूचिका लिखिता ॥

३. स्यानन्दूरपुर ( तिरुवान्कूर् ) प्रभुत्वप्राच्यपुस्तकभाण्डागारस्थः । व्यवहार पत्रेषु देवनागराक्षरैः लिखितः **ग.** संज्ञितः । सम्पुटद्वये 349 foolscap पुटात्मकः (Tanscript Stock No. 193 $b \times c$ from Original secured fror Kalladakurichi Rangavadhyar and Copied in 30-2-108 Kollam Era.) तत्र २५० पुटादारभ्य ३६९ पुटपर्यन्तं राजधर्माध्यार वर्तते क्रियाधिकार षट्त्रिंशाध्यायत्वेन ॥

४. श्रीविल्लिपुत्तूर् - अर्चकं **श्री गोपालभट्टाचार्याणां** सम्बन्धी ग्रन्थाक्षर लिखितः **घ. संज्ञितः** । ४० अध्यायात्मकः । १८८ पत्रात्मकः । तालपत्रलिखितः ८७, ८८ पत्रयोः 'सुन्दरपरिपूर्णाय नमः । सुन्दरपरिपूर्णाय मङ्गल' मित्यस्ति कृत्तिकादीपविषयविचारः अन्तिमपत्रे वर्तते ॥

५. श्रीविल्लिपुत्तूर् - अर्चकं **श्रीरामाभट्टाचार्याणां** सम्बन्धी **च.** संज्ञित १८८ तालपत्रेषु ग्रन्थाक्षरैः लिखितः । ४१ अध्यायात्मकः । पाश्चात्येषु १८९ t २१० पत्रपर्यन्तपत्रेषु अधिकारान्तराणां ग्रन्थसंज्ञया, ततः पञ्चदशसु प्रयोगान्तरं, तत दशसु पत्रेषु नित्यहोमकुण्डस्वरूपं, ततो दशसु प्रयोगान्तरं, ततो नवसु सोमच्छन्द विमानिर्माणविषयः, ततः अष्टासु कूष्माण्डहोमप्रयोगः, ततः सप्तसु पत्रेषु दैविक मन्त्रप्रश्नारम्भश्च वर्तन्ते । ३८ अध्यायान्ते 'श्री सुन्दरपरिपूर्णाय मङ्गल' मि वर्तते । सुन्दरपरिपूर्ण इति–तिरुक्कुरुङ्गुडिदिव्यदेशे, तिरुकुच्चिनम्बि नाम्नः भगव द्रामिडभाषानाम ॥

६. श्रीविल्लिपुत्तूर् - अर्चकम् प्रतिष्ठाभूषणम् **श्रीअलङ्कारभट्टाचार्या** सम्बन्धी **छ.** संज्ञितः । तालपत्रकोशः । २२१ पत्रात्मकः । ग्रन्थाक्षरलिखितः १४७ पत्रे '१०७७ मितकोल्लशके प्लवनामसंवत्सरे लिखितः' इति तथा, १६९ पत्रे, '**लक्ष्मणभट्टर्** कुमारस्य **श्रीनिवासभट्टाचार्यस्य** श्रीविल्लिपुत्तूर् अर्चकं मिरास्' इति । तथा, '१७१ पत्रे' **लक्ष्मणभट्टर्** कुमार **चीनु** १०७७ । नामकल् **चामण्णा अय्यङ्गार्** मेल्पाडम् । इति तथा, १७४ प '१९७१ सं कार्तिक मासि । श्रीमत्यै गोदायै नमः' इति च वर्तते ॥

७. अडयार् लैब्ररीस्थितः ज. संज्ञितः । २७४ तालपत्रात्मकः । ग्रन्थाक्षरलिखितः । ३५ अध्यायात्मकः । (Adyar Library. 33 J 22 Accession number 75412 भृगुसंहिता) ॥

८. तिरुक्कोट्टियूर् - अर्चकं **श्रीसौम्यमूर्तिभट्टाचार्याणां** सम्बन्धी तालपत्रलिखितः ञ. संज्ञितः । २०२ पत्रात्मकः । ३६ अध्यायात्मकः । 'इदं पुस्तकं **परमस्वामि**लिखित' मित्यस्ति तत्र तत्र ॥

अत्रैव अर्चकं **श्री श्रीधरभट्टाचार्याणां** सम्बन्धी ग्रन्थोऽपि अनन्तरोक्तमातृका सदृशो दृष्टः ।

९. काळहस्ति - अर्चकं **श्री अच्युताचार्याणां** सम्बन्धी **ट.** संज्ञितः तालपत्रलिखितः ३३ अध्यायात्मकः । ग्रन्थाक्षरैः १८३ पत्रेषु लिखितः ॥

१०. तिरुपति - अर्चकं पेद्दिंटि **श्री श्रीनिवासदीक्षितानां** सम्बन्धी ३२४ पुटेषु व्यवहारपत्रेषु लिखितः **ठ.** संज्ञितः। ३३ अध्यायात्मकः । काळहस्ति मातृकाया उद्धृतः । आन्ध्राक्षरैर्लिखितः ॥

११. वानमामलै - अर्चकम् **श्री वेङ्गुभट्टाचार्याणां** सम्बन्धी **ण.** संज्ञितः । २५० पत्रात्मकः । ग्रन्थाक्षरैर्लिखितः। एकोनचत्वारिंशदध्यायात्मकः। 'वर्षे शुभकृते मासे कुम्भे कृष्णे तु वासरे । क्रियाधिकारमादित्ये वानाद्रिस्थलवासिना ॥ प्रतिमालक्ष्य ग्रन्थेऽस्मिन् वेङ्कटेशसुतेन च । वानाचलेन लिखितं वरमङ्गाकृपावशात् ॥ ....७८ वर्षं मासि मासं १० तेदि येघुदि मुडिन्ददु (வெழுதி முடிந்தது) श्रीविखनसगुरवे नमः, श्रीदेवनाथपरब्रह्मणे नमः, श्रीवरवरमङ्गै सहायम् । वानमामलैय्यङ्गार्' इति वर्तते ॥ आरम्भे, अष्टसु पत्रेषु, सङ्ख्याविरहितेषु वीडुविडै, (வீடு-விடை) तिरुक्कार्तिकै, (திருக்கார்த்திகை)महाचक्रस्य लक्षणम्, कस्तूरिकाप्पुणच्चरिक्कै, (கஸ்தூரிகாப்புனச்சரிக்கை) जटिबन्धनं, इति विषयाः वर्तन्ते ॥ अन्ते च विद्धाकालदीपः, ग्रहणकालार्चने त्याज्यम्, इति विषयौ ३५ पत्रेषु सङ्गृहीतौ ॥

१२. **संहितासारः. स.** संज्ञितः। ३०० तालपत्रात्मकः, '**प्रयिष्ठादीपिका**' इति प्रसिद्धसङ्ग्रहग्रन्थादुद्धृताः प्रकृताः क्रियाधिकाराध्यायाः---अयञ्च **संहितासारग्रन्थः**

चित्तूरुमण्डलान्तर्गत **पलमनेरु** ग्रामाभिजनानां अर्चकं **श्री तिप्पय्याचार्याणा** सकाशाल्लब्धः । अत्यन्तं प्राचीनः शिथिलपत्रश्च । अस्य ग्रन्थस्य मातृकान्तरं कुत्राप्यन्यत्र न लभ्यते ॥

१३. कृष्णामण्डलान्तर्वर्ति **आकुलमन्नाडुग्रामे** श्री वैखानसविद्यानिलय प्राच्य लिखितपुस्तकभाण्डागारस्थः **य.** संज्ञितः । तालपत्रलिखितः । २२६ पत्रात्मकः । आन्ध्राक्षरलिखितः । ४५ अध्यायपरिमितः । **रोंपिचर्लभट्टर् श्री कोदण्डरामाचार्य पाकयाजिभिः,** तञ्जावूर् मण्डलान्तर्गत **कोनेरिराजपुराग्रहारा**भिजनानां सन्तत श्री वासुदेवनामचिन्तनाधिगत वासुदेवभट्टाचार्यापरनामधेयानां, **श्री रघुपतिभट्टाचार्याणां** मातृकानुसारेण लिखितः ॥

१४. अनन्तरोक्त श्री वैखानसविद्यानिलयस्थः १०५ पत्रात्मकः । तालपत्रेषु आन्ध्राक्षरैः ३५ अध्यायेषु **रोंपिचर्लभट्टर् श्री नृसिंहाचार्यैः** आन्ध्राक्षरै लिखितः **र.** संज्ञितः ॥

१५. **गुण्टूरु** मण्डलान्तर्वर्ति **यीपूरुग्रामा**भिजनानां **देवयजनं श्री वेङ्कटरामाचार्याणां** सम्बन्धी **ल.** संज्ञितः । व्यवहारपत्रलिखितः । ५५० पुटात्मकः ४९ अध्यायपरिमितः । आन्ध्राक्षरैः लिखितः । प्रायः १३ ग्रन्थादुद्धृतः ॥

एतेषामादर्शग्रन्थानां शीघ्रोपस्थितिसौकर्याय प्रायिकं पाठसाजात्यमनुरुद्ध्येत्थं तत्र सङ्केतः सञ्चालितः, यथा — **क, ख, च, घ, स** कोशानां **आ** इति **ग, छ, ज, ञ, र** एतेषां **इ** इति । **ट, ठ, ण** एतेषां **अ** इति । **य, ल** एतयोः **ई** इति च ॥

---

अस्य मुद्रितग्रन्थस्य पुटपद्यपङ्क्तिप्रदर्शनेन आदर्शमातृकाग्रन्थेषु प्राधान्येन परामृष्टाः पाठभेदाः यथा —

तत्रादौ ग्रन्थारम्भश्लोका इत्थं दृश्यन्ते विभिन्नकोशेषु ।

**य. र. ल.** आदर्शेषुः—

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युः तं नमामि हयाननम् ॥ १ ॥

भृगुं मुनिवरं श्रेष्ठं विष्णावमलतेजसि ।
संसक्तचित्ता मुनयः प्रणिपत्येदमब्रुवन् । २ ॥

ऋषय ऊचुः ॥

ब्रह्मपुत्र ! मुनिश्रेष्ठ ! त्वमेव ब्रह्मणः प्रियः ।
त्वमेव सर्ववेत्तासि त्वमेव वदतां वरः ॥ ३ ॥

त्वत्तः सर्वः श्रुतोऽस्माभिः समूर्ताराधनक्रमः ।
देवस्य भूपरीक्षादिप्रायश्चित्तावसानकः ॥ ४ ॥

यद्यत्तत्र विशेषोक्तौ तत्तद्विस्तरतो वद ।

भृगुरुवाच ॥

युष्माभिश्चोदितं सर्वं प्रवक्ष्याम्यनुपूर्वशः ॥ ५ ॥

विष्णोः पूजाविपाकेन जगदेतत्सुखं भवेत् ।
ऐहिकामुष्मिकावाप्तिः तत एव च सिद्ध्यति ॥ ६ ॥

मानसी होमपूजेति बेरपूजेति सा त्रिधा ।
हृत्पुण्डरीकमुकुलमुद्धृत्य प्रणवेन तु ॥ ७ ॥

व्याहृत्या विकसीकृत्य तत्रेन्द्रादिदिगीश्वरान् ।
प्रतिष्ठाप्यार्चयेत्सा तु मनःपूजेति चोदिता ॥ ८ ॥

दलेष्वष्टसु संस्थाप्य द्वात्रिंशत्केसरेष्वपि ।
अन्यान् देवांत्समभ्यर्च्य आत्मानं प्रकृतिं स्मरेत् ॥ ९ ॥

रश्मिमालावृतं ध्यात्वा तन्मध्ये रविमण्डलम् ।
तन्मध्ये शशिबिम्बञ्च स्रवत्पीयूषशीतलम् ॥ १० ॥

तस्य मध्यगतं ध्यायेत्त्रिकोणं वह्निमण्डलम् ।
दुर्निरीक्ष्यं सुरैः सर्वैः ज्वालामालासमावृतम् ॥ ११ ॥

तस्य मध्ये प्रभां ध्यायेन्निर्धूमां निष्कलां शुभाम्
नीवारशूकवत्तन्वीं पीतां भास्वत्तनूपमाम् ॥ १

प्रभामध्यगतं पीठं चतुरश्रं हिरण्मयम् ।
नानामणिगणज्वालादुष्प्रेक्ष्यं शुभमुज्ज्वलम् ॥ १

तस्य मध्यगतं ध्यात्वा नारायणमनामयम् ।
शुद्धस्फटिकसङ्काशं शङ्खचक्रधरं परम् ॥ १४ ॥

आसनाद्युपचाराणि मनसा तस्य भावयेत् ।
एषा तु मानसी पूजा बेरपूजा तु कथ्यते ॥ १

अग्निहोत्रादिहोमेषु सूत्रोक्तेन विधानतः ।
ध्यात्वाऽग्निमण्डलं तस्य ध्यायेन्मध्ये प्रभां शुभा

प्रभामध्यगतं ध्यायेदासीनं वा जनार्दनम् ।
तप्तहाटकसङ्काशं चतुर्हस्तं द्विशीर्षकम् ॥ १७

सप्तहस्तं त्रिचरणं दुष्प्रेक्ष्यं सप्तजिह्वकम् ।
स्रुक्स्रुवौ चाक्षमालाञ्च शक्तिं दक्षिणपाणिषु ।

चामरं व्यजनञ्चैव घृतपात्रन्तु वामतः ।
ध्यात्वा यथोक्तहविषा यजेत्तद्धोमपूजनम् ॥ १९

एषा सा होमपूजा च बेरपूजाऽधुनोच्यते ।
उक्तप्रमाणप्रतिमां हाटकादिमयीं पराम् ॥ २०

प्रतिष्ठाप्यार्चयेत्सा तु बेरपूजेति चोदिता ।
यथोपयोगशक्यत्वात्कर्तुं पुष्पादिपूजनम् ॥ २१

ततः २ पुटे १३

ख. ज. ण. आदर्शेषु —

ओम्. नारायणः पिता यस्य माता चैव हरिप्रि
भृग्वादिमुनयः पुत्राः तस्मै श्रीविखनसे नमः ।

वन्दे भृगुं तपोनिष्ठं मरीचिमथ काश्यपम् ।
अत्रिश्चैव त्रिकालज्ञं काश्यपं ब्रह्मवादिनम् ॥ २ ॥

ऋषय ऊचुः ॥

आश्रमे सम्यगासीनमृषिं विश्वहितोद्यतम् ।
ऋषयोऽभ्यागमन् सर्वे प्रणिपत्येदमब्रुवन् ॥ ३ ॥

भगवन्! केन मार्गेण कं देवं पूजयन्ति वै ।
आचक्ष्व सर्वं ब्रह्मर्षे तदेतत्तत्सुविस्तरम् ॥ ४ ॥

भृगुरुवाच ॥

युष्माभिः परिपृष्टं यत्तत्सर्वमृषिसत्तमाः ।
सावधानेन मनसा श्राव्यमस्मत्प्रचोदितम् ॥ ५ ॥

अस्यार्थस्य तु जिज्ञासा सुराणामपि दुर्लभा ।
बहुजन्मार्जितैः पुण्यैः तपोभिर्लोकपूजितैः ॥ ६ ॥

साधारणैः क्रतुशतैः दानैर्जपव्रतैस्तथा ।
ईदृशी भगवद्भक्तिर्लभ्यतेऽव्यभिचारिणी (?) ॥ ७ ॥

तदुक्तमेव युष्माकं वक्तुमेतन्मयाऽनघाः ।
नारायणस्य भूतानां जन्मनः परमात्मनः ॥ ८ ॥

लीलया जगदुत्पत्तिसम्पत्संस्थितिकारिणि ।
देवतानाञ्च तद्विष्णोर्लक्ष्मीशस्य जगत्पतेः ॥ ९ ॥

तद्विष्णोर्विधयः प्रोक्ताः पूजानां शृणुत द्विजाः ।
मानसी होमपूजा च बेरपूजेति वै श्रुतिः ॥ १० ॥

हृदिस्थितगतं पीठं चतुरश्रं हिरण्मयम् ।
नानामणिगणज्वालादुष्प्रेक्ष्यं शुभमुज्ज्वलम् ॥ ११ ॥

तस्य मध्यगतं ध्यात्वा नारायणमनामयम् ।
शुद्धस्फटिकसङ्काशं शङ्खचक्रधरं परम् ॥ १२ ॥

आसनाद्युपचाराणि मनसा तस्य भावयेत् ।
(एषा तु मानसी पूजा बेरपूजा विशिष्यते )
उक्तप्रमाणप्रतिमां हाटकादिविधिं पराम् ॥ १३ ॥

प्रतिष्ठाप्यार्चयेत्सा तु बेरपूजेति चोदिता ।
अग्निहोत्रादिहोमेषु कर्ममध्ये तथा विधिम् ॥ १४ ॥

ध्यात्वाऽग्निमण्डलं तस्य ध्यायेन्मध्ये प्रभां शुभाम् ।
प्रभामध्यगतं ध्यात्वा आसीनं वा जनार्दनम् ॥ १५ ॥

तप्तहाटकसङ्काशं चतुरश्रं द्विशीर्षकम् ।
सप्तहस्तं त्रिचरणं दुष्प्रेक्ष्यं सुप्रभेदकम् ॥ १६ ॥

स्रुक्स्रुवौ चाक्षमालाञ्च शक्तिं दक्षिणपाणिषु ।
चामरं व्यजनञ्चैव घृतपात्रञ्च वामतः ॥ १७ ॥

ध्यात्वा यथोक्तहविषा यजेत्तद्धोमपूजनम् ।
यथोपयोगशक्यत्वात्कर्तुं पुष्पादिपूजनम् ॥ १८ ॥

चक्षुषः प्रीतिकरणान्मनसो हृदयस्य च ।
प्रीत्या सञ्जायते भक्तिर्भक्तस्य सुलभो हरिः ॥ १९ ॥

तस्मात्त्रयाणामेतेषां बेरपूजा विशिष्यते ।

तत आरभ्यते २ पुटे १४ श्लोकस्य पाश्चात्यार्धः

क. च. ज. आदर्शेषु —

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥

श्रीविखनसगुरवे नमः

हृदिस्थितगतं पीठं चतुरश्रं हिरण्मयम् ।
नानामणिगणज्वालादुष्प्रेक्ष्यं शुभमुज्ज्वलम् ॥ २ ॥

तस्य मध्यगतं ध्यात्वा नारायणमनामयम् ।
शुद्धस्फटिकसङ्काशं शङ्खचक्रधरं परम् ॥ ३ ॥

आसनाद्युपचाराणि मनसा तस्य भावयेत् ।
एषा तु मानसी पूजा बेरपूजा तु वक्ष्यते ॥ ४ ॥

उक्तप्रमाणप्रतिमां हाटकादिविधिं पराम् ।
प्रतिष्ठाप्यार्चयेत्सा तु बेरपूजेति चोदिता ॥ ५ ॥

अग्निहोत्रादिहोमे तु कुण्डमध्ये तथा विधिम् ।
ध्यात्वाऽग्निमण्डलं तस्य ध्यायेन्मध्ये प्रभां शुभाम् ॥ ६ ॥

प्रभामध्यगतं ध्यायेदासीनं वा जनार्दनम् ।

ततः २ पुटे १० श्लोकारम्भः ।

तत्रादर्शमातृकासु अध्यायक्रमे अध्यायेषु विषयविभागे च पौर्वापर्यरूपं साङ्कर्यं अधः प्रदर्श्यते ॥

प्रथमाध्याये — ( आचार्यवरणादिः पुटादारभ्य ८ पर्यन्तम् ) १ प्रभृति ३ पुटे १६ पङ्क्तिपर्यन्तं आचार्यवरणं । तत्र प्रथमाध्यायः समाप्यते । पु. ३-१७ प्र. ८ पु. प. अङ्कुरार्पणम् । तत्र २ अध्यायश्च समाप्यते (य. ल.) ई कोशसमुदाये । अन्ये १ ।

द्वितीयाध्याये — (भूपरीक्षादिः ९.प्र. १५) (१) पु. ९. प्र. ११-४ प. भूपरीक्षा (२) ११-५—१५ कर्षणम् । ई. ३ अध्यायः । (२)अन्ये २ ।

३ अध्याये— (कर्मणां सद्योविधिः १६-२१) ई. ४ । अन्ये ३ अध्यायः ।

४ अध्याये— ( शान्तिकादिविधिः २१-३० ) ई. ५ । अन्ये ४ ।

५ अध्याये— ( विमानविधिः ३१-६० ) ३१—३७, १३ शूलस्थापनान्तम् ख. ५ । ३७-१४—४४-१ परिवरकल्पनम् ख. ६ । ४४-२—६० परिवारलक्षणशेषः ख. ७ । ई. ६ । अन्ये ५ ।

६ अध्याये— ( प्रतिष्ठाक्रमः ६१-७५ ) ६१—६४-४ ख. ८। ६४-५—७५ ख. ९। ६१—७३-१२। ई. ७। अन्ये ६।

७ अध्याये— ( प्रतिष्ठाक्रमः ७६-९३ ) ई. ८। ख. १०। अन्ये ७।

८ अध्याये— ( प्रतिष्ठाक्रमः ९४-१०६ ) ई. ९। ख. ११। अन्ये ८।

९ अध्याये— ( नित्यार्चनम् १०७-१२९ ) ई. १०। ख. १२। अन्ये ९।

१० अध्याये— ( अर्चनाङ्गोपचाराः १३०-१३५ ) ई. ११। ख. १३। अन्ये १०।

११ अध्याये— (दशावतारकल्पादिः १३६-१५२) (१) १३६—१४८-१० दशावतारकल्पः ख. १४। अन्ये ११। (२) १४८-११—१५२ आविर्भावकल्पः अन्ये १२ अनुवर्तन्ते। (१+२) ई. १२।

१२ अध्याये— ( स्नापनादिविषयाः १५३-१५७ ) ई. १३। ११ अध्याये १४८-११—१५७ ख. १५। अन्ये १२।

१३ अध्याये— ( स्नपनविधिः १५८-१६३ ) ई. १४। ख. १६। अन्ये १३।

१४ अध्याये— ( उत्सवः १६४-१८४ ) ई. १५। ख. १७। अन्ये १४।

१५ अध्याये— ( गृहार्चाविषयः १८५-१९३ ) ई. १६। १८५—१९२-१०। आ. १४। ख. न लभ्यतेऽयमध्यायः। अन्ये १५।

१६ अध्याये— ( प्रतिष्ठाशेषः १९४-२०३ ) १८९, २—१९२-१०। तथा, १९४-२०३ ई. १७। ख. १८। अन्ये १६।

१७ अध्याये— ( त्रिमूर्तिस्थापनम् २०४-२०९ ) २०४-२०९ ख. १९। ई. १८। ण. १७। अन्ये अनुवर्तन्ते नाध्यायसमाप्तिः।

१८ अध्याये— (पुण्यनक्षत्रपूजनादिः २१०-२२२) २१०—२११-१४ पुण्यनक्षत्रपूजनम्(ई मात्रे न सर्वत्र)२११-१५—२१३-६ ण. १८। अन्ये १७। २१३-७—२१६-५ ण. १९। २११-१५—

२१६-५ ख. २० । २१६-६—२१७-५ ख. २१ । २१७-१७—२२२ ई. १९ । ख. २२ । ण. २० । अन्ये १८ ।

९ अध्याये— ( विशेषाराधनम् २२३-२२८ ) (१) २२३—२२६-१० । प्रायिकः (२) २२६-११—२२८ ई. २० । ख. २३ । ण. २१ । अन्ये १९ ।

० अध्याये--(भूपरीक्षादिनिष्कृतिः २२९-२४७) ई. २१ । (१) २२९—२३६-३ ख. २४ । (२) २३६-४—२४३-७ ख. २५ । (३) ण. २२ । अन्ये २० । (४) २४३-८ — २४६-१९ ख. २६ । तत अ ग र ज कोशेषु मरीचिविमानार्चनकल्प ३५ अध्यायो निविष्टो वर्तते । २० अध्यायसमाप्तिश्च न दृश्यते ।

१ अध्याये—( चलितस्थापनादिः २४८-२६१ ) (१) २४८—२४८-१८ ख. ४० । ण. ३८ । (२) २४८—२५५-११ न सर्वत्र । (३) २५५-१२ — २५७-१२ । तथा (४) २५७.१८ — २५८-९. (५) २५८-१० — २५९-४. (६) २५९-५—२६१. (२ + ३) ण. २१ । (आवृत्तम्) (५ + ६) ण. २३ । (१ + ५ + ६) ई. २२ । ख. २७ । अन्ये २१ ।

२ अध्याये— ( प्रतिष्ठाप्रायश्चित्तम् २६२-२७० ) (७) २६२—२६५-४ (८) २६५-४--२६७-१४ (९) २६७-१४ — २७० ( ६ + ७ + ९ ) । (६ + ९) ण. २४ । ई. २३ । अन्ये २२ ।

३ अध्याये— ( नवीकरणम् २७१-२८२ ) (१) २७१ — २७४-२ । ण. २५ । ख. २८ । अन्ये २३ । (२) २७४-३—२७७-१३ ण. २६ । ख. २९ । क. २२ (?) । अन्ये २३ । (३) २७७-१४—२८२ ण. २७ । ख. ३० । (१ + ३) इ. २२ । आ. २३ । ई. २४ ।

२४ अध्याये— ( अर्चनाप्रायश्चित्तम् २८३-२९२) ख. ३१ । ग्रन्थलोपो दृश्यते इ. २४ । ण. २८ । ई. २५ । अन्ये २४ ।

२५ अध्याये— ( स्नपननिष्कृतिः २९३-३०० ) अयमध्यायः ई मातृकाकोशयोरेव लभ्यते । ई. ३१ ।

२६ अध्याये— ( उत्सवप्रायश्चित्तम् ३०१ - ३१८ ) ण. ३० । ख. ३२ । ई. ३२ अन्ये २६ ।

२७ अध्याये— ( सामान्यनिष्कृतिः ३१९-३२८ ) ई. ३३ । ण. ३२ । अन्ये २७ । (१) ३१९—३२६-२ ण. ३१ । ख. ३३ । (२) ३२६-३—३२८ । ख. ३४ ।

२८ अध्याये— ( पात्रादीनां संस्कारः ३२९-३३४ ) ई. ण. ३४ । ख. ३६ । अन्ये २९ ।

२९ अध्याये— ( शान्तिविधिः ३३५-३५५ ) (१) ३३५—३४४-२४ न सार्वत्रिकः । इ—ई ३५ । (२) ३४५-३५५ ख. ३७ ।

३० अध्याये— ( दशावतारकल्पः ३५६-३६७) ३५६ — ३५९ - १५ काचित्कः ई. ३९ । स मात्रे ।

३१ अध्याये— (सामान्यनिष्कृतिः-पवित्रारोपणम् ३६८-३७६) स. ई. ४३ ।

३२ अध्याये— ( शमीपूजादिः ३७७-३८५ ) (१) ३७७—३७८-१७ । (२) ३७८-१८—३८१-३ । (३) ३८१-४ —३८४-६ । (४) ३८४-७ — ३८५ । (१) ख. ३८ । ण. ३६ । (२) ख. ३९ । ण. ३७ । (१+२) ई. ४१ । (३) ख. ४१ । ण. ३९ । ई. ४२ । अन्ये ३२ ।

३३ अध्याये— ( पञ्चामृतविध्यादिः ३८६-३९५ ) (१) ३८६—३८७-११ । (२) ३८७-१२—३८८-२१ । (२) ३८८-२२—३९१-९ । (४) ३९१-१०—३९५ । (३) ण. ३६ । ख. ३७ । अ. आ. ३० । (१+२+३) ई. ट २६ ।

३४ अध्याये— ( गोदाप्रतिष्ठादिः ३८६-४०३ ) अ. आ. ३३ । ई. ट. ४० । ख. ४२ । च. ३३ तथा ३४ । ३९९-११—४०३ ण. ४० ।

३५ अध्याये— ( अष्टबन्धः ४०४-४०९) ) ख. ३४ । ण. ३३ । ई. २५ अन्ये २८ ।

३६ अध्याये—(वैदिकाराधनविषयः ४१०-४१५ ) छ.३३ । ण.३५ । अ, आ ३४ । ख. ३९ तथा ४० ( लेखकप्रमादः ) । अन्ये ४५ ।

३७ अध्याये— ( अङ्कुरार्पणम् ४१६-४२० ) सर्वत्र ३५ । ई. ४५ ।

३८ अध्याये— ( ऊर्ध्वपुण्ड्रविधिः ४२१-४३१ ) ख. ४१ । छ. ण. २९ । ई. २८ । ट. ठ. न दृश्यते । अन्यत्र २५ अध्यायः ।

३९ अध्याये— ( सर्वाग्निस्थापनक्रमः ४३२-४३८ ) ई, ट. स. कोशेष्वेव ।

---

८० पुटे ४० श्लोकात्परम् ॥

‘ अङ्कुराद्दिवसात्पश्चात्तद्दिने तु परेऽहनि ।
द्वितीयाहः प्रभृत्येवमाघारं जुहुयात्क्रमात् ॥ १ ॥

कुम्भेष्वावाह्य देवेशं समभ्यर्च्य यथाविधि ।
ध्रुवाद्याचार्यपर्यन्तं रक्षाबन्धनमाचरेत् ॥ २ ॥

होमञ्च कुम्भपूजाञ्च सायं प्रातर्यजेत्क्रमात् ।
दिनेदिने च कर्तव्यं प्रतिष्ठान्तं समाचरेत् ’ ॥ ३ ॥

( मूलालयप्रतिष्ठा ) इत्यादि आ· कोशेषु ।

अस्मिन्नेव पुटे ४८५ श्लोकात् पश्चात् ॥

‘सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम् ।
अग्रे तु द्रामिडं वेदं पश्चाद्वेदांश्च घोषयेत् ’ ॥ १ ॥

( विष्णुसूक्तेन ) इत्यादि ण· कोशे ।

११० पुटे ३८ श्लोकात् पश्चात् ॥

'ब्राह्ममासनमास्थाय पूजकः सुसमाहितः ।
चन्दनं पञ्चगव्यं वा बिल्वं वा भस्म वा जलम् ॥ १ ॥

पर्वताग्रान्नदीतीराद्वल्मीकात्सिन्धुतीरतः ।
अथवा तुलसीमूलाद्विष्णुक्षेत्राद्विशेषतः ॥ २ ॥

गृहीत्वा वा मृदं सम्यगूर्ध्वपुण्ड्रधरो भवेत् ।
ललाटे केशवायेति कुक्षौ नारायणाय च ॥ ३ ॥

हृदये माधवायेति गोविन्दाय गले न्यसेत् ।
विष्णवे दक्षिणे कुक्षौ मधुसूदनाय तद्भुजे ॥ ४ ॥

त्रिविक्रमाय तत्कण्ठे वामकुक्षौ तु वामनः ।
बाहौ च श्रीधरायेति हृषीकेशाय वै गले ॥ ५ ॥

पद्मनाभाय वै पृष्ठे ककुद्दामोदराय च' ।

(पद्मासने) इत्यधिकं ई. कोशयोः

१९२ पुटे ७८ श्लोकात् पश्चात् ॥

तत्तन्मन्त्रद्वयेनैव शतमष्टोत्तरं यजेत् ॥ १ ॥

(वैष्णवं) इत्यधिकं आ. कोशेषु ।

तस्मिन्नेव पुटे ८० श्लोकात् पश्चात् ॥

'पद्मासने समासीनां पद्मकिञ्जल्कशोभिताम् ।
ज्ञानमुद्रासमायुक्तां सर्वाभरणभूषिताम् ॥ १ ॥

ज्ञानमुद्राख्यमुद्रेयं दर्शयन्ती हृदुन्मुखम् ।
कमण्डलु समायुक्तं वामहस्तं तथोर्ध्वगम् ॥ २ ॥

(इतरं) इत्याधिकमावश्यकं अ. कोशेषु ।

१९७ पुटे ३२ श्लोकात् पश्चात् ॥

'यस्य देवस्य यत्कुण्डं प्रधानं परिकीर्तितम् ।
तस्य देवस्य तत्कुण्डं पुरतः परिकल्पयेत् ॥ १ ॥

महालक्ष्म्या विशेषेण सभ्यस्थने तु चाब्जकम् ।
आग्नेय्यां सभ्यकुण्डन्तु कल्पयेदिति शासनम् ' ॥ २ ॥

(अतः परं) इत्यधिकं ण. कोशे ।

१९८ पुटे ४९५ श्लोकात् पश्चात् ॥

नानारत्नोज्ज्वलानर्घदिव्यभूषणभूषिताम् ।
एवं सलक्षणं कृत्वा श्रियं देवीं समर्चयेत् ॥ १ ॥

देव्याश्च पीठपरितः परिवारान् क्रमाद्यजेत् ।
भूमिं सरस्वतीञ्चैव रतिं प्रीतिं तथैव च ॥ २ ॥

कीर्तिं क्षान्तिञ्च पुष्टिञ्च तुष्टिञ्चैव तथैव च ।
पूर्वादींश्च क्रमेणैव प्रथमावरणेऽर्चयेत् ॥ ३ ॥

बलाकीं नवमालीञ्च विभीषीं शाङ्करीं तथा ।
गुग्गुलुञ्च कुरुण्डञ्च दमकं सलिलं तथा ॥ ४ ॥

द्वितीयावरणे प्रोक्ता एताश्चाष्टौ प्रकीर्तिताः ।
इन्द्रादिलोकपालांश्च तृतीयावरणेऽर्चयेत् ॥ ५ ॥

दक्षिणे भित्तिपार्श्वे तु पुरुषं सत्यमर्चयेत् ।
उत्तरे भित्तिपार्श्वे तु अच्युतञ्चानिरुद्धकम् ॥ ६ ॥

अथवा वासुदेवादीन् शङ्खचक्रधरान् परान् ।
किरीटहारकेयूरमकुटादि विभूषितान् ॥ ७ ॥

श्रीवत्सकौस्तुभोरस्कान् वनमालाविराजितान् ।
चतुर्भुजान् सुखासीनान् श्यामलान् पद्मलोचनान् ॥ ८ ॥

वीक्षमाणान् श्रियं देवीं भित्तिपार्श्वे समर्चयेत् ।
प्रथमद्वारसव्ये तु निर्माल्यहारिणीं तथा ॥ ९ ॥

वामेऽपि च तथा प्रोक्ता निवेद्यहारिणी तथा ।
द्वितीयद्वारसव्ये तु भूमिञ्चापि समर्चयेत ॥ १० ॥

वामे सरस्वतीञ्चैव द्वितीयद्वारपालिकाम् ।
तृतीयद्वारसव्ये तु रतिञ्चैव समर्चयेत् ॥ ११ ॥

वामभागे तथा प्रोक्ता प्रीतिञ्चैव समर्चयेत् ।
एष एव विशेषः स्यादन्यत्सर्वं हरेरिव ॥ १३ ॥

कल्पकं क्रमुकं मन्द्रं पारिजातं चतुर्दिशम् ।
बिल्ववृक्षांश्च परितः पूर्णकुम्भाङ्कुरान् लिखेत् ॥ १४ ॥

एतांश्चतरवश्चैव चित्राभासेन कारयेत् ।
कल्पयित्वा खिलोक्तांश्च परिवारान् यथाक्रमम् ॥ १५ ॥

कृत्वा तु भूतपीठान्तं स्थापनारम्भमाचरेत् ।
फाल्गुनोत्तरफल्गुन्योः स्थापनं क्रियते श्रियः ॥ १६ ॥

स्थापनादिवसात्पूर्वं पञ्चमेऽह्नयङ्कुरार्पणम् ।
( अङ्कुरार्पणकादूर्ध्वं यागशालां प्रकल्पयेत् )

इत्यादि **आ.** कोशेषु ।

तथा – **क.** कोशे पूर्वोक्तस्थले ॥

'नानारत्नोज्ज्वलानर्घदिव्यभूषणभूषिताम् ॥ १ ॥

एवं सलक्षणं कृत्वा श्रियं देवीं समर्चयेत् ।
श्रियं धृतिं पवित्रीञ्च प्रमोदायिनीमेव च ॥ २ ॥

विष्णुपत्नीं विशालाक्षीं विमलां विश्वमोहिनीम् ' ।

( देव्यश्च पीठं परितः ) इति दृश्यते ।

१९९ पुटे ५२५ श्लोकात् पश्चात् ॥

किरीटहारकेयूरमकुटादिविराजिताम् ॥ १ ॥

दक्षिणे भित्तिपार्श्वे तु अच्युतश्चोत्तरामुखः ।
अनिरुद्धस्तस्या वामे दक्षिणामुखमर्चयेत् ॥ २ ॥

अथ वा वासुदेवादीन् शङ्खचक्रधरान् परान् ।

( श्रीवत्स ) इति दृश्यते - **आ.** कोशेषु ।

तथा तत्रैव पुटे ५४ श्लोकात् पश्चात् ॥

वीक्षमाणान् श्रियं देवीं भित्तिपार्श्वे समर्चयेत् ॥ १ ॥

कल्पकं क्रमुकं मंद्रं पारिजातांश्चतुर्दिशम् ।
बिल्ववृक्षांश्च परितः पूर्णकुम्भाङ्कुरान् लिखेत् ॥ २ ॥

एतांश्च तरवश्चैव(?) चित्राभासे न कारयेत् ।
धात्रादि षट् च देवांश्च द्वारे सम्यक्समर्चयेत् ॥ ३ ॥

प्रथमद्वारसव्ये तु निर्माल्यहारिणी तथा ।
किञ्चिच्च करुणा चैव द्वितीयद्वारपालिकाः ॥ ४ ॥

तुष्टिः पुष्टिस्तथा प्रोक्ते तृतीयद्वारपालिके ।
बलाकां नवमालाञ्च विभोषीं शाङ्करीं तथा ॥ ५ ॥

एताश्च हर्म्यपाल्यस्तु पूर्वादिषु समर्चयेत् ।
जयाद्यष्टौ च परितः परिवारान् यजेद्बुधः ॥ ६ ॥

इन्द्रादिलोकपालांश्च प्रथमावरणक्रमात् ।
श्रीभूताद्यनपाय्यन्ताः तत्तत् स्थाने प्रकल्पयेत् ॥ ७ ॥

एष एव विशेषः स्यादन्यत्सर्वं खिलोक्तवत् ।
कृत्वा तु भूतपीठान्तं स्थापनारम्भमाचरेत् ॥ ८ ॥

फाल्गुनोत्तरफल्गुन्यां स्थापनं क्रियते श्रियः ।
स्थापनादिवसात्पूर्वं पञ्चमेऽह्न्यङ्कुरार्पणम् ॥ ९ ॥

अङ्कुरार्पणकादूर्ध्वं यागशालां प्रकल्पयेत् ।

(शय्यावेदिञ्च) इति क. कोशे पाठः ।

२१६ पुटे प्रथमपङ्क्त्यनन्तरम् ॥

दिवसान्तमुपोष्यैव रामं देवं समर्चयेत् ॥ १ ॥

ग्रामप्रदक्षिणं कृत्वा स्नापयित्वा निवेदयेत् ।

इति क. कोशे ।

२५८ पुटे ११५[५] श्लोकात् पश्चात् ॥

आरम्भदिवसे कुम्भं संस्थाप्य ध्रुवबेरतः ॥ १ ॥

दीपाद्दीपमिवावाह्य तेन कृत्वोत्सवं पुनः ।
तीर्थान्ते स्नापनान्ते तु पुनरुद्वासयेद्ध्रुवे ॥ २ ॥

प्रथमादेवमारभ्य तीर्थान्तं होममाचरेत् ।
ध्वजं तमवरोप्यैव मौनञ्च बलिमाचरेत् ॥ ३ ॥

( विधिना बलिं ) इति क० कोशे दृश्यते ॥

---

ई पुस्तुकयोः चतुस्त्रिंशाध्यायेऽयं पाठः परिदृश्यते ॥ अर्थात् अस्मिन् मुद्रितकोशे ३३४ पुटे ५८ श्लोकात् पश्चात् ॥

अष्टाविंशाध्यान्ते द्रष्टव्यः ॥



सर्वत्र सर्वकार्येषु होतव्यो होम उच्यते ।
निष्कृत्यर्थञ्च शान्त्यर्थमेतद्धोमं जुहोति च ॥ १ ॥

भ्रूभ्यामन्तरिक्षायेति सप्राणात्मभुवे तथा ।
श्रोत्राभ्यां सञ्जुहोत्यन्ते पक्ष्मभ्यामिति चोच्चरन् ॥ २ ॥

सञ्जुहोत्यक्ष्यङ्गेभ्यश्च अक्षिभ्यामिति हूयते ।
तारकाभ्यामपाङ्गाभ्यां कुवलयाभ्यामितीर्य च ॥ ३ ॥

योगाभ्याञ्चकपोलाभ्यां तत्तदङ्गमनुस्मरन् ।
जुहोति नासिकायै च पुटाभ्यामिति दृष्णवे ॥ ४ ॥

भाण्डाभ्यामिति दन्ताभ्यामोष्ठाभ्यामिति हूयतम् ।
निम्नेभ्यश्चाधरोष्ठाय जिह्वायैच ततः परम् ॥ ५ ॥

वक्त्रत्रिकायै जुहुयात्तालवे विष्णवे पुनः ।
हनुभ्यां जुहुयात्पश्चात्तदङ्गं मनसा स्मरन् ॥ ६ ॥

कर्णाभ्यां कर्णपालीभ्यां छिद्राभ्यां कीकसाय च ।
ग्रीवाय कनकायेति सुप्रग्रीवाय वै तथा ॥ ७ ॥

कर्णनालाय कण्ठास्यकर्णनालाय हूयताम् ।
द्यौः शिरसे च हुत्वा तु तथा द्यौरक्षकाय च ॥ ८ ॥

सर्वाधिष्ठानकायेति तथा प्राणाश्रयाय च ।
केशेभ्यः शिरसे चेति जुहुयात्पुण्यवासिने ॥ ९ ॥

बाहुभ्यो दिक्प्रबन्धेभ्यः सर्वेक्षत्वात्मकाय च ।
सर्वदुःखवियोगिभ्यः सुखाश्रयेभ्य इत्यपि ॥ १० ॥

कण्ठाय कण्ठनालेभ्यः स्कन्धाय च ततः परम् ।
पृष्ठाग्रफलकायै च बाहुभ्योऽष्टाभ्य इत्यपि ॥ ११ ॥

कीकसाभ्यः कूर्परेभ्यः कनिष्ठाभ्यस्तथैव च ।
पर्वभ्यश्च नखेभ्यश्च वर्तनीभ्य इति ब्रुन् ॥ १२ ॥

जतृभ्यां तालुदेशाय पार्श्वमूलेभ्य इत्यपि ।
पार्श्वाभ्याञ्च तथांऽसाभ्यां भल्लकाय ततः परम् ॥ १३ ॥

उरस्याय शिरस्याय बाहुमुक्ताय हूयताम् ।
हृदयाय पुण्डरीकाय चित्ताय च ततः परम् ॥ १४ ॥

वर्तिभ्यामाकूतायेति चाकूतिभ्यश्च हूयताम् ।
तर्ताय तक्षिवायोऽसिमन्त्राय (?) प्रबलाय च ॥ १५ ॥

कीकसायाक्षिवासिभ्यः सूर्याय विष्णुचक्षुषे ।
वामाय वामनेत्राय विष्णुचक्षुष इत्यपि ॥ १६ ॥

प्रबुद्धामलधीराय महते च महात्मने ।
आत्मने चैव हुत्वा तु तथा सर्वात्मने पुनः ॥ १७ ॥

देवेशं मनसा ध्यायन् जुहुयाद्दोषशान्तये ।

अयं पाठः ई कोशयोः पञ्चविंशाध्याये १८ श्लोकात् पश्चादुपलभ्यते–

अर्थात्–मुद्रिते ३३६ पुटे १८५ श्लोकात् पश्चात् द्रष्टव्यः॥



धार्याग्निर्यदि चान्तहोमसमये ससेति मन्त्रं हुनेत्
नो चेदत्र समन्तमन्त्रमथवेन्द्रायेति वाऽग्नौ हुनेत्।
तत्पात्रोदकतोऽग्निवेदिमुखरैर्मन्त्रैस्तथा तृप्यतां
तृप्यन्तामिति मन्त्रलिङ्गविधिना कुर्याच्च सन्तर्पणम्॥ १॥

प्रासावीरवसानमन्त्रसहितं कुर्यात्परीषेचन-
श्चोर्ध्वं कर्म विहाय तत्र परितः कुण्डेऽपि वा स्थण्डिले।
सर्वं न्यस्य परिस्तरादिसहितं द्वौ ब्रह्मसोमौ तथा
सूक्तेन प्रणतिं नतिश्च कुरुते वैश्वानराख्यं जपन्॥ २॥

कुण्डस्थण्डिलयोरथापि सुदृढं संस्थाप्य नित्यं यजेत्
तस्मिन् काम्यनवग्रहादिहवनं कुर्यात्प्रमोदं वहन्।
नो चेद्यज्ञियवह्निदारुणि तथा काष्ठेऽपि वाऽऽरोपयेत्
दोषं दक्षिणवह्निमूर्ध्नि विधिना सन्ताप्य मन्त्रं जपन्॥ ३॥

आघ्रायाऽऽत्मनि रोपयेत्पवनतो नासाबिलाद्दक्षिणात्
तं मन्त्रन्तु पुनर्जपन् स्वहृदयादग्नौ तथा लौकिके।
अग्निश्चाप्यवरोप्य मन्त्रविधिना नित्यं पुनः पूर्ववत्
चाघारो यदि चैककर्मणि कृतः सूत्रोक्तविध्यापुरा (?)॥ ४॥

आघारावसरे तु कर्मणि पुनर्नाघारहोमो भवेत्
आघाराह्वयहोममात्रसहितं स्यात्तन्त्रहोमे हितम्।
शारीरेष्वपि तन्त्रहोमकरणं कार्येऽपि वा दैविके
वास्त्वग्निं सुविहाय चोभयविधौ सर्वत्र संरक्षयेत्॥ ५॥

पर्यग्निर्यदि वास्तुहोमविधिना तस्यैव कुण्डं पृथक्
कृत्वा भूसवनञ्च सूत्रविधिना चान्तेऽन्तहोमं हुनेत् ।
पर्यग्नेः समुदायहोमसमये पूर्वोक्तपूर्णाहुती
हुत्वाऽग्निं परिरक्षयेयुरधिकञ्चर्त्विग्वराः सर्वदा ॥ ६ ॥

---

ई कोशयोः ३६ अध्यायत्वेन अयं भागः पठ्यते ॥

वैखानसमुनिप्रोक्तसूत्रकर्मान्वितः पुरा ।
मार्कण्डेयप्रपौत्रश्च भार्गवो ब्राह्मणोत्तमः ॥ १ ॥

विष्णुचित्त इति ख्यातो विष्णुपूजाविशारदः ।
स्वधर्मनिरतस्त्यागी ज्ञानवैराग्यवर्धनः ॥ २ ॥

सर्वदा भगवत्प्रीत्यै विष्णुं देवमपूजयत् ।
श्रीविष्णुनित्यपूजार्थं तुलसीकाननं महत् ॥ ३ ॥

सर्वदा वर्धयित्वा तत्तुलसीमालिकादिभिः ।
पूजयित्वा विधानेन हरिदास्यं विचिन्तयन् ॥ ४ ॥

रङ्गवल्ल्यादिकरणैर्देवदेवस्य मन्दिरे ।
अलङ्कुर्वंस्तदेकान्तश्चिरं कालमनीनयत् ॥ ५ ॥

प्रसादनार्थं सेवार्थमागतान्पितृभिस्सह ।
मातृभिश्च समानीतान् बालांस्तत्र स्तनन्धयान् ॥ ६ ॥

स्वहस्ताभ्यां समानीय प्रेम्णा जिघ्रंश्च मूर्धनि ।
देवार्पितानि वस्तूनि तेभ्य आहृत्य सन्ददौ ॥ ७ ॥

प्रवृत्तिमेतां संवीक्ष्य सर्वे तत्राब्रुवन्द्विजम् ।
बालेष्वासक्तचित्तस्य युक्तस्तव गृहाश्रमः ॥ ८ ॥

इति सम्प्रार्थितः सर्वैर्निश्चयान्न न्यवर्तत ।
अनन्तरेऽपि समये तदासक्तिर्न कुण्ठिता ॥ ९ ॥

काले कदाचित् भगवानुवाच वचनं महीम् ।
'विष्णुचित्तस्य शिशुषु ज्ञायतेऽभ्यधिकादरः ॥ १० ॥

त्वं तस्य तनया भूत्वा तस्येष्टं सम्प्रपूरय' ।
इत्याज्ञप्ता भगवता मही हर्षसमन्विता ॥ ११ ॥

आषाढे कर्कटे पूर्वफल्गुन्यां तुलसीवने ।
अंशेनैवावतीर्णाऽभूत् कलेरादौ महात्मनः ॥ १२ ॥

सुवर्णप्रतिमारूपा दृष्टा तेन महात्मना ।
भगवत्कृपया प्राप्ता श्रीर्महीवेति चिन्तयन् ॥ १३ ॥

गृहे संस्थाप्य तां देवीं पूजयामास भार्गवः ।
कदाचित्साऽवदत्स्वप्ने मानुषं धारयन्वपुः ॥ १४ ॥

'सखीभिः क्रीडितुं तात साम्प्रतं रोचते मनः ।
शिशुरस्म्यद्य संवृत्ता त्वं मां रक्षितुमर्हसि' ॥ १५ ॥

इति संजल्पमानां तां दृष्ट्वा विस्मयकातरः ।
आज्ञाभङ्गभयाद्भक्त्या 'तथे'त्याश्रुत्य तद्वचः ॥ १६ ॥

तामादाय सुजाताङ्गीं धात्रीहस्ते समार्पयत् ।
क्षीरनीरादिभिस्सर्वैरुपचारैस्सुसंस्कृता ॥ १७ ॥

दशवर्षवयस्का सा ववृधे तस्य वेश्मनि ।
विष्णुचित्तोऽपि समये तां कन्यां दातुमुत्सुकः ॥ १८ ॥

अनुरूपवरप्रेप्सुश्चिन्तया व्यथितोऽभवत् ।
तन्मनोगतमाज्ञाय चिन्तितं सा व्यजिज्ञपत् ॥ १९ ॥

'भविता मे हरिर्भर्ता तात नास्त्यत्र संशयः ।
तच्चरिष्ये व्रतं किञ्चित्तत्प्राप्त्यै माऽस्तु ते व्यथा ॥ २० ॥

व्रतार्थं मम सम्भारानर्थितानुपपादय' ।
इति विज्ञापितः पुत्र्या सर्वं सज्जं चकार सः ॥ २१ ॥

वैष्णवं बिम्बमादाय पूजोपकरणानि च ।
याजकानृत्विजश्चापि स तस्याः समकल्पयत् ॥ २२ ॥

वृश्चिकान्तमथारभ्य धनुरन्तं विशेषतः ।
पूजयामास सा देवी स्वाभीष्टार्थस्य सिद्धये ॥ २३ ॥

चतुर्विंशतिमूर्तीनां पूजनान्ते दिनं प्रति ।
मङ्गलाशीः प्रयुञ्जाना चचार व्रतमुत्तमम् ॥ २४ ॥

एवमाचरिते तस्याः पञ्चविंशतिमे दिने ।
साक्षाद्भूत्वा हरिस्तस्यै पञ्चतत्त्वमुपादिशत् ॥ २५ ॥

परमव्यूहविभवहृद्गतार्चाभिदा कृतम् ।
व्रतान्ते चोपयेमे तां स्वयं देवो द्विजात्मजाम् ॥ २६ ॥

तस्माच्चापगते भानौ हरिं गोदां समर्चयेत् ।
मासान्ते मकरात्पूर्वं विवाहोत्सवमाचरेत् ॥ २७ ॥

'भार्गवीं लोकजननीं तुलसीकाननोद्भवाम् ।
विष्णुचित्तप्रियसुता' मिति तत्प्रवरं वदेत् ॥ २८ ॥

एवं यः कुरुते पूजां गोदायाः प्रतिवत्सरम् ।
सर्वान् कामानवाप्यैव विष्णुलोके महीयते ॥ २९ ॥

---

ई कोशयोः २६ अध्यायारम्भे एते २३ श्लोकाः पठ्यन्ते ॥

आचार्यस्यार्चकादीनां परिचारगणस्य वा ।
प्राप्तायां वंशहानौ तु कर्तव्यं शृणुत द्विजाः ॥ १ ॥

अत्र प्रसङ्गाद्वक्ष्यामि कुमारग्रहणं परम् ।
स्त्रीप्रजाः पुत्रहीनो वा मृतपुत्रस्तथैव च ॥ २ ॥

ऐहिकामुष्मिकावाप्त्यै स्वीकुर्यात्पुत्रमन्यजम् ।
स्वर्षिगोत्रजमादाय विना होमं सुसङ्ग्रहेत् ॥ ३ ॥

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान् भवेत् ।
सर्वांस्तान् तेन पुत्रेण विदुः पुत्रिण एव हि ॥ ४ ॥

भ्रातॄणां भ्रातृतुल्यानां सगोत्राणाञ्च सन्ततौ ।
ऐहिकामुष्मिकावाप्त्यै कर्तव्यः पुत्रसङ्ग्रहः ॥ ५ ॥

इति विज्ञाय सम्प्रार्थ्यं पुत्रवन्तं गृहाश्रमम् ।
'तव पुत्रेण रक्ष्योऽहं त्वं दाता भव धार्मिक' ॥ ६ ॥

इति सम्प्रार्थयेद्दाता तथैवेत्यनुमान्य च ।
अमुकस्य प्रदास्येहमिह पुत्रं फलाप्तये ॥ ७ ॥

इत्युक्त्वा संसदि तथा राज्ञस्तत्त्वं निवेद्य च ।
महादानोक्तवत्सर्वं कल्पमत्र सुसङ्ग्रहेत् ॥ ८ ॥

श्राद्धमभ्युदयं कुर्यात्पूर्वेद्युः शास्त्रवत्सुधीः ।
पुत्रग्रहणकाले तु 'देवस्य' त्वेति मन्त्रतः ॥ ९ ॥

दाता प्रतिगृहीता च दानमदानमाचरेत् ।
ददामि प्रतिगृह्णामीत्यूहं तत्र समाचरेत् ॥ १० ॥

ततो 'घृतात्प' रीत्यद्भिः सहितं प्रददेत्सुतम् ।
'राजा त्वाप्रति' मन्त्रोक्तौ 'प्रजापतय' इत्यतः ॥ ११ ॥

'पुरुषं' शब्दमुच्चार्य पुत्रदानं ततश्चरेत् ।
ततः प्रतिगृहीता तु 'त्वमग्ने' त्याददीत वै ॥ १२ ॥

एष दानविधिः पूर्वं सङ्क्षिप्य गुरुणोदितः ।
द्विपिता यजमानश्चेदित्यत्र समुदीरितम् ॥ १३ ॥

ब्राह्मौदने तु सम्प्रोक्तं तद्विशिष्योदितं मया ।
अन्येषां ग्रहणे चैव पुत्रत्वावाप्तये पुनः ॥ १४ ॥

पौरुषाग्निं समादाय तत्र होमं समाचरेत् ।
प्रतिगृहीतृगोत्रर्षिमन्त्रञ्च जुहुयाच्छतम् ॥ १५ ॥

धातादिमूलहोमञ्च जुहुयात्तदनन्तरम् ।
एष एव विशेषः स्यादन्यत्पूर्वोक्तवच्चरेत् ॥ १६ ॥

प्रतिगृहीता दातारं सम्पूज्य मधुपर्कतः ।
याचेत्पुत्रमपुत्राय मम देहीति चाग्रतः ॥ १७ ॥

दाता प्रतिगृहीतारं विष्णुं बुद्ध्वा स्वशक्तितः ।
श्रीवैखानससूत्रोक्तमधुपर्केण पूजयेत् ॥ १८ ॥

पूजयित्वा ददेत्पुत्रमाददीत च पूजितः ।
दाता प्रतिगृहीता च स्वाचार्यं सम्प्रपूजयेत् ॥ १९ ॥

द्वादशाहे तु मुख्यं स्याद्दन्तोत्पत्तौ तु मध्यमम् ।
वत्सरे त्वधमं प्रोक्तं तस्मादूर्ध्वं न शस्यते ॥ २० ॥

विधिना स्वीकृतः पुत्रः सर्वकार्यं समर्हति ।
आचार्यत्वे तथार्त्विज्ये वैदिके लौकिकेऽपिच ॥ २१ ॥

स्वीकृतोऽन्येन विधिना सर्वकर्मबहिष्कृतः ।
तस्मादेतद्विधानेन पुत्रस्वीकरणं चरेत् ॥ २२ ॥

एतद्वैखानसं सूत्रमन्यसूत्रानपेक्षितम् ।
शास्त्रान्तरोक्तं न ग्राह्यं शास्त्रेऽस्मिन् वैदिके बुधाः ॥ २३ ॥

---

। कोशधृतोऽयं पाठः । अर्थात् मुद्रितपुस्तके २७१ पुटे द्रष्टव्यः ॥

अतः परं प्रवक्ष्यामि नवीकरणमुत्तमम् ।
प्रासादगोपुरादीनां मण्डपानां तपोधनाः ॥ १ ॥

वर्णनाशे सुधास्फोटे भित्तिभेदे तथैव च ।
शिलेष्टकादिपतने शीघ्रं कर्मेदमाचरेत् ॥ २ ॥

नाचरेद्यदि मूढात्मा एते दोषाः भवन्ति हि ।
आग्नेय्यां वह्निबाधः स्याद्याम्यामामय उच्यते ॥ ३ ॥

नैर्ऋत्यां ग्रामनाशः स्याद्वारुण्यां वृष्टिनाशनम् ।
वायव्यां शिशुनाशः स्यादुत्तरे स्त्रीजनामयः ॥ ४ ॥

ऐशान्यां धननाशः स्यादैन्द्रे तु क्षुद्भयं तथा ।
अवान्तरेषु सर्वत्र ज्वरादिव्याधिपीडनम् ॥ ५ ॥

तद्बिम्बे न रमेद्देवः सङ्क्रुद्धो भगवान् भवेत् ।
तस्माच्छास्त्रोक्तमार्गेण प्रायश्चित्तं समाचरेत् ॥ ६ ॥

आलयाभिमुखे कृत्वा कुण्डमौपासनं तथा ।
न्यक्षादीनाञ्च देवानां मन्त्राणां मूर्तिभिस्तथा ॥ ७ ॥

देवतानां गलस्थाने स्थापितानां विशेषतः ।
पादवर्गगतानाञ्च हुत्वा मन्त्राननुक्रमात् ॥ ८ ॥

तत्तद्बिम्बगतां शक्तिं ध्रुवबेरे निवेश्य च ।
प्राकाराश्रयपीठेषु तत्तद्दिक्षु यथाक्रमम् ॥ ९ ॥

न्यक्षादींस्तु समावाह्य दशकृत्वस्तु वैष्णवम् ।
चतुर्वेदादिमन्त्रांश्च हुत्वा चाग्निं विसृज्य च ॥ १० ॥

शिलेष्टकादिप्रक्षेपैः दृढीकृत्य यथा पुरा ।
सुधावर्णानुलेपादीन् पूर्ववत्परिकल्प्य च ॥ ११ ॥

पञ्चगव्यैः समभ्युक्ष्य वास्तुहोमः सुहूयताम् ।
नित्याग्नौ पौरुषं सूक्तं व्याहृतीः पौरुषं तथा ॥ १२ ॥

पारमात्मिकमीङ्काराद्यङ्गहोमश्च हूयताम् ।
अष्टाशीत्याहुतिं हुत्वा उक्तदोषस्य शान्तये ॥ १३ ॥

संस्थाप्य तत्तद्बिम्बानि न्यक्षादींश्चतुरस्तथा ।
ध्रुवाच्छक्तिं समारोप्य न्यक्षादिषु तथैव च ॥ १४ ॥

सिंहव्यालादिहीने तु पुनस्सन्धानकर्मणि ।
पुण्याहं वाचयित्वा तु विष्णुसूक्तं सवैष्णवम् ॥ १५ ॥

ईङ्कारादींस्ततो हुत्वा पञ्चगव्येन क्षालयेत् ।
सन्धानं कारयेत्पश्चाद्वर्णलेपनमाचरेत् ॥ १६ ॥

शुद्ध्यर्थं प्रोक्षणैः प्रोक्ष्य पर्यग्निं कारयेद्बुधः ।
तच्छक्तिञ्चैव संयोज्य दक्षिणां दापयेद्गुरोः ॥ १७ ॥

अकाले स्थूपिपतनेऽशनिपाते च दस्युभिः ।
नष्टे कीले यथा शक्ति तथा बेरे समाह्वयेत् ॥ १८ ॥

स्थूपिः शिखरमित्युक्तं तन्नाशे न रमेद्धरिः ।
विमानं विष्णुरूपञ्च देवावासं तथैव च ॥ १९ ॥

स्थूलं विमानमित्युक्तं सूक्ष्मं बेरमुदीरितम् ।
तस्मात्सर्वप्रयत्नेन प्रायश्चित्तं समाचरेत् ॥ २० ॥

अब्जानौ वैष्णवं सूक्तं ब्राह्मं रौद्रसमन्वितम् ।
परिषद्गणसंयुक्तं पारमात्मिकसंयुतम् । २१ ॥

न्यक्षादीनाञ्च देवानां दिग्देवानां तथैव च ।
स्थूपिप्रतिष्ठामार्गेण प्रतिष्ठामाचरेद्गुरुः ॥ २२ ॥

प्राकारादिषु जीर्णेषु तत्प्राकाराधिदेवताः ।
मन्त्रैर्हुत्वा नवीकृत्य वास्तुहोमं यजेत्पुनः ॥ २३ ॥

परिवारालये जीर्णे न्यक्षादींश्चतुरस्तथा ।
तन्मूलबेरे चारोप्य नवीकृत्य यथा पुरा ॥ २४ ॥

तत्प्रतिष्ठाप्रकारेण विमानं कारयेत्पुनः ।
तत्तन्मन्त्रैश्च हुत्वा तु नवीकृत्य यथा पुरा ॥ २५ ॥

एकग्रामे समीपस्थमालयद्वितयं भवेत् ।
मूलालयविमाने तु नित्यनैमित्तिकोत्सवम् ॥ २६ ॥

भिन्नालये स्वल्पमेव काञ्चित्पूजां समाचरेत् ।
तस्यालये चातिशय उत्सवार्थश्च कथ्यते ॥ २७ ॥

राजा च यजमानश्च उत्सवं सम्प्रकल्पयेत् ।
नित्योत्सवं विना तत्र परिवारान् न कल्पयेत् ॥ २८ ॥

ध्रुवे कौतुकबिम्बे वा अन्यबिम्बं विना भवेत् ।
विमानादींश्च कृत्वैव उत्सवादीनि कारयेत् ॥ २९ ॥

अन्यथा यदि कुर्वीत कर्तृग्रामविनाशकृत् ।
वाहनादीन्विना वाऽथ देवेन सह कारयेत् ॥ ३० ॥

विमानं दारुणा कृत्वा प्रतिष्ठां शीघ्रमाचरेत् ।
तत्काले यत्नमातिष्ठेत्कर्तुमुत्सवमत्वरः ॥ ३१ ॥

एवं कर्तुमशक्तौ तु प्रभूणामप्यनुज्ञया ।
अन्यालयात्तविभवैरुत्सवं सम्यगाचरेत् ॥ ३२ ॥

आचार्येणाप्यनुज्ञातस्तदन्यगुरुणा पुनः ।
उत्सवारम्भदिवसात्पूर्वमेव तथा हरिम् ॥ ३३ ॥

अन्यालयं समानीय सुखं तत्र निवासयेत् ।
ततः परं तत्र कुर्यादङ्कुरं ध्वजरोपणम् ॥ ३४ ॥

उत्सवाहांस्ततस्सर्वांस्तत्र चक्रादिभिः सह ।
वासयेत्सुसुखं देवं शिथिलालयसङ्गतम् ॥ ३५ ॥

ध्वजावरोहणं कृत्वा उत्सवान्ते यथा पुरा ।
स्नापयित्वा विशेषेण नयेत्पूर्वालयं पुनः ॥ ३६ ॥

स्वीयालये प्रतिष्ठाप्य प्रभूतञ्च निवेदयेत् ।
नित्यपूजादिकं सर्वं यथापूर्वं प्रकल्पयेत् ॥ ३७ ॥

इत्यार्षे .... अष्टत्रिंशोऽध्यायः

**ग. ज.** अधिकः पाठः । अन्यत्रापि प्रसिद्धः ॥

अतः परं प्रवक्ष्यामि चातुर्वर्ण्यविधिं शृणु ।
ब्रह्मणस्तु मुखोद्भूता ब्राह्मणा इति कथ्यते ॥ १ ॥

तस्य बाहुसमुद्भूताः क्षत्रिया इति कथ्यते ।
तस्यैवोरुसमुद्भूताः वणिजो नाम कथ्यते ॥ २ ॥

तस्य पादसमुद्भूताः शूद्रा इति च कथ्यते ।
ब्राह्मणस्य क्रियां वक्ष्ये नित्यनैमित्तिकीं तथा ॥ ३ ॥

उदयात्प्राक् त्रिघटिका मुहूर्तो ब्राह्म उच्यते ।
ब्राह्मे मुहूर्ते चोत्थाय हरिस्मरणपूर्वकम् ॥ ४ ॥

वस्त्रोत्तरीयधरश्च पूर्वोत्तरमुखो व्रजेत् ।
शुचिस्थले ततो गत्वा ईशान्ये मुखशोधनम् ॥ ५ ॥

दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।
कुर्यान्मूत्रपुरीषञ्च रात्रौ चेद्दक्षिणामुखः ॥ ६ ॥

पञ्चधा लिङ्गशौचं स्यादुदशौचं त्रिवेष्टितम् ।
पादयोर्लिङ्गवच्छौचं हस्तयोश्च चतुर्गुणम् ॥ ७ ॥

मूत्रे पुरीषे भुक्त्यन्ते तथैव द्विजधावने ।
चतुरष्टद्विषष्ट्यष्टगण्डूषैः शुद्धिरिष्यते ॥ ८ ॥

गोकर्णाकृतिहस्तेन माषमग्नजलं पिबेत् ।
तन्न्यूनमधिकं पीत्वा सुरापानसमं भवेत् ॥ ९ ॥

हृत्कण्ठतालुगाभिस्तु यथासङ्ख्यं द्विजातयः ।
शुद्ध्येरंस्त्री च शूद्रश्च सकृत्स्पृष्ट्वा जलं ततः ॥ १० ॥

कण्टकिक्षीरवृक्षोत्थं द्वादशाङ्गुलसम्मितम् ।
कनिष्ठाङ्गुलिवत्सूक्ष्मं दन्तकाष्ठस्य लक्षणम् ॥ ११ ॥

प्रतिपन्नवमीपर्वषष्ठ्यष्टम्यश्चतुर्दशी ।
दन्तानां काष्ठसंयोगे दहत्यासप्तमं कुलम् ॥ १२ ॥

तृणपर्णैः सदा कुर्यादमामेकादशीं विना ।
तयोरपि च कर्तव्यं प्लक्षजम्ब्वाम्रपल्लवैः ॥ १३ ॥

'आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।
ब्रह्मप्रज्ञाञ्च मेधाञ्च त्वं नो देहि वनस्पते' ॥ १४ ॥

प्रक्षाल्य पादौ हस्तौ च मुखञ्चाद्भिः प्रमार्ज्य च ।
प्राङ्मुखोदङ्मुखो वाऽपि दन्तधावनमाचरेत् ॥ १५ ॥

अत्यन्तमलिनः कायो नवद्वारसमन्वितः ।
स्रवत्येव दिवारात्रं प्रातःस्नानं विशोधनम् ॥ १६ ॥

वसाशुक्रमसृङ्मज्जामूत्रं विट् कर्णविण्णखाः ।
श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः ॥ १७ ॥

परस्यैतानि संस्पृश्य स्नायात्स्वस्य विशेषतः ।
चतुर्मलेषु मृच्छौचं शेषेषु जलमात्रतः ॥ १८ ॥

भूमिष्ठमुद्धृतात् पुण्यं ततः प्रस्रवणोदकम् ।
ततोऽपि सारसं पुण्यं गङ्गा पुण्या तु सर्वतः ॥ १९ ॥

गङ्गायाश्चापि माहात्म्यं विष्णुपादावसेचनात् ।
जलाशयन्तु तत्पुण्यं विष्ण्वालयसमीपतः ॥ २० ॥

गङ्गाजलसमं ज्ञेयं विष्णुपादावसेचनात् ।
योऽसौ तीर्थपदो विष्णुः द्रवरूपी जनार्दनः ॥ २१ ॥

स एव द्रवरूपेण वसत्यत्र जलाशये ।
'समस्तजगदाधार शङ्खचक्रगदाधर ॥ २२ ॥

देहि देव ममानुज्ञां युष्मत्तीर्थनिषेवणे' ।
गुणा दश स्नानपरस्य साधोः रूपञ्च तेजश्च बलं यशश्च ।
आयुष्यमारोग्यमलोलुपत्वं दुस्स्वप्ननाशश्च तपश्च मेधा ॥ २३ ॥

नारा आपः समुद्दिष्टा आपो वै नरसूनवः ।
तस्मान्नारायणं देवं स्नानकाले विचिन्तयेत् ॥ २४ ॥

स्रोतसोऽभिमुखो देवखाते देवमुखस्तथा ।
अन्यत्रार्कमुखः कुर्याद्रात्रौ चेदग्निसन्निधौ ॥ २५ ॥

स्नात्वा गङ्गां हरेः पादात्पतमानां स्वमूर्धनि ।
प्रपूर्याञ्जलिना सिञ्चेत्काकस्नानविवर्जितम् ॥ २६ ॥

प्रातर्मध्यंदिनस्नानं वानप्रस्थगृहस्थयोः ।
यतेः त्रिषवणस्नानं सकृत्तु ब्रह्मचारिणः ॥ २७ ॥

युगं युगद्वयञ्चैव त्रियुगञ्च चतुर्युगम् ।
चण्डालसूतिकोदक्यापतितादिक्रमेण तु ॥ २८ ॥

पूर्वाशाभिमुखो देवानुत्तराभिमुखस्त्वृषीन् ।
पितॄंश्च दक्षिणाशस्तु जलमध्ये तु तर्पयेत् ॥ २९ ॥

स्नात्वा धृतार्द्रवस्त्रेण यो द्विजोऽङ्गं प्रमार्जयेत् ।
शुनोच्छिष्टं भवेद्गात्रं पुनः स्नानेन शुद्ध्यति ॥ ३० ॥

अन्तराच्छाद्य कौपीनं वाससी परिधाय च ।
उत्तरीयं ततो धृत्वा प्रक्षाल्य चरणौ करौ ॥ ३१ ॥

स्नानवस्त्रञ्च निष्पीड्य तर्पणं नैव कारयेत् ।
देवर्षिपितरश्चैव शापं दत्वा व्रजन्ति ते ॥ ३२ ॥

वस्त्रञ्च त्रिगुणीकृत्य निष्पीड्य च जलाद्बहिः ।
समं प्रकोष्ठे निक्षिप्य द्विराचान्तो विशुद्ध्यति ॥ ३३ ॥

'ये के चास्मत्कुले जाता अपुत्रा गोत्रजा मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम्' ॥ ३४ ॥

उत्तमा तारसहिता मध्यमा लुप्ततारका ।
अधमा सूर्यसहिता प्रातः सन्ध्या त्रिधा मता ॥ ३५ ॥

उत्तमा सूर्यसहिता मध्यमा लुप्तभास्करा ।
अधमा तारसहिता सायं सन्ध्या त्रिधा मता ॥ ३६ ॥

जानुमग्नजले स्थित्वा आचरेदार्द्रवाससा ।
शुष्कवासास्तटे तिष्ठन् सध्यावन्दनमाचरेत् ॥ ३७ ॥

'आपो हि' ष्ठेत्यृचमेकां लिखन्नवपदं जले (?) ।
न तस्य विद्यते सन्ध्या यथा शूद्रस्तथैव सः ॥ ३८ ॥

रजस्सत्त्वतमोमोहजाग्रत्स्वप्नसुषुप्तिजान् ।
मनोवाक्कायजान् दोषान् नवैतान् नवभिर्दहेत् ॥ ३९ ॥

अष्टाक्षरं नवपदं नवप्रोक्षणमुच्यते ।
दर्भाग्रैः प्रोक्षयेन्मूर्ध्नि अधो यस्य क्षयाय वै ॥ ४० ॥

तिष्ठन् पादौ समौ कृत्वा प्रपूर्याञ्जलिना जलम् ।
गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥ ४१ ॥

अङ्गुष्ठतर्जनीयोगे राक्षसी मुद्रिका मता ।
राक्षसी मुद्रिकायान्तु रुधिरार्घ्यसमं भवेत् ॥ ४२ ॥

मन्देहानां विनाशार्थं गायत्र्यार्घ्यत्रयं ददेत् ।
एतदस्त्रपरित्यागं परीत्यात्माभिमर्शनम् ॥ ४३ ॥

सन्ध्यास्थाने दशगुणं गृहे चैकगुणं भवेत् ।
अग्नौ शतगुणं प्रोक्तमनन्तं विष्णुसन्निधौ ॥ ४४ ॥

सव्याहृतीकां सप्रणवां गायत्रीं शिरसा सह ।
त्रिःपठेदायतप्राणः प्राणायामः स उच्यते ॥ ४५ ॥

यद्रात्र्या कुरुते पापं कर्मणा मनसा गिरा ।
तिष्ठन् वै पूर्वसन्ध्यायां प्राणायामैर्व्यपोहति ॥ ४६ ॥

यदह्ना कुरुते पापं कर्मणा मनसा गिर ।
आसीनः पश्चिमां सन्ध्यां प्राणायामैऽर्व्यपोहति ॥ ४७ ॥

व्याहृतित्रयसंयुक्ता सावित्रीति प्रकथ्यते ।
चतुर्विंशाक्षरैर्युक्ता गायत्री परिपठ्यते ॥ ४८ ॥

गायत्री चैव वेदाश्च जनयामासतुः पुरा।
चतुर्णामपि वेदानां गायत्री भूद्गरीयसी ॥ ४९ ॥

गायत्री वेदमातृत्वात् वेदः पर्वसु गीयते ।
कनिष्ठामूलमारभ्य प्रादक्षिण्यक्रमेण वै ॥ ५० ॥

अनामिकान्तं गणयेज्जप्यं कोटिसहस्रकम् ।
प्रातर्नासासमं कुर्यान्मध्याह्ने भुजयुग्मयोः ॥ ५१ ॥

सायं नाभिसमं कुर्याज्जपहस्तस्य लक्षणम् ।
तत्तत्तीर्थक्रमेणैव कृप्याभ्यो भूपतिं तथा ॥ ५२ ॥

देवान् ऋषीन् पितॄंश्चैव तर्पयेन्नित्यतर्पणम् ।
दैवं कनिष्ठिकामूलमङ्गुल्यग्रं तथार्षकम् ॥ ५३ ॥

ब्राह्ममङ्गुलिमूलं स्यात्पित्र्यमङ्गुष्ठतर्जनी ।
जपेद्द्वादशसूक्तानि चतुर्वेदादिकांस्तु वा ॥ ५४ ॥

इषेत्वाद्यनुवाकैश्च स्वाध्यायो ब्रह्मयज्ञकम् ।
औपासनविहीनस्तु द्विजश्शूद्रसमो भवेत् ॥ ५५ ॥

औपासनविहीनश्च विधुरः परिकीर्तितः ।
अस्नाताशी मलं भुङ्क्ते अजपी पूयशोणितम् ॥ ५६ ॥

असंस्कृतान्नभुङ्मूलमहोमी त्रयमश्नुते ।
पद्माक्षतुलसीकाष्ठसम्भृताभिर्निरन्तरम् ॥ ५७ ॥

मालाभिर्भूषयेदङ्गं हरिभक्तिसमृद्धये ।
ऊर्ध्वपुण्ड्रं ततो धृत्वा पूर्वोक्तेन विधानतः ॥ ५८ ॥

मृदुवस्त्रं समाच्छाद्य सोष्णीषः सोत्तरीयकः ।
धारयेत्तु पवित्रञ्च हस्तयोरङ्गुलीयकम् ॥ ५९ ॥

कटकञ्चोपवीतञ्च कुण्डले चाङ्गुलीयकम् (?) ।
ग्रीवालङ्करणञ्चैव धृत्वा पञ्चाङ्गभूषणम् ॥ ६० ॥

देवकार्ये द्विदर्भैश्च पितृकार्ये त्रिदर्भकैः ।
एकेन प्रेतकार्ये च दर्भसङ्ख्या विधीयते ॥ ६१ ॥

अग्रञ्च चतुरङ्गुल्यं ग्रन्थिरेकाङ्गुलं भवेत् ।
वलयं द्व्यङ्गुलं प्रोक्तं पवित्रस्य तु लक्षणम् ॥ ६२ ॥

अग्रं ब्रह्माधिदैवत्यं ग्रन्थिर्विष्ण्वधिदैवतम् ।
वलयं रुद्रदैवत्यं पवित्रस्याधिदेवताः ॥ ६३ ॥

सपवित्रेण हस्तेन कर्माङ्गाचमनं चरेत् ।
अग्रस्थूलं भवेन्नारी मूलस्थूलं नपुंसकम् ॥ ६४ ॥

मूलमग्रं समं पुंस इति दर्भस्य लक्षणम् ।
विवाहे पुंसि सीमन्ते नारीसम्बन्धकं कुशम् ॥ ६५ ॥

चौलोपनयने वृद्धौ पुंदर्भश्चैव दैविके ।
पैतृके यज्ञयागे (?) च नपुंसककुशं भवेत् ॥ ६६ ॥

पश्यन् देवं ततो हुत्वा यागान् सर्वान् समाचरेत् ।
वेदान् सर्वानधीयीत सर्वशास्त्रसमन्वितान् ॥ ६७ ॥

षट्कर्मनिरतश्चैव धर्मयुक्तो जितेन्द्रियः ।
कृषिगोरक्षवाणिज्यं ब्राह्मणस्योपजीवनम् ॥ ६८ ॥

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे भृगुप्रोक्तायां संहितायां क्रियाधिकारे
पञ्चत्रिंशोऽध्यायः ॥

श्रियै नमः

श्रीनिवासाय नमः

# क्रियाधिकारानुबन्धः (२)

अलब्धसंवादान्तरः प्रक्षिप्तः पाठः



ण. कोशधृतोऽयं पाठः ॥

अतः परं प्रवक्ष्यामि भक्तानां स्थापनाविधिम् ।
जटिनं शिखिनं वाऽपि ब्राह्मणं परिकल्पयेत् ॥ १ ॥

प्राञ्जलिं भावनायुक्तं नासान्ताहितलोचनम् ।
क्षत्रियं मकुटोपेतं वैश्यमुद्बद्धकुन्तलम् ॥ २ ॥

कुर्याच्छूद्रानुलोमादीन् रोमचूडासमन्वितान् ।
अथवा मुण्डितान्वाऽपि भगवद्ध्यानतत्परान् ॥ ३ ॥

यदाकारेण देवेशं ते पश्यन्ति तदाकृतीन् ।
अष्टतालोक्तमानेन द्विजातीन् परिकल्पयेत् ॥ ४ ॥

मध्यमेनैव शूद्रादीन् कारयेत्तु यथाविधि ।
प्रमाणं पूर्वमेवोक्तं ध्रुवबेरवशात्तथा ॥ ५ ॥

कृत्वैवं भक्तबिम्बन्तु प्रतिष्ठामाचरेद्बुधः ।
असुरान् राक्षसान् भूतान् गरुडान् नागकिन्नरान् ।
यक्षान् विद्याधरान् सर्वान् ऋषीनथ च मानवान् ।
ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रानप्यन्त्यजानपि ॥ ७ ॥

विष्णुभक्तिसमायुक्तान् तच्चिह्नांस्तत्परायणान् ।
भक्तानां नाम वक्ष्येऽहं भूतादीनां क्रमं शृणु ॥ ८ ॥

पोयिगै आल्वार् ( பொய்கை ஆழ்வார் )

भूतं भूताह्वयञ्चैव ब्रह्मज्ञानिनमेव च ।
अयोनिजमितिख्यातं चतुर्मूर्तिमुदीरयेत् ॥ ९ ॥

पूदत्ताल्वार् ( பூதத்தாழ்வார் )

सरसं सारसञ्चैव सारसोद्भवमेव च ।
ज्ञानप्रदीपनञ्चैव इत्येवमर्चयेद्बुधः ॥ १० ॥

पेयाल्वार् ( பேயாழ்வார் )

महदाह्वयं महाज्ञानं महायोगिनमेव च ।
ज्ञानाधारञ्च इत्येव नाम्ना चैव समर्चयेत् ॥ ११ ॥

तिरुमलिशै आल्वार् ( கள்ள திருமழிசையாழ்வார் )

भक्तिसारं महाचक्रं सुदर्शनस्वरूपिणम् ।
उग्रमूर्तिमिति ज्ञात्वा चतुर्मूर्तिभिरर्चयेत् ॥ १२ ॥

कुलशेखराल्वार् ( குலசேகராழ்வார் )

कुलशेखरं नृपतिं कुलश्रेष्ठं तथैव च ।
महाशूरमिति ख्यातं इत्यावाह्य समर्चयेत ॥ १३ ॥

तिरुप्पाणाल्वार् ( திருப்பாணாழ்வார் )

योगिवाहं सत्यमूर्तिः सत्योद्भवमिति स्मरन् ।
ब्रह्मज्ञानिनमित्येवं चतुर्मूर्तिरुदाहृता ॥ १४ ॥

तोण्डरडिप्पोडि आल्वार् ( தொண்டரடிப்பொடி ஆழ்வார் )

भक्ताङ्घ्रिरेणुं भक्ताढ्यं विष्णुभक्तमिति स्मरन् ।
दासानुदासमित्याहुरेभिर्नामभिरर्चयेत् ॥ १५ ॥

तिरुमङ्गै आल्वार् ( திருமங்கை ஆழ்வார் )

परकालं परंब्रह्म परंज्योतिषमेव च ।
त्रिकालज्ञानिनमिति समावाह्य समर्चयेत् ॥ १६ ॥

एंबेरुमानार् ( எம்பெருமானார் )

यतीन्द्रञ्च यतिश्रेष्ठं रामानुजमिति स्मरन् ।
आदिशेषस्वरूपञ्च चतुर्मूर्तिभिरर्चयेत ॥ १७ ॥

ाल्वार् ( நம்பாழ்வார் )

पराङ्कुशं शठद्विषं चतुर्वेदस्वरूपिणम् ।
वकुलाभरणश्चेति समावाह्य समर्चयेत् ॥ १८ ॥

मुनि आल्वार् ( நாதமுனி ஆழ்வார் )

नरश्रेष्ठं नाथमुनिं नारायणपरायणम् ।
निर्द्वन्द्वमिति चतुर्भिर्नामभिस्सम्यगर्चयेत् ॥ १९ ॥

न्ताचार्यः ( வேதாந்தாசாரியார் )

पराङ्कुशं ब्रह्ममूर्तिं चतुर्वेदान्तपारगम् ।
वेदान्तदेशिकश्चेति समावाह्य समर्चयेत् ॥ २० ॥

क्कच्चिनम्बि ( திருக்கச்சி நம்பிகள் )

वणिजं पुण्डरीकाक्षं वायुमूर्तिमिति स्मरन् ।
सर्वप्राणिस्वरूपञ्च नामभिस्सम्यगर्चयेत् ॥ २१ ॥

ुरकवि आल्वार् ( மதுரகவி ஆழ்வார் )

कवीन्द्रञ्च मुनिश्रेष्ठं कविश्रेष्ठमिति स्मरन् ।
मधुरं कविमित्येभिश्चतुर्मूर्तिभिरर्चयेत् ॥ २२ ॥

त्ताल्वार् ( கூடத்தாழ்வார் )

माधवं मन्मथञ्चैव मानसोद्भवमेव च ।
श्रीविष्णुपुत्रमित्येतैर्नामभिः सम्यगर्चयेत् ॥ २३ ॥

ळ्ळैलोकाचार्यः ( பிள்ளை லோகாசாரியார் )

भूसुरेन्द्रं महात्मानं ब्राह्मणोत्तममेव च ।
लोकाचार्यमिति ज्ञात्वा चतुर्मूर्तिभिरर्चयेत् ॥ २४ ॥

* सप्तदशभक्तानां स्थापनारम्भमुत्तमम् ।
उत्तरायणकाले तु दक्षिणे वा त्वरान्वितः ॥ २५ ॥

शयानं बेरमुत्थाप्य प्रणम्यैवानुमान्य च ।
पुष्पमाल्यैरलङ्कृत्य पूजयेदष्टविग्रहैः ॥ २६ ॥

---

* अत्र षोडशैव नामान्युपलभ्यन्ते ॥

*अतः परं प्रवक्ष्यामि विष्णुभक्तार्चनं बुधाः ।
विणुभक्तिप्रदञ्चैव विष्णुसारूप्यदं शुभम् ॥ २७ ॥

भक्तार्चनाद्धरिः प्रीतः सर्वाभीष्टं प्रयच्छति ।
तस्मादपि विशेषेण कुर्याद्भागवतार्चनम् ॥ २८ ॥

ये तु सायुज्यमापन्नास्तद्रूपं ये समागताः ।
बलिहोमादिहीनञ्च तेषां विष्णुवदर्चनम् ॥ २९ ॥

ये तु सालोक्यसामीप्ये तेषां शान्तवदर्चनम् ।
अथ वा केवलं नाम्ना पूजयेदिति केचन ॥ ३० ॥

प्रातः स्नात्वाऽथ सावित्रीं जप्त्वा सन्ध्यामुपास्य च ।
होमं हुत्वा विष्णुसूक्तं पठन् भक्तालयं व्रजेत् ॥ ३१ ॥

तूष्णीं कवाटमुद्घाट्य हस्तौ त्रिस्ताडयेत्तथा ।
भक्तबिम्बं नमस्कृत्य तन्नामस्तोत्रकं पठेत् ॥ ३२ ॥

तथैवाचमनं दत्वा हस्तेन विमृजेत्पुनः ।
स्नानासनं कल्पयित्वा पाद्यमाचमनं तथा ॥ ३३ ॥

'इषे' त्वादिजपन् स्नानं कृत्वा विष्णोर्नुकादिना ।
प्लोतादिकं ततो विद्वानलङ्कारासने ददेत् ॥ ३४ ॥

वस्त्राभरणगन्धाद्यैः विष्णुभक्तं विशेषतः ।
मन्त्रान्ते नाम संयोज्य विष्णुभक्तविशेषणम् ॥ ३५ ॥

चतुर्थ्या योज्य सर्वत्र पाद्यमाचमनं ददेत् ।
गन्धं पुष्पं तथा धूपं दीपमर्घ्यं तथा चरेत् ॥ ३६ ॥

दत्वा तथैवाचमनं ददेद्भोज्यासनं तथा ।
पाद्यमाचमनं दत्वा मधुपर्कं निवेदयेत् ॥ ३७ ॥

'तदस्य प्रिय' मित्युक्त्वा विष्णुशेषं निवेदयेत् ।
नित्यं निवेद्यं विष्णोर्यत्तद्भक्तैर्भोज्यमुच्यते ॥ ३८ ॥

अनिवेदितनैवेद्ये मन्त्रहीननिवेदने ।
जलसम्प्रोक्षणं कृत्वा पूजां सम्यक्समाचरेत् ॥ ३९ ॥

'इदं विष्णु' रिति प्रोच्य पानीयाचमनं ददेत् ।
फलापूपोपदंशादीन् तत्तन्नाम्ना प्रदापयेत् ॥ ४० ॥

ताम्बूलमपि दत्वैव ' विचक्रम' इति ब्रुवन् ।
पुनराचमनं दत्वा पुनश्च प्रणमेद्भुवि ॥ ४१ ॥

नाम्ना पुष्पाञ्जलिं दत्वा 'क्षम' स्वेति प्रणम्य च ।
नाम्ना यात्रासनं प्रोक्तं तत्र शान्तस्य मन्त्रतः ॥ ४२ ॥

नाम्ना संयोज्य सर्वत्र दद्यादेवं यथाविधि ।
एष एव विधिः प्रोक्तो विष्णुभक्तार्चनं प्रति ॥ ४३ ॥

सर्वेषामेव देवानां तत्तन्नामपुरस्सरम् ।
विष्णुभक्तविशेषेण दद्याच्छेषन्तु पूर्ववत् ॥ ४४ ॥

एवं भक्तार्चनं कुर्वन् विष्णोः प्रीतिकरो भवेत् ।

इत्यार्षे....श्रीवैखानसे ३३—*३४ अध्यायौ ।

---

ख. कोशे अयं पाठः ॥

अतः परं प्रवक्ष्यामि भक्तानामर्चनक्रमम् ।
विष्णुभक्तिसमृद्ध्यर्थं विष्णुसारूप्यसिद्धये ॥ १ ॥

भक्तानामर्चनं कुर्याद्वैष्णवानां सदा बुधः ।
भक्तार्चनाद्धरिः प्रीतः सर्वाभीष्टान् प्रयच्छति ॥ २ ॥

तस्मादपि विशेषेण कुर्याद्भागवतार्चनम् ।
ये तु सायुज्यमापन्नाः तद्रूपन्तु समागताः ॥ ३ ॥

बलिहोमादिहीनं स्यात्तेषां विष्णुवदर्चनम् ।
ये तु सालोक्यसामीप्ये तेषां शान्तवदर्चनम् ॥ ४ ॥

अथवा स्वस्य नाम्नैव पूजनं केचिदूचिरे ।
प्रातस्स्नात्वाऽथ सावित्रीं जप्त्वा सन्ध्यामुपास्य च ॥ ५ ॥
होमं हुत्वा विष्णुसूक्तं जप्त्वा भक्तालयं व्रजेत् ।
तूष्णीं कवाटमुद्घाट्य द्विः करावपि ताडयेत् ॥ ६ ॥
भक्तबिम्बं नमस्कृत्य तन्नाम्ना ध्यानमाचरेत् ।
निर्माल्यञ्च व्यपोह्यैव मार्जन्या मार्जनं चरेत् ॥ ७ ॥
'शुची वो हव्य' मन्त्रेण गोमयेनोपलिप्य च ।
'अमा वाजस्य' मन्त्रेण पादप्रक्षालनं चरेत् ॥ ८ ॥
'धारा' स्विति च मन्त्रेण तोयमाहृत्य पूर्ववत् ।
गन्धपुष्पादि सम्भृत्य बिम्बस्यैव तु दक्षिणे ॥ ९ ॥
आत्मशुद्धिं ततः कुर्वन्नासीनः सम्यगर्चयेत् ।
यदाकारं तथा ध्यात्वा सम्यक् ध्यानं समाचरेत् ॥ १० ॥
मूर्तिमन्त्रेण कुर्वीत पञ्चोपनिषदैरपि ।
तद्बीजं हृदये न्यस्य प्रणवेन सुसंयुतम् ॥ ११ ॥
आवाह्य मूर्तिमन्त्रेण रूपध्यानसमाधिना ।
एवं मन्त्रासनं कृत्वा 'प्रतद्विष्णु' रिति ब्रुवन् ॥ १२ ॥
दत्वा पुष्पैरासनन्तु स्वागतं पूर्ववच्चरेत् ।
तथैव नाममन्त्रेण अर्घ्यमाचमनं ददेत् ॥ १३ ॥
'अन्नाद्या' येति मन्त्रेण दन्तधावनमाचरेत् ।
'आपो हि' ष्ठेति मन्त्रेण मुखप्रक्षालनं चरेत् ॥ १४ ॥
तथैवाचमनं दत्वा प्लोतेन विमृजेत्पुनः ।
स्नानासनं कल्पयित्वा शुद्धस्नानोक्तमार्गतः ॥ १५ ॥
स्नापयित्वा यथाशक्ति कलशैरभिषेचयेत् ।
अलङ्कारासने स्थाप्य अङ्गशोधनमाचरेत् ॥ १६ ॥

'सोमस्य' त्व ति मन्त्रेण वस्त्रञ्च परिधापयेत् ।
'भूतो भूते' ति मन्त्रेण अलङ्कुर्याच्च भूषणैः ॥ १७ ॥

'अग्निं दू' तेन मन्त्रेण उपवीतञ्च धारयेत् ।
श्वेतं शुद्धमृदं गृह्य ऊर्ध्वपुण्ड्राणि धारयेत् ॥ १८ ॥

धारयेत्तस्य मध्ये तु मृदा चूर्णेन लक्षणम् ।
वेणुपत्राकृतिं लिख्य 'सोम यास्त' इति ब्रुवन् ॥ १९ ॥

पङ्कं विरूपं बद्धाग्रं छिन्नमूलं पदच्युतम् ।
शुभ्रं सुसूक्ष्ममव्यग्रमथान्याङ्गुलिकल्पितम् ॥ २० ॥

विगन्धमपसव्यञ्च पुण्ड्रमाहुरनर्थदम् ।
इति ज्ञात्वा न्यसेद्धीमान् विष्णुभक्ताय योजयेत् ॥ २१ ॥

पद्माक्षतुलसीमाला धारयेद्विष्णुधारिताः ।
पवित्रं ग्रन्थिसंयुक्तं विष्णुना धारितं पुरा ॥ २२ ॥

धारयेन्मूर्तिमन्त्रेण अभयं तुलसीदलम् ।
'अप्सरस्सु' समुच्चार्य गन्धं तस्यैव लेपयेत् ॥ २३ ॥

गायत्र्या च स्रजं दत्वा 'अग्निं' दूतेन धूपयेत् ।
'अहम' ग्नेति मन्त्रेण तथा दीपं प्रदर्शयेत् ॥ २४ ॥

दत्वाऽऽचामं मूर्तिमन्त्रैः घटदीपं प्रदर्शयेत् ।
दर्पणं चामरं छत्रं व्यजनं मुखवासकम् ॥ २५ ॥

पञ्चोपचारान् विधिवन्नामभिः सम्प्रयोजयेत् ।
मन्त्रैः पुष्पाञ्जलिं दत्वा द्रामिडैः स्तुतिवेदिभिः ॥ २६ ॥

स्तुत्वा भक्त्या यथान्यायं नित्यं विधिवदर्चयेत् ।
भोज्यासनात्पूर्वमेव स्रङ्माल्यं पादुकां ददेत् ॥ २७ ॥

देवेशस्य तु नैवेद्यं पश्चाद्दत्वा विशेषतः ।
द्वाराधिपान् द्वारपालान् दिक्पालाननपायिनः ॥ २८ ॥

नित्यमभ्यर्चनं कुर्यादुत्सवोक्तेषु चालये ।
मङ्गलाशासनं कृत्वा दिनंप्रति दिनंप्रति ॥ २९ ॥

विनियोगान् समाप्यैव विष्णुभक्तस्य पूजनम् ।
एककालं द्विकालं वा त्रिकालं वाऽथ वा चरेत् ॥ ३० ॥

सम्यगाराधनं कुर्यात्सर्वैश्वर्यमवाप्नुयात् ।
भृगुप्रोक्तविधानेन स्थापकः पूजकस्तथा ॥ ३१ ॥

शृण्वन्निमं पठन्वापि विधिमार्षं पुरातनम् ।
इह लोके श्रियं भुङ्क्त्वा पुत्रपौत्रसमन्वितः ॥ ३२ ॥

अन्ते विमानमारुह्य विष्णुलोकं स गच्छति ।

इत्यार्षे .... द्विचत्वारिंशोऽध्यायः ॥

अविरलकृतवर्णश्रेषणं पुस्तकेऽस्मिन्
रचितमनवधाने लेखिनी दूषणं वा ।

अनुचितमथवा यद्वर्णतो वक्रितो वा
करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ॥ १ ॥

विकारिवर्षे वैशाखे शतभिषङ्नक्षत्र संयुते
गुरुवारे च षष्ठ्यां वै तुलालग्ने च पूर्तितम् ।

श्री वैखानस सूत्रेण पराङ्कुशनिवासिना-
वेङ्कटेशस्यार्चकेन श्रीरमेण च लेखितम् ॥ २ ॥

श्रीवेङ्कटेश परिपूर्णाय मङ्गलम् ॥

---

ल कोशे धृतः पाठः ॥

अतः परं प्रवक्ष्यामि श्रियै श्रीमच्छताष्टकम् ।
पद्मप्रिया पद्मिनी च पद्महस्ता तथोच्यते ॥ १ ॥

पद्मालया पद्मदला पद्माक्षी विश्वविप्रिया ।
विष्णोरनुकूला पद्मवासाः पद्मदोहिन्यथोच्यते ॥ २ ॥

श्रियै पूर्वा ज्ञानपूर्वा सुखदा च सुतृप्तिका ।
पुष्टिकरा महालक्ष्मीः लक्ष्मीपूर्वाऽभिवृद्धिदा ॥ ३ ॥

प्रमोदा सम्भवा लक्ष्मीम्भरा चात्मम्भरोदिता ।
वृद्धिसमुद्भवा चेच्छा विधायिन्युदिता पुनः ॥ ४ ॥

पुण्याङ्गा तत्स्वरूपापि चोर्वीहा सत्यका तथा ।
पुण्यात्महृदयावासिन्यस्य वक्षःस्थलस्थिता ॥ ५ ॥

पुण्यनेत्रा पुण्यदायिनी नित्यपुण्या सुपुण्यका ।
वरमोदिनी भद्रतारा तथा सर्वार्थसाधिनी ॥ ६ ॥

स्यात्सुकान्तिप्रदा सर्वानन्दा पत्नी हरेर्मता ।
शोभनाङ्गा श्रुतिरूपा भोगा भोगप्रतिष्ठिता ॥ ७ ॥

वरप्रसादिनी चेति क्रमाच्चैव सुहूयताम् ।
लोकमाता जगदुमा नित्यानन्दा च भोगदा ॥ ८ ॥

सर्वभोगा धारिणी च भोगगुप् पुण्यवत्यपि ।
वसुन्धरा सुपत्री च तथा वसुकराऽपि च ॥ ९ ॥

साधिनी सङ्कल्पतृप्तिः स्यान्महामनसी तथा ।
सङ्कल्पसाधिनी चैव ब्रह्माणी कल्प्यसाधिनी ॥ १० ॥

भोगवती दीप्तिकरी सम्यक् श्रीश्च सुगन्धिनी ।
विद्या जयकरी सम्यक् पुष्टिः तद्वच्च पुष्टिका ॥ ११ ॥

विद्याधरी शान्तिदा च विद्यारूपेष्टसाधिनी ।
कल्याणसुगुणा नित्यानपायिन्यथ सा रमा ॥ १२ ॥

हंसवाहिन्यथो देवी भूतिका श्रीकरा तथा ।
प्रह्लादिनी च चित्ता च चित्तरूपा तथोच्यते ॥ १३ ॥

सर्वायुषाणामायुर्मे पाह्यश्विन्यै च पुरोदितात् ।
सर्वदायिन्यथ भवेत्प्रयोजनकरा तथा ॥ १४ ॥

प्रधानकारिणी चैव समृद्धिः पुण्यवर्धिनी ।
तोया जयकरी सन्तानकरी वैष्णवी तथा ॥ १५ ॥

विष्णोश्च संवहा संवित्तथा वृषभवाहिनी ।
वराङ्गना च दिव्याङ्गी चेति सम्यक् सुहूयताम् ॥ १६ ॥

सन्धारिणां वरिष्ठा स्यादुद्वहन्त्यपि वै क्रमात् ।
देव्यै कमलधारिण्यै तथा कमलवासिनी ॥ १७ ॥

कमलाक्षप्रिया चैव चतुर्थ्यन्तेन हूयते ।
'शंसा नियच्छत्यनिशं—भूय आत्मा' द्वयं तथा ॥ १८ ॥

श्रीशताष्टकमित्येतद्धोतव्यं प्रीतये श्रियः ।

इत्यार्षे श्रीवैखानसे भगवच्छास्त्रे—श्रीशताष्टकं नाम सप्तचत्वारिंशोऽध्यायः ॥

---

अतः परं प्रवक्ष्यामि महीदेव्याः शताष्टकम् ।
कमला कमलावासनेलपादा मही स्मृता ॥ १ ॥

हरिणी चैव पोष्णी च क्षोणी चापि मही तथा ।
(अतला नितला चैव वितला सुतला तथा)
रूपपूर्वा तला चैव नितला वितला तथा ॥ २ ॥

सुतला रसातला चैव तलातलमहातला ।
भूमिर्भूतलरूपा च लोकरूपोपसंहिता ॥ ३ ॥

भूर्भुवः स्वर्महर्जनस्तपस्सत्याकृतिस्तथा ।
ब्रह्मताक्ष्र्येशविष्ण्वण्डरूपान्तर्बहिरण्डका ॥ ४ ॥

पञ्चभूतमनोबुद्धिचित्ताहङ्काररूपिणी ।
प्रकृतिर्विकृतिर्विश्वरूपा स्याद्विश्वसाधिनी ॥ ५ ॥

धरिली स्याच्च महती नदी तद्रूपका तथा ।
आत्मम्भरा वर्धनी च धरित्री महती तथा ॥ ६ ॥

धराधरवर्धिनी च धराधरस्वरूपिणी ।
वसुन्धरा वसुकरा रूपा स्याद्धनवर्धिनी ॥ ७ ॥

स्यान्महाफलरूपा च महाफलविवर्धिनी ।
चराचरस्वरूपा च तथा सागररूपिणी ॥ ८ ॥

सर्वकामसमृद्धिः स्यात्तथा सागरवर्धिनी ।
प्रोच्यते मङ्गलकरा तथा काममनोहरा ॥ ९ ॥

श्यामाङ्गकान्तिरपि च तथा चातकवाहिनी ।
नीलोत्पलकरा चापि पुण्डरीकेक्षणा तथा ॥ १० ॥

पुण्डरीकाक्षदयिता तथा विष्णुमनोहरा ।
विष्णोः प्रियतमा वक्षःस्थलस्थानाऽतिकान्तिका ॥ ११ ॥

आदिमूर्तिप्रिया नित्यानन्दा चानन्दरूपिणी ।
सत्या सत्यप्रिया सत्यनेत्रा चादिकिटिप्रिया ॥ १२ ॥

माधवस्य प्रिया चापि महालक्ष्मीप्रिया तथा ।
वरमोदिन्यथ वरप्रसादिन्यपि चोच्यते ॥ १३ ॥

वररूपा च पुण्याङ्गा पुण्यवत्यपि तत्प्रथा ।
पुण्यरूपा पुण्यनेत्रा तत्पुष्टिस्तुष्टिरेव च ॥ १४ ॥

इष्टप्रदा च यज्ञाङ्गी इष्टसाधिन्यथोच्यते ।
आत्मम्भरा आत्मरूपा आत्मरूपेश्वरप्रिया ॥ १५ ॥

तद्वच्च सा यज्ञयज्ञा तथा चौङ्काररूपिणी ।
स्वाहाकारा स्वधाकारा वेदविद्यास्वरूपिणी ॥ १६ ॥

महादेवी महामाना इति मन्त्रैर्यथाक्रमम् ।
महीशताष्टकं प्रोक्तं चतुर्थ्यन्तेन संयुतम् ॥ १७ ॥

'तयादित्या — तत्त्रीण्येषा' तथा व्याहृतिभिर्हुनेत् ।

इत्यार्षे श्रीवैखानसे — महीशताष्टकं नाम अष्टचत्वारिंशोऽध्यायः ॥

---

अतः परं प्रवक्ष्यामि देवेशस्य शताष्टकम् ।
नारायणो नरः शौरिश्चक्रपाणिर्जनार्दनः ॥ १ ॥

वासुदेवो जगद्योनिः वामनो ज्ञानपञ्जरः ।
श्रीवल्लभो जगन्नाथश्चतुर्मूर्तिश्चतुर्भुजः ॥ २ ॥

गजेन्द्रघ्नो गजर्तिघ्नः केशवः क्लेशनाशनः ।
कैटभारिरविद्यारिः कामदः कमलेक्षणः ॥ ३ ॥

कंसशत्रुरघारातिः काकुत्स्थः खगवाहनः ।
नीलाम्बुजद्युतिर्नित्यो नित्यतृप्तो निराश्रयः ॥ ४ ॥

ब्रह्मण्यः पृथिवीनाथः पीतवासा गुहाशयः ।
वेदगर्भो विभुर्विष्णुः श्रीमान् त्रैलोक्यभूषणः ॥ ५ ॥

यज्ञमूर्तिरमेयात्मा वरदो वासवानुजः ।
भक्तिप्रियो जगत्पूज्यः परमात्मा सुरान्तकः ॥ ६ ॥

देवदेवो हृषीकेशः शङ्करो गरुडध्वजः ।
नारसिंहो महादेवः स्वयम्भूर्भुवनेश्वरः ॥ ७ ॥

श्रीधरो देवकीपुत्रः पार्थसारथिरच्युतः ।
शङ्खपाणिः परंज्योतिरात्मज्योतिरचञ्चलः ॥ ८ ॥

श्रीवत्साङ्कोऽखिलाधारः सर्वलोकपतिः प्रभुः ।
त्रिविक्रमः त्रिकालज्ञः त्रिधामा करुणाकरः ॥ ९ ॥

सर्वज्ञः सर्व इत्युक्तः सर्वसाक्ष्यनिरुद्धकः ।
हयग्रीवो हरिः शार्ङ्गी हरिकेशो हलायुधः ॥ १० ॥

सहस्रबाहुरव्यक्तः सहस्राक्षोऽक्षयोऽक्षरः ।
अनन्तः सर्वलोकेशः कामनन्दश्च विक्रमः ॥ ११ ॥

मायाधारो निराधारः सर्वाधारो धराधरः ।
महाविष्णुः सदाविष्णुर्माधवो मधुसूदनः ॥ १२ ॥

निष्कलङ्को निराभासो निष्प्रपञ्चो निरञ्जनः ।
विश्वभुग्विश्वकर्ता च पुण्यकीर्तिः पुरातनः ॥ १३ ॥

'अतो देवा' दि षण्मन्त्रैः तथा व्याहृतिभिः पृथक् ।
हुनेदेवं भगवतः शताष्टकमनुत्तमम् ॥ १४ ॥

इत्यार्षे श्रीवैखानसे — भगवच्छताष्टकं नाम **एकोनपञ्चाशोऽध्यायः** ॥

श्रियै नमः

श्रीनिवासाय नमः

# क्रियाधिकारानुबन्धः (२)

अनुक्रमणिकासु निबन्धादिषु च लभ्यमानः पाठः



ण. पुस्तुकान्ते धृतोऽयं ग्रन्थभागः ॥

आदित्यास्तमयात्पूर्वमपरञ्चार्धयामकम् ।
पौर्णमासी यदि भवेद्दीपदानं समाचरेत् ॥ १ ॥

इति भृगुः ॥

उपरागे च ॥

रोहिण्यां वा भरण्यां वा दीपं पर्वणि कारयेत् ।
अपर्वणि कृतं दीपं राजराष्ट्रविनाशकम् ॥ १ ॥

रजनीमुखवेलायां पूर्णिमा पूर्यते यदि ।
अविद्धैषा भवेत्तत्र दीपदानं शुभावहम् ॥ २ ॥

चतुर्दशी कलामात्रा दृष्टा यदि निशामुखे ।
विद्धेति प्रोच्यते पूर्णदीपारोपं विनिन्दितम् ॥ ३ ॥

अपरेद्युर्भवेत्पूर्णा विद्धा चेत्पूर्ववासरे ।
प्रतिपद्यपि सङ्ग्राह्या दीपदानोत्सवक्रिया ॥ ४ ॥

आद्ये पादे प्रतिपदि तदादौ घटिकाद्वये ।
प्रथमायान्तु तिथ्यां वै दीपारोपः शुभावहः ॥ ५ ॥

उपरागे तथा कुर्यादिति वेदविदो विदुः ।
पूर्वे परे च सङ्क्रान्तिविद्धया रहिता यदि ॥ ६ ॥

अर्धरात्रादधश्चेन्दोः ग्रहणञ्चेदनागतम् ।
तद्दोषरहितायान्तु पूर्णायामुत्सवं चरेत् ॥ ७ ॥

सङ्क्रान्त्या चोपरागेण दूषिते ते यदा भवेत् (?) ।
दीपोत्सवं न कुर्वीत परस्मिन् दिवसे चरेत् ॥ ८ ॥

एका चेदुपरागेण पूर्णिमा दूषिता यदि ।
पुरस्ताच्च परस्ताच्च वर्जयित्वाऽष्टनाडिकाः ॥ ९ ॥

दीपोत्सवं तदा कुर्याद्विष्णुप्रीतिकरं शुभम् ।
अपर्वणि कृतो दीपो राजराष्ट्रं विनाशयेत् ॥ १० ॥

तस्मात्सर्वप्रयत्नेन दीपं पर्वणि कारयेत् ।

---

२० अध्याये ध्यानमुक्तावलीव्याख्यानधृतः पाठः.

३६० पु. ४ पं. — तत्त्रयस्त्रिंशदंशैकाधिकः सङ्कर्षणोदयः ४४६.
३६२ पु. १९ पं. पश्चात् — तत्प्रतिष्ठाक्रमं वक्ष्ये शृणुध्वं मुनिसत्तमाः ।
(सुमास)
„ „ ३३ पं. — औपासनं विरिञ्चस्य.
३६३ पु. १ पं. — वास्तुशान्त्यम्बकोन्मेषमधिवसत्रयं तथा.
„ „ ५ पं. पश्चात् — एककुम्भे सहध्यायेद्वासुदेवेन रुक्मिणीम् । दैविके विष्णुना साकं देव्यौ कुम्भे तु भावयेत् संस्नाप्य सप्तकलशैः सर्वानेव पृथक् पृथक्.
३६४ पु. २ पं. — रुद्रमन्त्रद्वयेनापि भित्तिस्थरौद्रदेवताः.
„ „ २३ पं. — प्रत्यक्प्रवृत्तमनसा.
३६५ पु. ४ पं. — परिवारांस्तथोत्तरान् १०४.
„ „ ६ पं. — विष्णुना सह १०५.
३६५ पु. ८ पं. पश्चात् — नित्यार्चनविधानेन समभ्यर्च्य पृथक् पृथक्-१०७ शुद्धान्नं वासुदेवस्य विष्णोरपि च पूर्ववत् (हवींषि)
३६५ पु. १६ पं. — १० श्लोकात् पश्चन् २७ अध्यायः समाप्यते ॥

स. कोशे कुत्रचिद्धृता अंशाः



**गायत्रीमन्त्राः – विष्णोः** — वरं विष्णुर्वरेण्यं भर्गो माया च धीमहि तन्नो विष्णुः प्रचोदयात् ।

तथा । नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्

**लक्ष्म्याः** — महादेव्यै च विद्महे विष्णुपत्न्यै च धीमहि । तन्नो लक्ष्मी प्रचोदयात् ।

**हरिण्याः** — धनुर्धरायै विद्महे सर्वसिद्ध्यै च धीमहि । तन्नो ध॰ प्रचोदयात् ।

**नृसिंहस्य** — स्तम्भोद्भवाय विद्महे वज्रदंष्ट्राय धीमहि । तन्नो नार॰ सिंहः प्रचोदयात् ।

**दाशरथिरामस्य** — दाशरथाय विद्महे सीतावल्लभाय धीमहि । तन्नो रामः प्रचोदयात् ।

**कृष्णस्य** — वटपत्रशयनाय विद्महे गोपीजनवल्लभाय धीमहि । तन्नः कृष्णः प्रचोदयात् ।

**गरुडस्य** — तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि । तन्नो गरु॰ प्रचोदयात् ।

**शङ्खस्य** — पाञ्चजन्याय विद्महे शुभ्रवर्णाय धीमहि । तन्नः शङ्ख॰ प्रचोदयात् ।

**चक्रस्य** — सुदर्शनाय विद्महे महाज्वालाय धीमहि । तन्नश्चक्र॰ प्रचोदयात् ।

**गदायाः** — कौमोदक्यै च विद्महे हिरण्मय्यै च धीमहि । तन्नो ग॰ प्रचोदयात् ।

**श्रीवत्सस्य** — श्रीवत्साय विद्महे महाचिह्नाय धीमहि । तन्नो वत्स॰ प्रचोदयात् ।

**खड्गस्य** — तीक्ष्णदंष्ट्राय विद्महे नीलवर्णाय धीमहि । **तन्नः** खड्गः प्रचोदयात् ।

तथा प्रकारान्तरेण — श्रीनन्दकाय विद्महे कृष्णवर्णाय धीमहि । तन्नः खड्गः प्रचोदयात् ।

**शार्ङ्गस्य** — श्रीवत्साय विद्महे महासाराय धीमहि । तन्नः शार्ङ्गः प्रचोदयात् ।

**वनमालायाः** — स्रजां वराय विद्महे सुगन्धयुक्ताय धीमहि । तन्नो वनमाला प्रचोदयात् ।

**विखनसः** — विखनसाय विद्महे विष्णुरूपाय धीमहि । तन्नो विखनाः प्रचोदयात् ।

**विष्वक्सेनस्य** — महासेनाय विद्महे विष्वक्सेनाय धीमहि । **तन्नः** शान्तः प्रचोदयात् ।

**रुद्रस्य** — तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ।

**ब्रह्मणः** — तत्पुरुषाय विद्महे हिरण्यगर्भाय धीमहि । तन्नो ब्रह्मा प्रचोदयात् ।

**हंसस्य** — हंसहंसाय विद्महे सोऽहं हंसाय धीमहि । हंसस्सोऽहं प्रचोदयात् ।

**मन्त्रस्य** — मन्त्रराजाय विद्महे महामन्त्राय धीमहि । तन्नो मन्त्रः प्रचोदयात् ।

**यन्त्रस्य** — यन्त्रराजाय विद्महे महायन्त्राय धीमहि । तन्नो यन्त्रः प्रचोदयात् ।

**हनुमतः** — आञ्जनेयाय विद्महे रामदूताय धीमहि । तन्नो हनुमान् प्रचोदयात् ।

**सर्पस्य** — नागराजाय विद्महे सहस्रशीर्षाय धीमहि । तन्नोऽनन्तः प्रचोदयात् ।

## अर्घ्यप्रदानमन्त्राः ।

जातः कंसवधार्थाय भूभारहरणाय च ।
दानवानां विनाशाय वसुदेवकुलोद्भव ॥ १ ॥
गृहाणार्घ्यं मया दत्तं देवक्या सहितो हरे ॥
श्रीकृष्णाय इदमर्घ्यम् ॥

पाण्डवानां हितार्थाय धर्मसंस्थापनाय च ।
कौरवाणां विनाशाय जातो देवकिनन्दन ॥ २ ॥
गृहाणार्घ्यं मया दत्तं देवक्या सहितो हरे ॥
इदमर्घ्यम् ॥

क्षीरोदार्णवसम्भूत अत्रिनेत्रसमुद्भव ।
गृहाणार्घ्यं मया दत्तं रोहिण्या सहितः शशिन् ॥ ३ ॥
चन्द्राय इदमर्घ्यम् ॥

कौसल्यागर्भसम्भूत लक्ष्मणानुज वत्सल ।
साधूनाञ्च हितार्थाय जातो राम स्वयं हरे ॥ ४ ॥

दशाननविनाशाय भूभारोत्तारणाय च ।
दानवानां विनाशाय दैत्यानां निधनाय च ॥ ५ ॥

विभीषणहितार्थाय जातो रामः स्वयं हरिः ।
चैत्रे मासि सिते पक्षे नवम्याञ्च पुनर्वसौ ॥ ६ ॥

मध्याह्ने कर्कटे लग्ने जातो रामः स्वयं हरिः ।
इदमर्घ्यम् ॥

षडक्षरम् — ओं नमो विष्णवे ॥

अष्टाक्षरम् — ओं नमो नारायणाय ॥

द्वादशाक्षरम् — ओं नमो भगवते वासुदेवाय ॥

त्रयो मन्त्राः व्यापकत्रयसंज्ञिताः

श्रीमति वैद्यनाथदीक्षितीये स्मृतिमुक्ताफले धृतोऽयं भार्गवीयः पाठः ॥

---

भृगुः ॥

'अत ऊर्ध्वं प्रवक्ष्यामि हविःपाकविधिक्रमम् ।
वराककोद्रवादीनि वर्जयेत्तु विचक्षणः ॥ १ ॥

कुलुत्थं जातिभेदञ्च प्रियङ्गुञ्चैव वर्जयेत् ।
धान्यानामपि सर्वेषां कृष्णधान्यं विवर्जयेत् ॥ २ ॥

अथवाऽन्यदलब्धश्चेत् धान्यं शुद्धं समाहरेत् ।
त्रिवर्षातीतधान्यानि न प्रशस्तानि दैविके ॥ ३ ॥

तण्डुलानपि सर्वांश्च मासादूर्ध्वं विवर्जयेत् ।
आढकीं जीरकञ्चैव मरीचं सर्षपं तथा ॥ ४ ॥

राजमाषं महामाषं श्यामाकं कृष्णमाषकम् ।
माषं मुद्गं महामुद्गं निष्पावं तिलतिल्वकौ ॥ ५ ॥

फलानि चूतकदलीपनसानां समाहरेत् ।
भेदैस्तु कारवल्ल्यादि सर्वं ग्राह्यमितीरितम् ॥ ६ ॥

क्षुद्रकन्दं महाकन्दमाहरेत्तु विचक्षणः ।
सहकारप्रभेदैश्च तथैव पनसद्वयम् ॥ ७ ॥

कदल्यादिषु भेदैस्तु गृह्णीयाच्च विचक्षणः ।
कूष्माण्डोर्वारुकञ्चैव सिंही व्याघ्री तथैव च ॥ ८ ॥

काकोलकादि सङ्ग्राह्यं कलञ्जादीनि वर्जयेत् ।
बिम्बालर्कफलादीनि वर्जयेदिति केचन ॥ ९ ॥

भेदैस्तु बृहती सर्वा सङ्ग्राह्येत्युच्यते बुधैः' इति ।

मण्डलाभिषेकविधिः ॥

चत्वारिंशद्दिनादूर्ध्वं पञ्चाहानि तु मण्डलम् ।
पुण्याहं विधिवत्कृत्वा व्रीहिभिस्तण्डुलोपरि ॥ १ ॥

नवं कलशमादाय पूर्वोक्तेन विधानतः ।
समभ्यर्च्य जपं कुर्याद्ब्राह्मणैः ब्रह्मवादिभिः ॥ २ ॥

वैष्णवं विष्णुसूक्तञ्च नरसूक्तमतः परम् ।
श्रीभूसूक्तं तथा पञ्चशान्तिञ्चैव पृथक् पृथक् ॥ ३ ॥

चतुरावर्त्य जप्त्वा तु ध्रुवस्नपनमाचरेत् ।
तथैव कौतुकादीनां परिवारस्य कारयेत् ॥ ४ ॥

दध्योदनं गुडान्नञ्च पायसञ्च विशेषतः ।
निवेद्य देवदेवस्य विनियोगमतः परम् ॥ ५ ॥

आचार्यदक्षिणां दद्यादृत्विजाञ्च तथैव च ।
प्रतिष्ठादिनमारभ्य मण्डलान्तं दिनं प्रति ॥ ६ ॥

एवमेव क्रमेणैव कारयेत्तु विशेषतः ।
मण्डलार्धन्तु कुर्याच्चेन्मध्यमन्तु प्रचक्षते ॥ ७ ॥

मण्डलान्ते विशेषेण कारयेद्द्विजभोजनम् ।
सभ्याग्निकुण्डं कृत्वैव पुण्याहमपि वाचयेत् ॥ ८ ॥

आघारं विधिवद्धुत्वा वैष्णवं मन्त्रमेव च ।
विष्णुसूक्तं ततो हुत्वा नरसूक्तसमन्वितम् ॥ ९ ॥

श्रीभूसूक्तञ्च हुत्वैव पञ्चशान्तिमतः परम् ।
पारमात्मिकमीङ्काराद्यष्टाशीत्याहुतीर्यजेत् ॥ १० ॥

अष्टाक्षरेण हुत्वैव द्वादशार्णेन वै ततः ।
पूर्णाहुतिं ततो हुत्वा अन्तहोमञ्च कारयेत् ॥ ११ ॥

पञ्चहस्तप्रविस्तारं धान्यराशिं प्रकल्प्य च ।
अष्टोत्तरशतं कुम्भं मध्ये श्वभ्रन्तु कारयेत् ॥ १२ ॥

परितोऽष्टपदं हित्वा चतुर्दिक्षु चतुःपदम् ।
द्वारं कृत्वा तु तच्छेषे द्रव्याणि द्वादश न्यसेत् ॥ १३ ॥

पञ्चगव्यं घृतञ्चैव क्षौद्रं दधि पयस्तथा ।
गन्धोदमक्षतोदञ्च फलोदककुशोदके ॥ १४ ॥

रत्नोदञ्चैव जप्योदं सर्वौषध्युदकं तथा ।
एवं क्रमेण संस्थाप्य समभ्यर्च्य यथाक्रमम् ॥ १५ ॥

द्वादशैः कलशैः पूर्वं ध्रुवं संस्नापयेत्क्रमात् ।
अष्टोपचारैरभ्यर्च्य द्रव्यंप्रति विशेषतः ॥ १६ ॥

पश्चादष्टोत्तरशतैः कलशैश्च यथाक्रमम् ।
ध्रुवं संस्नापयेद्व्रणबेरन्तु प्रोक्षयेत्क्रमात ॥ १७ ॥

आचार्यदक्षिणां दद्यादृत्विजाञ्च विशेषतः ।
महाहविः प्रभूतं वा देवेशाय निवेदयेत् ॥ १८ ॥

तद्रात्रौ यानमारोप्य देवेशञ्च विशेषतः ।
ग्रामं प्रदक्षिणं नीत्वा सर्ववाद्यसमन्वितम् ॥ १९ ॥

पक्षिराजाग्रतः कृत्वा रक्षादीपञ्च कारयेत् ।
जीवस्थाने च संस्थाप्य प्रणाममपि कारयेत् ॥ २० ॥

एवं यः कुरुते भक्त्या मण्डलं स्नपनं हरेः ।
सर्वान् कामानवाप्यैव स याति परमां गतिम् ॥ २१ ॥

इति श्रीवैखानसे .... उद्देशत्यागविशेष (?) मण्डलाभिषेकविधिर्नाम
द्विचत्वारिंशोऽध्यायः ॥

---

**द्वादशाराधनविधिः —**

अतः परं प्रवक्ष्यामि द्वादशाराधनक्रमम् ।
प्रतिष्ठान्ते चोत्सवान्ते अङ्कुरं नव कारयेत् ॥ १ ॥

अन्यकाले तु सम्प्राप्ते अङ्कुरार्पणपूर्वकम् ।
सूर्यचन्द्रोपरागे वा युगान्ते च तथैव च ॥ २ ॥

यजमानस्य जन्मर्क्षे देशदुर्भिक्षसम्भवे ।
शताभिषेककाले वा एतदर्चनमुत्तमम् ॥ ३ ॥

एतेषां दोषशान्त्यर्थं देवस्याराधने परम् ।
विष्णुपञ्चदिनं श्रेष्ठमथ देवर्क्षमेव वा ॥ ४ ॥

द्वादशाराधनेनैव देवं विधिवदर्चयेत् ।
प्रातःकालार्चनान्ते तु स्नपनं सम्यगाचरेत् ॥ ५ ॥

आस्थानमण्डपे वाऽपि देवं देवीसमन्वितम् ।
सर्वाभरणसंयुक्तं सर्ववाद्यैः सहैव च ॥ ६ ॥

चतुर्वेदनिनादैश्च विष्णुभक्तियुतैः जनैः ।
आचार्यः सुप्रसन्नात्मा परिचारगणैर्वृतः ॥ ७ ॥

ध्यायन्नारायणं देवं प्रार्थयेद्बलमन्त्रतः ।
पुण्याहं विधिवत्कृत्वा सर्वद्रव्याणि प्रोक्षयेत् ॥ ८ ॥

स्थानशुद्धिं ततः कृत्वा पात्रशुद्धिमतः परम् ।
योगशास्त्रोक्तमार्गेण प्राणायामञ्च कारयेत् ॥ ९ ॥

आत्मशुद्धिं तथा कृत्वा बेरशुद्धिं तथैव च ।
पूर्वं मन्त्रासनं दत्वा अलङ्कारासनं ततः ॥ १० ॥

भोज्यासनं क्रमेणैव यथाविधि समाचरेत् ।
मयैवात्र विशेषेण त्वासनत्रयमीरितम् ॥ ११ ॥

महाहविः प्रभूतं वा देवेशाय निवेद्य च ।
पानीयाचमनं दत्वा मुखवासं निवेद्य च ॥ १२ ॥

ओं नमो विष्णव इति तथा नारायणाय च ।
द्वादशाक्षरमित्येतद्व्यापकत्रयमीरितम् ॥ १३ ॥

व्यापकत्रयसंयुक्तं विष्णुगायत्रियाऽन्वितम् ।
ततश्च वैष्णवं जप्त्वा 'यो वा भूते' ति पञ्चकम् ॥ १४ ॥

नारायणाख्यगायत्रीं सूक्तमेकाक्षरादिकम् ।
गुह्याद्गुह्यतमैः श्रेष्ठैः सर्वबेदार्थसारकैः ॥ १५ ॥

एतैस्तु वैष्णवैर्मन्त्रैः ध्यायन् पुष्पाञ्जलिं परम् ।
देवस्य पादयोर्दत्वा 'क्षम' स्वेति नमेन्मुहुः ॥ १६ ॥

एवमेव प्रकारेण द्वादशावर्त्य कारयेत् ।
गोदानभूमिदानाभ्यां वस्त्राभरणकुण्डलैः ॥ १७ ॥

आचार्यं पूजयित्वा तु दक्षिणां सोदकं ददेत् ।
अर्चान्ते तुलसीतीर्थं पूर्वं वैखानसः पिबेत् ॥ १८ ॥

अन्यथा विनियुक्तश्चेत्तत्पूजा निष्फला भवेत् ।
सर्वेषां विष्णुभक्तानां पश्चात्तीर्थादि दापयेत् ॥ १९ ॥

यथावित्तानुसारेण ब्राह्मणानपि भोजयेत् ।
एवं यः कारयेद्भक्त्या द्वादशाराधनं हरेः ॥ २० ॥

सर्वान् कामानिहाप्यैव विष्णुलोके महीयते ।

इत्यार्षे .... पञ्चचत्वारिंशोऽध्यायः ॥



श्रीः

# शुद्धपाठसूची.

| पुटे. | पङ्क्तौ. | शुद्धम्. | पुटे. | पङ्क्तौ. | शुद्धम्. |
|---|---|---|---|---|---|
| ४. | ३ | पूर्वं | ७३. | १० | पश्चात् 'अग्निश्रामणकं· प्रोच्य यज्ञदैवतमिस्य- पि ' इति च पाठ्यम्। |
| ५. | १० | गरुडं | ७३. | १० | ओं तपः पुरुषं |
| ,, | १४ | सोमं | ७७. | १९ | प्रणवैश्चापि |
| १२. | ९ | वृक्षदेवेभ्यः | ८६. | १५ | अध्वर्युः |
| १८. | ३ | परिकल्प्य | ८८. | ९ | व्याहृत्यन्तं |
| २०. | ७ | विशेषतः | ८९ | २१ | गोपुरागारयोः |
| २१. | ६ | अन्तर्मुखं | ९१. | १९ | घृतैरुक्तैः |
| २७. | २४ | तन्मध्ये | ९२. | १२ | उपचारैर्वा |
| २९. | १५ | ततायतकरैः | ,, | १५ | अतक्रत्वो यजेत् |
| ३०. | ४ | भक्तिसंयुतः | ,, | १८ | आवसथ्ये |
| ,, | १२ | तैलमोक्षं | ९७. | १५ | अत्रिकाश्यपौ |
| ३१. | १० | श्वभ्रे | ९८. | १६ | समिध्यारोपयेत् |
| ३४. | १३ | द्वारपालांश्च | १०४. | ७ | श्रद्धाभक्ती |
| ५३. | १० | भ्रूभङ्गविकृतानना | १०५. | ८ | परितः |
| ,, | १२ | त्रिनेत्र्यर्धेन्दुमकुटा | ,, | १५ | जुहोति |
| ,, | १४ | प्रसारासन | १०७. | २० | ध्रुवबेरार्चना |
| ५६. | १८ | बन्धाख्या | ११०. | १८ | इति मन्त्रेण |
| ५७. | १ | पादाधिकं | १११. | ९ | शोधनादिः |
| ५९ | १६. | अथनाह्वयाः | ११३. | २४ | तत्र |
| ६५. | १ | षष्ठी | १२१. | ३ | अलङ्कारासने |
| ६६. | १६ | अत्रिरुवाच | ,, | २० | वेदैश्च |
| ६७. | ४ | आधारं | १२२. | ३ | दर्शयेत् |
| ६७. | ५ | सुहूयताम् | १२४. | ८ | कुर्यात् |
| ७०. | ८ | वारीश्चतस्रः | १२५. | ५ | उद्धृत्य |
| ७२. | ४ | १२१ श्लोके ग्रन्थो न नष्टः | १२८. | ९ | आचमनान्ते |
| ७२. | २१ | आहवनीयाग्नौ | | | |

| क्तौ. | शुद्धम्. | पुटे. | पङ्क्तौ. | शुद्धम्. |
|---|---|---|---|---|
| ४ | यज्ञपुरुषं | २२५. | ७ | देवं |
| ६ | शेषोपचाराणां | २२६. | ४ | शत्रुभयादयः |
| ४ | उपचारांश्च | २३०. | १७ | नवादे |
| ९ | मात्रा च | २३२. | ४ | हलादीनां |
| २ | वस्तूनां | | २१ | नखादिषु |
| ८ | समुद्वीक्ष्य | २३३. | ८ | सर्वत्र |
| :० | त्रिविक्रमस्त्रिधा | २३७. | २३ | रत्नानि |
| ४ | प्रकुर्वीत | २४३. | १५ | अर्धाङ्गुलं |
| २ | श्यामनिभं | २४७. | १ | होमं |
| ९ | सम्प्रसारित | २५१. | ५ | कौतुकं |
| १३ | खड्ग | ,, | ६ | स्थापयेच्चेत् |
| २१ | मातृकान्तरेषु | २५३. | ६ | आलये |
| १२ | त्रेताग्नीन् | २५४. | १४ | यात्रोत्सवेन |
| २ | प्रमाणे तु | २५६. | ३ | आदाय |
| १३ | प्लाक्षं | ,, | २० | यथाशक्ति |
| २१ | आरोपिते | २५९. | ३ | प्रायश्चित्तं |
| ९ | सर्वांश्च | २६२. | ३ | अब्जाग्नौ |
| २० | स्यात् | २६७ | १९ | ब्राह्मसंयुतम् |
| ८ | तत्सर्वं | २६८. | १९ | सिकताः |
| १२ | अध्ययनतत्पराः | २७९. | २० | यावद्बिम्बं |
| १५ | अनुगच्छेयुर्वादकाः | २८२. | १० | कुम्भे |
| २२ | पुष्पयाग | ,, | १५ | पीठकुड्य |
| १४ | स्वस्तिसूक्तं | ,, | १७ | वापीकूप |
| २३ | द्वात्रिंशत् | ,, | २२ | प्रोक्तः |
| १७ | स्रुवश्च | २८५. | १८ | अग्नौ |
| १६ | देवदेवं | २८६. | ६ | द्वादशाहे |
| १ | आश्रयालयम् | २८७. | २३ | निवेदयेत् |
| २ | शुद्धस्नान | २८८. | ७ | अस्पृश्यैः |
| १० | उपदंशान् | २९०. | २० | विड्भिः |
| १३ | आसनादिभिः | २९५. | ८ | सहितं |
| ११ | पश्चात् – उत्सवस्नपनै- | २९६. | १३ | सद्यस्तत् |
| | र्युक्तं विधियुक्तं समाचरेत् | ३०१. | १६ | पूर्ववत् |

३

| पुटे. | पङ्क्तौ. | शुद्धम्. |
|---|---|---|
| ३०६. | ३ | मनुष्यैः |
| ३०८. | १० | ग्रामबलिं |
| ३१०. | ३ | परिकर |
| ३१५. | १९ | यदीच्छेत् |
| ३१७. | २१ | अलङ्कुर्यात् |
| ३२०. | ३ | सप्तभिः |
| ३२२. | १४ | पेशलं |
| ३२४. | २१ | समावाह्य |
| ३२५. | १ | परिवारान् |
| ३२६. | ३ | तन्त्रसङ्कर |
| ,, | ६ | द्वयोर्वैखानसं |
| ३२७. | २२ | कर्तुमाराधनं |
| ३२९. | १० | पद्मनिधी |
| ३३१. | २१ | माध्याह्नी |
| ३३२. | १८ | अमृतश्चैव |
| ३३३. | ८ | कल्पयेदिति |
| ३३७. | १० | वटाक्षवासिने |
| ,, | १८ | प्रतिष्ठितम् |
| ३५४. | २३ | अगर्भाः |
| ३५६. | १ | अवताराणां |
| ३५८. | ३ | आदिमूर्तेः |
| ,, | १४ | कृष्णार्थं |
| ३५९. | २१ | सर्वैश्वर्यप्रदं |
| ,, | २३ | सर्वतोभद्रकं |
| ३६२. | १६ | प्राग्भित्तौ |
| ३६३. | ९१ | ब्रह्मणश्च |
| ३६५. | ९ | रामादीनां |
| ३६६. | १४ | नावाहनविसर्जने |
| ३६८. | २४ | अष्टार्णं |
| ३७०. | ९८ | स्तम्भवेष्टनैः |
| ३७६. | ५ | पारमात्मिकं |
| ३८१. | ४ | सुगन्धतैल |
| ,, | ५ | ज्येष्ठर्क्षसंयुते |
| ३८३. | २१ | ध्यायेत्ततत् |
| ३८७. | १९ | घृतपात्रन्तु |
| ३८९. | १३ | समर्चयेत् |
| ३९२. | ११ | आवेष्टय |
| ३९७. | ८ | उत्थाप्य |
| ३९९. | ७ | उपाश्रुते |
| ,, | २३ | विद्याधराः |
| ४००. | ४ | पूर्वपक्षे |
| ४०४. | ३ | आग्नेय्यामग्निना |
| ४०७. | ८ | योजयेत् |
| ,, | १४ | प्राणायामं |
| ,, | १५ | संयुतम् |
| ४०९. | ४ | पौण्डरीकं |
| ४१०. | १० | सर्वेषां |
| ,, | २१ | ततः |
| ४१४. | ८ | मच्छरीरतया |
| ४१५. | १९ | महिमानुवर्णनं |
| ४१७. | ३ | भागविस्तारसंयुतम् |
| ४१९. | १० | दौवारिके |
| ४२०. | ५ | विसर्जयेत् |
| ४२२ | १५ | धारयेत् |
| ४२३. | १४ | राजानश्चेत् |
| ४२४. | २२, २३ | गृहाश्रमवतां |
| ४२८. | ७ | व्यञ्जनैर्युक्तं |
| ४३०. | १६ | वेदपारगैः |
| ,, | १७ | सप्तम्या |
| ४३७. | ११ | आधीयते |

**सूचना** – यथोपलब्धि शोधिता सूचिका - अनवधानस्खलितान्यन्यानि दयालुभिः पाठकैः समीकर्तव्यानि ।

SRI VENKATESVARA ORIENTAL INSTITUTE, TIRUPATI

## Price list of Publications

---

*neral Editor* :—PROF. P. V. RAMANUJASWAMI, M A., *Director*.

---

| *i Venkatesvara Oriental Series* :— | Rs. | A |
|---|---|---|
| . **Sri Venkatesvara Kavya Kalapa,** (Sanskrit) Ed. by Sri D. T. Tatacharya, M.O.L. ... | 4 | 0 |
| **History of Tirupati,** Volume II (English) by Dr. S. Krishnaswami Aiyangar, M.A., Ph.D. | *(In* | *Print)* |
| . **A Glossary of Indian Philosophical Terms,** (Sanskrit-English) by Sri C. V. Sankara Rao, M.A. ... | 1 | 8 |
| . **Psychology,** (Telugu) by Dr. K. C. Varadachari, M.A., Ph.D. | *(Out of Stock)* | |
| . **Isavasyopanishad Bhashya,** of Venkatanatha, (Sanskrit-English) Ed. & Translated by Dr. K. C. Varadachari, M.A., Ph.D. & Sri D. T. Tatacharya, M.O.L. | *(Out of Stock)* | |
| . **Samurtarchanadhikarana (Atri Samhita),** (Sanskrit) Ed. by Sri Raghunatha Chakravarthi Bhattacharya & Sri M. Ramakrishna Kavi, M.A. | 6 | 0 |
| . **Suvarnasaptati Sastra.** (Sanskrit) Reconstructed from the Chinese & Ed. by Sri N. Aiyaswami Sastri ... | 3 | 0 |
| . **Kenopanishad Bhashya,** by Rangaramanuja (Sanskrit-English) Ed. & Translated by Dr. K. C. Varadachari, M.A., Ph.D. & Sri D. T. Tatacharya, M.O.L. ... ... ... ... | 1 | 0 |
| **Tirukkural-Kamattuppal,** with the commentaries of Kalingar and Paripperumal (Tamil) Ed. by Sri T. P. Palaniappa Pillai, B.O.L. ... | *(Out of Stock)* | |

| | Rs. | A |
|---|---|---|
| 10. **Sri Venkatesvara Vachanamulu,** (Telugu) Edited by Sri V. Prabhakara Sastri ... ... | 1 | 8 |
| 11. **Sringarasankirtanalu,** Vol. IV of Tallapaka Annamacharyulu (Telugu) Ed. by Sri V. Prabhakara Sastri ... ... ... ... | 2 | 0 |
| 12. **Kasyapa-Jnanakanda (Kasyapa Samhita),** (Sanskrit) Ed. by Sri R. Parthasarthi Bhattachar ... | 3 | 0 |
| 13. **Andhra-Kuvalayanandamu,** (Telugu) by Ubhayabhasha Pravina Sri K. Subrahmanya Sastri 2nd Ed. ... | 3 | 12 |
| 14. **Tirukkural-Porutpal,** with the commentaries of Kalingar and Paripperumal (Tamil) Ed. by Sri T. P. Palaniappa Pillai, B.O.L. ... | *(Out of Stock)* | |
| 15. **Kathopanishad Bhashya,** of Rangaramanuja (Sanskrit-English) Ed and Translated by Dr. K. C. Varadachari, M.A., Ph. D. and Sri D. T. Tatacharya, M.O.L. ... ... ... | 3 | 12 |
| 16. **Sri Venkatesvara Laghu Kritulu,** (Telugu) Edited by Sri V. Prabhakara Sastri ... ... | 1 | 8 |
| 17. **Annamacharya Charitramu,** (Telugu) Edited by Sri V. Prabhakara Sastri ... ... | 2 | 8 |
| 18. **Tiruvengada Sthalapuranam,** (Tamil) with prose supplement Ed. by Sri T. P. Palaniappa Pillai, B.O.L. ... ... ... ... | 1 | 8 |
| 19. **Alankarasangraha,** of Amritanandayogin, (Sanskrit) Edited by Sri P. Balakrishnamurti, M.A. ... | 3 | 4 |
| 20. **Subhadra Kalyanamu,** (Telugu) by Tallapaka Timmakka, Ed. by Sri V. Prabhakara Sastri .. | 0 | 12 |
| 20a. **Sankaravilasam,** (Tamil) Ed. by Sri T. P. Palaniappa Pillai, B.O.L. ... ... ... | 3 | 4 |
| 21. **Janasrayi,** (Sanskrit) Ed. by Sri M. Ramakrishna Kavi, M.A. ... ... ... | 1 | 0 |
| 22. **Adhyatmasankirtanalu,** Vol. V. of Tallapaka Annamacharyulu (Telugu) Ed. by Sri V. Prabhakara Sastri ... ... ... | 3 | 4 |

| | Rs. | A. |
|---|---|---|
| **Tiruvengada Ula,** (Tamil) Ed. by Sri T. P. Palaniappa Pillai, B.O.L. ... ... ... | 1 | 8 |
| **Adhyatmasankirtanalu,** Vol. VI of Tallapaka Annamacharyulu (Telugu) Ed. by Sri A. V. Srinivasachari ... ... ... | 2 | 0 |
| **Prasnopanishad Bhashya,** of Rangaramanuja (Sanskrit-English) Ed. and Translated by Dr. K. C. Varadachari, M.A., Ph.D. and Sri D. T. Tatacharya, M.O.L. ... ... ... | 2 | 12 |
| **Sri Venkatesvara Stuti Ratnamala,** (Telugu) Ed. by Sri V. Prabhakara Sastri ... ... | 1 | 2 |
| **Dharmasangraha,** (Sanskrit) Ed. by Prof. P. V. Ramanujaswami, M.A. ... ... ... | 2 | 0 |
| **Nipatavyayopasargavritti,** (Sanskrit) Ed. by Vidya Pravina Sri A. Someswarasarma, P.O.L. ... | 2 | 0 |
| **Adhyatmasankirtanalu,** Vol. VII of Tallapaka Annamacharyulu (Telugu) Ed. by Sri R. Anantakrishna Sarma & Sri A. V. Srinivasachari ... | 3 | 0 |
| **Bharata Kosa,** (Sanskrit) Ed. by Sri M. Ramakrishna Kavi, M.A. ... ... ... | 22 | 0 |
| **Adhyatmasankirtanalu,** Vol VIII of Tallapaka Annamacharyulu (Tel.) Ed. by Sri R. Anantakrishna Sarma & A. V. Srinivasachari ... | 3 | 0 |
| **Raghuvamsa,** (Cantos 1 & 2), Edited with notes in Tamil by Sri D. T. Tatacharya, M.O.L. | 2 | 8 |
| **Adhyatmasankirtanalu,** Vol. IX of Tallapaka Annamacharyulu (Tel.) Ed. by Sri R Anantakrishna Sarma ... ... ... ... | 3 | 0 |
| **Sri Venkatesvara Stuti Ratnamala,** (Tel.) Vol. II Ed. by Sri K. Ramakrishniaya, M.A. ... ... | 2 | 0 |
| **Adhyatmasankirtanalu,** Vol. X of Tallapaka Annamacharyulu (Tel.) Ed. by Sri R. Anantakrishna Sarma ... ... ... ... | 3 | 0 |

Rs.

36. **Chandogyopanishad-Bhashya,** of Rangaramanuja Part I-Text with Sanskrit Introduction & Notes Ed. by Uttamur Sri T. Viraraghavacharya ... 8

37. **Sahityasara,** (Sanskrit) by Somesvara Kavi, Ed. by Sri M. Ramakrishna Kavi, M.A. with Introduction by Vidya Pravina Sri A. Someswarasarma, P.O.L. ... ... ... ... 2

38. **Sarasangrahaganitamu,** Part I of Pavuluri Mallana, (Telugu) Ed. by Sri V. Prabhakara Sastri. 12

39. **Songs of Thallapaka Poets** with Musical notation by Sri R. Anantakrishna Sarma ... 3

*Sri Venkatesvara Oriental Institute Studies* :—

1. **Theory of Knowledge in the Philosophy of Sri Ramanuja** (English) by Dr. K. C. Varadachari, M.A. Ph.D. ... ... ... ... 3
2. **Rupakaparisuddhi** (Sanskrit) by Sri D. T. Tatacharya, M.O.L. ... ... ... 1
3. **Idea of God** (English) by Dr. K. C. Varadachari, M.A., Ph. D. .. ... ... ... 3
4. **Sahityavimarsa** (Sanskrit) by Vidya Pravina Sri A. Someswarasarma, P.O.L. ... ... 2
5. **The Dharmasutras & the Dharmasastras** (English) by Dewan Bahadur K. S. Ramaswami Sastri, B.A., B.L. ... ... ... ... 0
6. **Virasaiva Literature,** (Telugu) by Sri S. Ramakrishna Sastri, M.A., B.O.L. ... ... ... 5




*For copies of the above apply to* :—

THE DIRECTOR,

S. V. Oriental Institute, TIRUPATI,

(*Chittoor Dist.*) *South Ind*